W I Series—6

# RĀJATARAṄGINĪ
## OF
## KALHANA

*Edited,*

Critically, and annotated with text-comparative data from original manuscripts and other available materials

*By*

VISHVA BANDHU

*In collaboration with*

BHIMA DEV, K. S. RAMASWAMI SASTRI
and
S. BHASKARAN NAIR

PART II
( Taranga VIII )




HOSHIARPUR
Vishveshvaranand Vedic Research Institute



The Late Rai Bahadur Lala
Ishwar Das Sawhney
( 1882-1956 )

# RĀJATARAṄGIṆI

Being

**A Chronicle of the Kings of Kashmir**

By

Kalhaṇa, Jonarāja, Śrīvara and Suka

( *c* 2448 B.C.—1586 A.D. )

**Rai Bahadur Lala**
**Ishwar Das Sawhney**
**Memorial Edition**



**Vishveshvaranand Vedic Research Institute**

HOSHIARPUR

अथ

कल्हणकृतायां

# राजतरङ्गिण्याम्

अष्टमतरङ्गात्मको

## द्वितीयो भागः

# CONTENTS

अथ

# श्रीकल्हणकृतायां राजतरङ्गिण्याम्

## अष्टमस्तरङ्गः



प्रौढाः कञ्चुकिनो जरद्गवृषः कुब्जस्तुषारद्युति-
र्नित्याप्तोऽपि बहिष्कृतः परिकरः सोऽयं समस्तोऽप्यहो ।
अर्धाद् यद्वसतीकृताद् भगवता चारित्रचर्याविदा
सा भिद्याद् दुरितं चराचरगुरोरन्तःपुरं पार्वती ॥ १ ॥

छन्नकोपप्रसादोऽभूत् कंचित् कालं नवो नृपः ।
प्राङ्मन्थादिव पाथोधिरव्यञ्जितविषामृतः ॥ २ ॥

सोदरो डामरौघश्च तस्याऽभूतां भृशोन्मदौ ।
मेघस्येव पुरो वातावग्रहौ स्फूर्तिहारिणौ ॥ ३ ॥

यत्किंचनविधाय्यासीद् भ्राता यद्यौवनोन्मदः ।
राज्ञो दुष्प्रक्रिया दौस्स्थ्यकरी वात्सल्यशालिनः ॥ ४ ॥

सोऽनिशं हि गजारूढो विकोशासिः परिभ्रमन् ।
आत्तसारां मही पीतरसां रविरिवाऽकरोत् ॥ ५ ॥

एकीभूतानमून् सर्वान् डामरान् निर्दहाऽग्निना ।
इत्युक्तं तेन नोर्वीभृत् सत्त्वैकाग्रो वचोऽग्रहीत् ॥ ६ ॥

St C begin with ओं नमो विघ्नहर्त्रे, $P_1$ ओ नमो भगवते वासुदेवाय; $P_2$ ओ नम शिवाभ्याम् .

1. [a]) C जरद्गव°; S′ जरगव° (for जरद्गर°) —[c]) $I_3$ अद्य° (for अर्धाद्य°). —[d]) D C $I_3$ $P_{1,3}$ S′ $SA_2$ भिन्द्या° (for भिद्या°).

2. [b]) $I_3$ $P_{1-3}$ SA किंचित् (for कांचित्).

5. [b]) $SA_1$ om. कोशासि: with a space. $I_3$ विशोकाशि° (for विकोशासि°).

दस्यवो मन्त्रिसामन्ता द्वैराज्येच्छुः सहोदरः ।
भूर्निष्कोशेत्यभूत् किं न भूपतेस्तस्य संकटम् ॥ ७ ॥

अधिराज्याभिषेकेण सत्कृत्य भ्रातरं ततः ।
पातुं लोहरसंबद्धं प्राहिणोन्मण्डलान्तरम् ॥ ८ ॥

द्विरदायुधपत्त्यश्वकोशामात्यादि स व्रजन् ।
निनाय सर्वं वात्सल्यादनिषिद्धोऽग्रजन्मना ॥ ९ ॥

आशङ्क्य कोट्टभृत्येभ्यः प्रवेशे प्रत्यवस्थितिम् ।
उत्कर्षजं प्रतापाख्यं सह निन्येऽब्रवीच्च तान् ॥ १० ॥

कुर्याममुं नृपमहं प्रातिहार्यं समाचरन् ।
नम्राः स्वभृत्यवत्तस्थुर्भूभुजो भूम्यनन्तराः ॥ ११ ॥

दिनानि सप्त संरुद्धे मार्गे तदनुयायिनाम् ।
गायनः कनको लब्धान्तरो देशान्तरं ययौ ॥ १२ ॥

वाराणस्यां विजहता निर्वेदात् तेन जीवितम् ।
हर्षभूभर्तृभृत्येषु व्यक्तं निन्ये कृतज्ञता ॥ १३ ॥

ऊर्ध्वाधिरोहं दाक्षिण्याद् दस्यूनामुच्चल पुनः ।
सेवास्मृत्या सुधीः सेहे चन्दनो भोगिनामिव ॥ १४ ॥

तथा जनकचन्द्रेण दर्पाद् व्यवहृतं तदा ।
राजाऽन्ये डामराश्चाऽऽसन् यथा नष्टप्रभा इव ॥ १५ ॥

अभयस्योरशाभर्तुस्तनयायामजीजनत् ।
राज्ञ्यां विभवमत्या यं भोजो हर्षनृपात्मजः ॥ १६ ॥

---

8 c) St $I_3$ $P_{2,3}$ °बन्ध (for °बद्ध)

10. c) C S′ $I_3$ तत्क° (for उत्क°).

12. a) S′ °मरुद्धे [sic], $P_3$ सरुद्ध° (for सरुद्धे) —b) $P_3$ om. मार्गे.

13. d) C S′ °ज्ञता (for °ज्ञता)

15. d) S′ C पथा (for यथा).

16. a) C S′ °स्योरसा°, $P_3$ °स्योरचाहर्तु° (for °स्योरशाभर्तु°)

जातं मृतद्वित्रपुत्रानन्तरं गुरुभिः शिशुम् ।
आयुष्कामैस्तमाबद्धाभव्यभिक्षाचराभिधम् ॥ १७ ॥

द्व्यब्दमप्यरिसंतानतन्तुत्वेनाऽप्रियोचितम् ।
ररक्ष तद्गिरा राजा राज्याश्चाऽङ्के समार्पयत् ॥ १८ ॥

तमादाय स्वयं वाऽसौ यावद् राज्येऽकरोन्मनः ।
तावद् बभारेङ्गितज्ञो नीतिकौटिल्यमुच्चल ॥ १९ ॥

तुल्योत्साहासहिष्णुत्वादस्मै कुप्यन्तु डामराः ।
एष एवाऽतिसत्काराद् यद्वाऽस्तु विशदाशयः ॥ २० ॥

इति संचिन्त्य स द्वारदित्सां तस्योदघोषयत् ।
यथा विकारं प्रययुर्भीमादेवादयोऽखिलाः ॥ २१ ॥

तेषां तस्य च मात्सर्यं यदा पर्याप्तिमाययौ ।
तदाऽन्योन्याश्रिता भृत्याः पणं चक्रुर्युयुत्सवः ॥ २२ ॥

दिदृक्षुः क्ष्मापतिस्तेषां सेतुपृष्ठे रणं मिथः ।
वार्यमाणोऽपि सचिवैरारुरोह चतुष्किकाम् ॥ २३ ॥

द्वन्द्वयुद्धे प्रवृत्ते तु डामरैरुभयाश्रितैः ।
अथ प्रारभ्यताऽकस्मात् संरब्धैर्दारुणो रणः ॥ २४ ॥

सेतुद्वयाध्वना युद्धे लग्ने राज्ञि सरित्तटात् ।
योधा जनकचन्द्रस्य शरवर्षमवाकिरन् ॥ २५ ॥

---

17 a) SA मृत (for मृत°). St S′ C $I_3$ $P_{2,3}$ °द्विनि° (for °द्वित्र°)

18. d) $I_3$ $P_{2,3}$ SA समर्पयत् (for समार्पयत्). After this v तिलकम्.

21. d) $P_1$ °भींम° (for °भींमा°)

24. c) C $P_3$ S′ प्रारभता° (for प्रारभ्यता°) —d) C S′ °दारुणे (for °दारुणो).

25. a) C S′ सेत्वत्य° (for सेतुद्व°)

यान्तः शराः ससीत्कारास्ते स्पृष्टनृपविग्रहाः ।
मग्नाः स्तम्भेष्वदृश्यन्त कोपेनेव प्रकम्पिनः ॥ २६ ॥

आकृष्य दोर्भ्यां भूपालं बलादिव ततोऽनुगाः ।
प्रविष्टा मण्डपद्वारं चक्रिरे निहितार्गलम् ॥ २७ ॥

शस्त्रं जनकचन्द्राद्या भीमादेवादयोऽपि ते ।
चतुष्किकायां चकृषुस्ततोऽन्योन्यं जिघांसवः ॥ २८ ॥

तुमुले तत्र शस्त्र्याऽङ्गं भीमादेवानुगोऽभिनत् ।
तीक्ष्णो जनकचन्द्रस्य कालपाशात्मजोऽर्जुन· ॥ २९ ॥

स वीक्ष्य स्वं क्षतं द्रोहं प्रयुक्तं भूभुजा विदन् ।
पादप्रहारान् विदधे क्रोधाद् द्वारि नृपौकसः ॥ ३० ॥

अभग्ने तत्र संत्रासात् स्नानद्रोण्यन्तरं गतम् ।
अधावत् कृष्टशस्त्रीको भीमादेवो जिघांसया ॥ ३१ ॥

स्तम्भच्छन्नस्तद्विलोक्य तद्गेहगणनापतिः ।
मध्यं जनकचन्द्रस्य कृपाणेन द्विधा व्यधात् ॥ ३२ ॥

तस्मिन् हते तदनुजौ गग्गसड्डौ प्रधावितौ ।
स एव करवालेनाऽलक्षितोऽकृत विक्षतौ ॥ ३३ ॥

अवभज्य तरुं वज्रः सुचिरं नाऽवतिष्ठते ।
उदग्रकर्मा च पुमान् निहत्याऽत्युन्नतं रिपुम् ॥ ३४ ॥

स हि द्विभाद्रे तत्राऽब्दे हर्षान्ताहादनन्तरम् ।
अन्यूनानतिरिक्तैर्यैत्त्रिभिः पक्षैरहन्यत ॥ ३५ ॥

---

26 a) St $I_3$ $P_{1,2}$ वान्त (for यान्त ) —b) $SA_1$ om स्पृ in स्पृष्ट with a space. D [अ] स्पृष्ट°, $P_{1,2}$ $I_3$ स्पृष्टा°, $P_3$ पृष्ट° (for स्पृष्ट°)

27. c) C S′ °विष्ट, $P_{1,3}$ °विष्ट° (for °विष्टा) —d) S′ C $P_3$ SA निहता° (for निहिता°)

29. a) C S′ शस्त्रा° (for शस्त्र्या°). —b) $P_1$ भीम° (for भीमा°)

30. c) C S′ °प्रहाराद् (for °प्रहारान् )

34. a) $P_2$ गुरु (for तरु).

35. b) C S′ हर्षात्ता° (for हर्षान्ता°). —c) C S′ °स्त्रिभि (for °त्त्रिभि·).

यद्वोपकर्तुरप्येष द्रोहं यत्स्वामिनो व्यधात् ।
औत्कट्यात् पाप्मनस्तस्य क्षिप्रमेव क्षयं ययौ ॥ ३६ ॥

सान्तस्तोषे कोपशोकावाविष्कुर्वति कृत्रिमौ ।
भीमादेव पलायिष्ट गग्गस्तु व्यश्वसीन्नृपे ॥ ३७ ॥

प्रहिते लहरं गग्गे स्वमुल्लाघयितुं क्षतम् ।
त्रस्तास्तेन व्यसृज्यन्त स्वोर्वीरन्येऽपि डामराः ॥ ३८ ॥

उपायापकृतैः प्राप्य राज्यं दस्युभिरुज्झितम् ।
एवं शनैरवष्टम्भं भेजे भूपतिरुच्चल ॥ ३९ ॥

तेनाऽथ लब्धस्थैर्येण दिनैरेव जिगीषुणा ।
त्याजिताः क्रमराज्यान्तर्हयसैन्यादि डामराः ॥ ४० ॥

ततो मडवराज्यं स प्रस्थितो विप्रियप्रियान् ।
डामरान् कालियमुखान् बद्ध्वा शूले व्यपादयत् ॥ ४१ ॥

इल्लाराजोऽपि बलवांस्तेन क्रान्तक्षितिः क्रमात् ।
बलैर्नगर एवोग्रैरवस्कन्देन घातितः ॥ ४२ ॥

प्राग्जन्मप्रेमसंस्कारादन्तरङ्गतयाऽथवा ।
तस्य पुत्र इव प्रीतिर्गग्ग एव व्यवर्धत ॥ ४३ ॥

न सेहे नाममात्रं यः कण्टकानां प्रियप्रजः ।
नृपो गग्गाय चुक्रोध सापराधाय न क्वचित् ॥ ४४ ॥

राज्यारम्भेऽनुयुक्तेन भीमादेवेन धीमता ।
उक्ते शुभावहे शिक्षे द्वे स मन्त्रवदस्मरत् ॥ ४५ ॥

---

36. c) C S′ औत्कठ्या° (for औत्कट्या°).

38. a) All Mss. read लोहर (for लहरं suggested with St. Tr. cf. *vv.* v. 51; vii. 1361, 1374, viii. 437).

39. $P_3$ om *vv.* 39—40. —a) All Mss. read प्राप्त° (for प्राप्य suggested with St).

41. d) $P_3$ शूलै (for शूले) —d) C S′ °दयन् (for °दयत् ).

42. a) C S′ इला° (इल्ला°).

44. b) C S′ °प्रजाः (for °प्रज°). —d) SA °राध (for °राधाय). C S′ $P_3$ कुत्र°, $I_3$ $P_1$ कृत्र° [sic] (for क्व°).

एकया लोकवार्तार्थं प्राह्णात् प्रभृति निर्गतः।
बहिरुद्दिश्य बाह्यालीरचारीदादिनक्षयम् ॥ ४६ ॥

अन्ययोत्थानशीलेन श्रुत्वा नामाऽपि वैरिणः।
अर्धरात्रेऽपि यात्राभिस्तेनाऽच्छिद्यत विप्लवः ॥ ४७ ॥

तस्यैवाऽलुतधैर्यस्य राज्ञां मध्ये मनस्विनः।
कार्पण्योपहतं वृत्तं नाऽप्यभूदमलीमसम् ॥ ४८ ॥

अद्योच्चलसदाचारजाह्नवीजलमज्जनात् ।
कुनृपोदीरणोद्भूतो गिरः पाप्माऽपनेष्यते ॥ ४९ ॥

तेनाऽनुपचिताङ्गेन प्रायशो विनिवारिताः।
अनूरुणेव सद्दृष्टिध्वंसिनो ध्वान्तसंचयाः ॥ ५० ॥

प्रायोपविष्टप्रमये देहत्यागप्रतिज्ञया।
निबद्धया प्रत्यवेक्षां धर्माध्यक्षानकारयत् ॥ ५१ ॥

निशाम्य कृपणस्याऽऽर्तं क्रन्दितं तदनिग्रकृत्।
बभूव तस्य स्वात्माऽपि नाऽनिग्राह्यो महात्मनः ॥ ५२ ॥

कार्यिणो यस्य वा दोषादार्ताक्रन्दितमुद्ययौ।
तस्य स्वबान्धवाक्रन्दैस्तस्मिन् क्रुद्धे शशाम तत् ॥ ५३ ॥

अबलानुग्रहव्यग्रे तस्मिन् राजनि सर्वतः।
वास्तव्या बलिनस्तस्थुरबलास्त्वधिकारिणः ॥ ५४ ॥

---

47 [a]) $SA_1$ *sec. manu.* S′ C $P_{2,3}$ $I_3$ अन्यायो° (for अन्ययो°)

48. [ab]) $SA_1$ om upto मध्ये with a space —[c]) $SA_1$ $P_2$ कार्मणा°; S′ C कार्मण्यो° (for कार्पण्यो°). —[d]) $P_2$ $SA_1$ नाप्राभूद°, S′ C न प्रान्भूद° (for नाऽप्यभूद°)

51 [c]) C निर्बद्धया, S′ निवर्द्धया, $I_3$ $P_2$ निबधया (for निबद्धया)

52 [a]) S′ C $P_2$ $I_3$ °स्यान्त (for °स्याऽऽर्तं)

53 [ab]) S′ दोपोद्दता, $I_3$ $P_{1,2}$ C दोषाद्दत्ता, SA दोषादर्ता° (for दोषादार्ता°).

सोऽश्वेनैकश्चरन् राजेत्यज्ञात्वा कथितं जनैः ।
यं यं स्वदोषमश्रौषीत् तं तं त्वरितमत्यजत् ॥ ५५ ॥

येन केनाऽपि संप्राप्तः प्राप्त्युपायेन पार्थिवः ।
अमोघदर्शनः सोऽभूत् कल्पवृक्ष इवाऽर्थिनाम् ॥ ५६ ॥

सुधावर्षी प्रियालापप्रीतिदायैर्जनप्रियः ।
नाऽशकत् सेवकांस्त्यक्तुं विस्रम्भभवनेष्वपि ॥ ५७ ॥

श्लाघ्यश्रमैः प्रतिकलं तस्य सेवाविधायिभिः ।
प्राप्तं त्रिचतुरान् वारान् क्षणदास्वपि दर्शनम् ॥ ५८ ॥

सेव्यमानः सदाक्षिण्यः क्षणेनैव फलप्रदः ।
कस्यैन्द्रजालिकैरुप्तः शाखीव न बभूव सः ॥ ५९ ॥

वास्तव्यानां निशम्याऽर्ति तेन दैन्यनिवारणम् ।
चक्रे पित्रेव पुत्राणां संत्यक्तेतरकर्मणा ॥ ६० ॥

स्वसंचितानि सोऽन्नानि विक्रीणानोऽल्पवेतनैः ।
दुर्भिक्षमुद्गतावेव जघान जनवत्सलः ॥ ६१ ॥

निवार्य चौर्याचरणात् कृपार्द्रस्तस्करानपि ।
कोशाध्यक्षान् स विदधच्चकाराऽगर्ह्यजीविकान् ॥ ६२ ॥

कः संविभाग्यश्छेत्तव्या विपदः कस्य मण्डले ।
इत्यन्विष्यन् सदैकैकं चारैश्चिन्तापरोऽभवत् ॥ ६३ ॥

तस्यैकोऽप्यर्थनैस्पृह्यं नाम कोऽपि महान् गुणः ।
अनुषक्तो गुणैस्तैस्तै राज्ञः पल्लवितोऽभवत् ॥ ६४ ॥

---

57 [a]) S′ C स्वधा° (for सुधा°). —[b]) S′ C °यज° (for °यैर्ज°). —[d]) St विश्रम्भ° (for विस्रम्भ°)

58. [a]) S′ C श्लाव्य (for श्लाघ्य°).

61. [a]) S′ C स्वर्णानि (for सोऽन्नानि)

63. [a]) S′ C $P_{2,3}$ °भाग्य च्छे° (for °भाग्यच्छे°) —[c]) S′ C स्तो° (for इत्य°).

64 [a]) S′ C तस्य का° (for तस्यैको°).

स स्थित्यै दण्डयन् दण्ड्यानघाश्लेषभयाद् धनम् ।
तेषां नाऽऽदत्त सत्कर्म शुद्धये तांस्त्वकारयत् ॥ ६५ ॥

प्रस्तुतस्याऽर्थिने दातुं वस्तु तस्यैकसंख्यया ।
सहस्रसंख्यया दानश्रद्धाऽगात् पूर्णतां यदि ॥ ६६ ॥

श्रूयतेऽर्थी यथा मह्य देहि देहीति गां वदन् ।
तथाऽस्मै देहि देहीति वदन् दाता स शुश्रुवे ॥ ६७ ॥

अनुदात्तं क्षिप्तकालं क्षीणसंख्यमसत्कृतम् ।
नेतृदूतादिनीतार्धे न तद्दत्तमदृश्यत ॥ ६८ ॥

उत्सवे दैन्यविज्ञप्तौ रञ्जने कार्यसाधने ।
आलेख्यलीनशाखीव न सोऽलभ्यफलोऽभवत् ॥ ६९ ॥

उत्सवे शिवरात्र्यादौ जनतां सोऽसिचद् धनैः ।
ग्रहयोगे पयःपूरैर्महेन्द्र इव मेदिनीम् ॥ ७० ॥

ताम्बूलदानव्यसनं पराध्योत्सवता तथा ।
नाऽभूद्धर्षनृपस्याऽपि तादृक् तस्याऽऽस्त यादृशी ॥ ७१ ॥

लोष्टमात्रावशेषेऽपि लब्धे नृपपदे व्यधात् ।
स दानविभ्रमांस्तान् ये धनदेनाऽपि दुष्कराः ॥ ७२ ॥

निर्माणलोठनैर्धाम्नामजस्रं वाजिनां क्रयैः ।
काश्मीरकोऽपि चक्रे स न मृत्तस्करसाद् धनम् ॥ ७३ ॥

अध्वन्यध्वनि योगेन प्राणविन्यासनैस्तथा ।
बभूव सर्वकृत्यज्ञः सोऽन्तरात्मेव देहिनाम् ॥ ७४ ॥

---

65. c) S′ C °त्कर्मा° (for °त्कर्म).

68. a) S C $I_3$ $P_{1,2}$ °दातु (for °दात्त). —b) S′ C °सख्य न (for °सख्यम°). —c) S′ C $I_3$ $P_{1-3}$ नेत्य° (for नेतृ°).

69 d) S′ C $I_3$ नासौ° (for न सो°)

71. d) $P_2$ $SA_3$ °स्यास्तु (for °स्याऽऽस्त).

72. c) SA $I_3$ $P_2$ °भ्रमास्ता° (for °भ्रमास्ता°).

73 c) St °रिकोपि (for °रकोऽपि)

भोगान् राजोचितान् विप्रा भैषज्यं व्याधिपीडिताः ।
वेतनं वृत्तिहीनाश्च तस्मात् समुपलेभिरे ॥ ७५ ॥

पित्र्योपरागकेत्वादिदुर्निमित्तोपशान्तिषु ।
गोसहस्राश्वहेमादिसंभवैः सोऽभजद् द्विजान् ॥ ७६ ॥

नन्दिक्षेत्रे पुरं कृत्स्नं दग्धमुत्पातवह्निना ।
पूर्वाधिकगुणं तेन नवं राज्ये व्यधीयत ॥ ७७ ॥

श्रीचक्रधरयोगेशस्वयंभूस्थानयोजनम् ।
जीर्णोद्धृतिव्यसनिना कृतं तेन सुकर्मणा ॥ ७८ ॥

हर्षदेवेन यो निन्ये श्रीपरीहासकेशवः ।
परिहासपुरे तं स नवं नरपतिर्व्यधात् ॥ ७९ ॥

प्राग्वर्णितशुकावल्या भूषितो हर्षनीतया ।
तेन त्रिभुवनस्वामी निर्लोभेन महीभुजा ॥ ८० ॥

जयापीडाहृतं हर्षोत्पाटने प्लुष्टमग्निना ।
सिंहासनं नवं चक्रे स राज्यककुदं नृपः ॥ ८१ ॥

लब्ध्वा तदर्धाध्यारोहं भर्तुः प्रेम्णाऽतिदुर्लभम् ।
सामान्ययाऽपि देवीत्वं जयमत्या न दूषितम् ॥ ८२ ॥

सा ह्यानृशंस्यमाधुर्यत्यागसत्प्रियतानयैः ।
अस्तम्भार्तपरित्राणमुख्यैर्भव्याऽभवद् गुणैः ॥ ८३ ॥

लब्धभूपालवाल्लभ्या नार्यः क्रोधात् प्रजासु यत् ।
राक्षस्य इव भङ्गाय लावण्यललिता अपि ॥ ८४ ॥

---

76. b) All Mss read °मित्तोपमार्ति°, D suggests °मित्तामयार्ति° (for °मित्तोपशान्ति° suggested with St). —d) St Tr. suggests °सभारैः (for °सभवै ).

78. b) S′ C °स्थानु° (for °स्थान°) —d) $I_3$ $P_2$ स्वकर्म° (for सुकर्म°).

80. d) C °र्लोभो न (for °र्लोभेन).

82. a) C तदर्ध्वा° (for तदर्धा°)

83. b) $P_3$ om नयै. —c) S′ C $I_3$ $P_{1,2}$ अस्तम्भा तु° (for अस्तम्भार्त°).

84 b) C S′ प्रजास्वय (for प्रजासु यत् ).

प्रियप्रजस्याऽयमन्यो गुणः सर्वगुणाग्रणीः ।
उच्चलक्ष्मापतेरासीदर्थैनैस्पृह्यशालिनः ॥ ८५ ॥

जिघांसवः पापकामाः परस्वादायिनश्शठाः ।
रक्षांस्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ॥ ८६ ॥

तेनेतिहासिनी नीतिं श्रद्दधानेन सर्वदा ।
येन संपठता श्लोकं कायस्थोन्मूलनं कृतम् ॥ ८७ ॥

यत्ते विषूचिकाशूलसंन्यासेभ्यः किलेतरे ।
घ्नन्त्याशुकारिणो विश्वं प्रजारोगा नियोगिनः ॥ ८८ ॥

पितरं कर्कटो हन्ति मातरं हन्ति पुत्तिका ।
हन्ति सर्वं तु कायस्थः कृतघ्नः प्राप्तसंभवः ॥ ८९ ॥

गुणान् समर्प्य स्फुरता येनैवोत्थाप्यते शठः ।
वेताल इव कायस्थस्तमेवाऽऽहन्ति हेलया ॥ ९० ॥

विषवृक्षो नियोगी च यदेवाऽऽश्रित्य वर्धते ।
चित्रं करोति तस्यैव स्थानस्याऽनभिगम्यताम् ॥ ९१ ॥

तेन ते क्ष्माभुजा मानक्षतिकार्यनिवारणैः ।
काराप्रवेशैश्च खलाः शमं नीताः पदे पदे ॥ ९२ ॥

कार्यान्निवार्य बहुशः सहेलाद्यान् महत्तमान् ।
भङ्गासूत्रमयं वासः कारायां पर्यधापयत् ॥ ९३ ॥

---

86 b) All Mss. read °दायिनश्च ता (for °दायिनश्शठा suggested with D, cf. *Manu* vii 123 and St Tr).

87. d) S′ C °द्दर्जन (for °न्मूलन).

89. b) S′ C $I_3$ पुत्रिका (for पुत्तिका)

90. b) S′ C °वोत्पाट्य° (for °वोत्थाप्य°)

91. d) S′ C °नति° (for ⌊अ⌋नभि°).

93. b) C S′ °लस्याप्याहेतु° (for °लाद्यान् महत्त°).

स कार्यवेषं हास्याय सभार्यं चारणोचितम् ।
अकारयद् भूतभिश्च धावनं डोम्बयोधवत् ॥ ९४ ॥

स प्रांशुर्वेष्टितश्मश्रुरुष्णीषेणोत्फलन् पुनः ।
शूलहस्तः सजानूरुः केषामासीन्न हास्यकृत् ॥ ९५ ॥

स शीर्षदर्शनं साम्यवादवेश्याविटान्वितम् ।
प्रियवेश्यं कंचिदग्रे नृत्तवाद्यमकारयत् ॥ ९६ ॥

बद्ध्वाऽन्यं शकटे नग्नं क्षुरलूनार्धमस्तकम् ।
अकारयत् सटान्यस्तचीनपिष्टच्छटाङ्कितम् ॥ ९७ ॥

ते कुम्भवादनैर्मुण्डमण्डनैश्चाऽङ्किताभिधाः ।
नियोगिनो भग्नमानाः सर्वतः ख्यातिमाययुः ॥ ९८ ॥

कार्यभ्रष्टा मलक्लिन्नक्षीणवस्त्रावगुण्ठनाः ।
सर्वार्थिनो व्यभाव्यन्त केऽप्यटन्तः प्रतिक्षपम् ॥ ९९ ॥

वृथावृद्धाः सुखप्राप्यं पाण्डित्यं भूर्जवत् परे ।
मत्वा बाला इवाऽऽचार्यगृहे प्रारेभिरे श्रुतम् ॥१००॥

केऽप्युच्चैरट्टभिक्षाकाः सादरं स्तोत्रपाठिनः ।
कृतानुपाठाः स्वापत्यैः प्राह्णे लोकमहासयन् ॥१०१॥

माता स्वसा सुता भार्या स्वापि कैरप्यकार्यत ।
सामन्तसेवनं कार्यप्राप्त्यै सुरतसेवया ॥१०२॥

---

94. a) D सकार्य° (for स कार्य°) —b) C S′ सभाया वरणो° (for सभार्यं चारणो°) —c) All Mss read °भिश्चधा° (for °भिश्च धा° suggested with St) —d) All Mss. read डोम्भ° (for डोम्ब° suggested with St).

96 a) D C S′ °दशन (for °दर्शन) —b) St. Tr. suggestes साम्यवादि° (for साम्यवाद°). —d) C S′ [अ]नृतवद्य°, $I_3$ $P_2$ नृतुवाद्य° (for नृत्तवाद्य°).

98. c) $P_2$ °मना· (for °माना )

99. a) C S′ अन्न° (for मल°) —d) C S′ °क्षय (for °क्षप).

102 d) C S °प्राप्तै (for °प्राप्त्यै)

जातकस्वप्नशकुनस्वलक्षणनिरीक्षणम् ।
कारयद्भिः शठैरन्यैर्गणकाः परिखेदिताः ॥ १०३ ॥

पिशाचा इव शुष्कास्या रूक्षश्मश्रुकचाः कृशाः ।
बद्धाः परैर्व्यभाव्यन्त शृङ्खलामुखराङ्घ्रयः ॥ १०४ ॥

नृपेण कार्यिणां दर्पलिङ्गनाशे विपाटिते ।
अक्ष्णोर्ज्ञातिपरिज्ञानक्षमत्वं समजायत ॥ १०५ ॥

भारतस्तवराजादिस्तोत्रपाठमशिश्रियन् ।
ते दुर्गोत्तारिणीविद्याजपं चोदस्रुलोचनाः ॥ १०६ ॥

इत्थं दौस्स्थ्योदये दीर्घे मज्जन्तो नित्यदुर्जनाः ।
तस्मिन् राजनि कायस्था व्यलोक्यन्त पदे पदे ॥ १०७ ॥

भिन्नसन्धानभूर्यर्थदानभोज्यादिढौकनैः ।
न हि मोहयितुं शक्ताः प्राज्ञं तं तेऽन्यराजवत् ॥ १०८ ॥

तान् प्रजाकण्टकान् दुष्टान् कृतधीरकृताऽनिशम् ।
तैस्तैः शुचिभिरध्यक्षैः स विशामीश्वरो वशान् ॥ १०९ ॥

भूतेशस्य यथा पुरी हुतवहप्लुष्टा त्वदाज्ञाबलाद्
भूयः स्वां श्रियमाससाद सहसा तद्वत्समस्तामिमाम् ।
त्वं कायस्थकुटुम्बिक्लृप्तिसचिवप्रायाख्यपञ्चानली-
लीढामुच्चलदेव निर्वृतिसुखस्थित्या पुरीं स्वां क्रियाः ॥ ११० ॥

---

103. a) C S′ °शक्ते° (for °शकु°) —b) St °सुल° (for °स्वल°). —c) C S′ शुभै°, $P_2$ शुभे°, $I_3$ शठे° (for शठै°).

105. c) C °ज्योति°, S′ °ज्योति° (for °ज्ञाति°)

106. b) C S′ °शिश्रयन् (for °शिश्रियन्) —d) C S′ °जपश्चो° (for °जप चो°).

108. d) C S′ तेन° (for तेऽन्य°).

109. a) C पुष्टा° (for दुष्टा°). —d) C S′ [अ] वशान् (for वशान्)

110. a) C S′ तदाज्ञा° (for त्वदाज्ञा°). —c) D °प्राय, $P_{2,3}$ $I_3$ °प्राय; $P_1$ °प्रायि, C S′ °प्रायाश्च (for °प्रायाख्य° suggested). D St $SA_1$ $P_{1-3}$ $I_3$ indicate a *lacuna* of one syllable before पञ्चा°).

शिवरात्र्युत्सवे श्लोकममुं शिवरथाभिधः ।
विद्वान् पठंस्तेन हठात् सर्वाध्यक्षो व्यधीयत ॥ १११ ॥

व्यवहारानभिज्ञोऽपि कंचित्कालमदीदृशत् ।
शुचित्वादार्यभाजः स क्रामन् कृतयुगस्थितिम् ॥ ११२ ॥

शीघ्रदण्डत्वमुच्चण्डतेजसस्तस्य भूपतेः ।
क्रूरानुद्दिश्य कायस्थान् धीमद्भिर्बह्वमन्यत ॥ ११३ ॥

नहि क्षुद्राश्वकायस्थपिशाचाविष्टवैरिणाम् ।
शंसन्त्यन्तरितं दण्डं दण्डनीतिविशारदाः ॥ ११४ ॥

चिरेण दण्डिता ह्येते कुर्युर्दण्डभयाद् ध्रुवम् ।
लब्धान्तराः प्राणहरं कृच्छ्रं किंचित् प्रशासितुः ॥ ११५ ॥

दण्ड्यानां दण्ड्यमानानां पुत्रस्त्रीमित्रबान्धवाः ।
राज्ञा विचारशीलेन न तेनोपद्रुताः क्वचित् ॥ ११६ ॥

कर्णेजपाँल्लोष्टधरप्रमुखांस्तेन दुःखदैः ।
कर्मभिः क्लिश्नताऽध्वाऽपि पैशुन्यस्य खिलीकृतः ॥ ११७ ॥

विस्मृतिं लब्धराज्यानां पूर्वसंकल्पवासनाः ।
प्रयान्ति प्राप्तजनुषां गर्भवासस्पृहा इव ॥ ११८ ॥

प्राग्राज्याधिगमात् किंचित् सदसद्यद् व्यचिन्तयत् ।
राज्ये तन्न विसस्मार जातिस्मर इवोच्चल ॥ ११९ ॥

ददर्श शत्रोरद्रोहान् यान् द्रोग्धॄन् वा पुरानुगान् ।
कर्तव्यानुगुणं तेषां प्रतिपत्तिमदर्शयत् ॥ १२० ॥

स्मरेन्नोपपतिः पूर्वपतिद्रोहं कुयोषितः ।
पूर्वस्वाम्यरितां चाऽद्य कुभृत्यस्येश्वरो जडः ॥ १२१ ॥

---

111. a) $P_{1,2}$ SA लोक° (for श्लोक°).
112. b) C S′ °दीद° (for °दीदृ°) —d) C S′ क्रमन् (for क्रामन् ).
115 b) C S′ °धराद् (for °भयाद् ).
116. c) C S′ राज्ञा (for राज्ञा).
117. c) C S′ क्लिश्नताध्वा° (for क्लिश्नताऽध्वा°).
119. c) C S′ $P_1$ तत्र (for तन्न)
121. d) C S′ °स्योद्धरो (for °स्येश्वरो).

शेषाहिदेहान्मेदिन्या समं प्रज्ञाऽपि राज्यभूत् ।
तस्मिन् परिणता नूनं कृत्याकृत्यविवेक्तरि ॥१२२॥

तथाह्येकस्य वणिजो व्यवहर्तुश्च सोऽभवत् ।
विवादे संशयं छिन्दन्नेवं स्थेयाद्यगोचरे ॥१२३॥

सौहृदारूढसद्भावे व्यापदौपयिकं धनी ।
न्यासीचकार दीन्नारलक्षं कोऽपि वणिग्गृहे ॥१२४॥

तेनोपयुज्यमाना च व्ययेषु वणिजः करात् ।
कियत्यपि गृहीताऽभूदर्थमात्राऽन्तरान्तरा ॥१२५॥

त्रिंशद्विंशासु यातासु समासु न्यासधारिणम् ।
गृहीतशेषं दातुं स धनं प्रार्थयताऽथ तम् ॥१२६॥

वणिक् तु कुकृती तस्य न्यासग्रासाय सोद्यमः ।
कालापहारमकरोत् तैस्तैः कलुषधीर्मिषैः ॥१२७॥

स्रोतोभिर्व्यस्तमम्भोधौ लभ्यं मेघमुखैः पयः ।
प्रातिभूयस्तु नाऽस्त्येव वणिङ्न्यस्तस्य वस्तुनः ॥१२८॥

तैलस्निग्धमुखः स्वल्पालापो मृद्वाकृतिर्भवन् ।
न्यासग्रासविवादोग्रो वणिग् व्याघ्राद् विशिष्यते ॥१२९॥

विवादे श्रेष्ठिना शाठ्यं स्मितैः प्राक्सख्यदर्शनैः ।
मुक्तं मुक्तं ज्ञायमानं प्राणान्तेऽपि न मुच्यते ॥१३०॥

---

122 b) C S′ राज्यभृत् (for राज्यभूत् )

124. a) St $I_3$ $P_{1,2}$ °गूढ° (for °रूढ°) —b) C S′ °यिके (°यिक)

125 d) SA °दत्तमात्रा°, S′ C °ढनुमात्रा°, SL $I_3$ $P_3$ °दन्तमात्रा°, St °दात्तमात्रा°, D $P_{1,2}$ °दृत्तमात्रा° (for °दर्थमात्रा° suggested with St Tr )

126 a) S′ C °द्विशत्सु या°, $P_3$ °द्विशत्प्रया°, SA °द्विशद्या° (for °द्विशासु या° suggested with St) D $P_{1,2}$ $I_3$ indicate a *lacuna* of one syllable after °द्विश Here the word त्रिंशद्विश - means thirty or twenty and not fifty, cf *v* v 210.

130 c) S′ C सुस्थ सुस्थ (for मुक्त मुक्त). —d) C S′ मुख्यते [sic] (for मुच्यते)

निसर्गवञ्चका वेश्याः कायस्थो दिविरो वणिक् ।
गुरूपदेशोपस्कारैर्विशिष्टाः सविषादिषोः ॥१३१॥

चन्दनाङ्कालिके श्वेतांशुके धूपाधिवासिनि ।
विश्वस्तः स्यात् किराटे यो विप्रकृष्टेऽस्य नाऽऽपदः ॥१३२॥

ललाटदृक्पुटश्रोत्रद्वन्द्वहृन्न्यस्तचन्दनः ।
षड्विन्दुर्वृश्चिक इव क्षणात् प्राणान्तकृद्वणिक् ॥१३३॥

पाण्डुश्यामोऽग्निधूमार्द्रः सूच्यास्यो गहनोदरः ।
तुम्बीफलोपमः श्रेष्ठी रक्तं मांसं च कर्षति ॥१३४॥

सोऽथ निश्शेषितमिषः क्रुद्धो निर्बन्धकारिणः ।
गणनापत्रिकां तस्य सभ्रूभङ्गमदर्शयत् ॥१३५॥

यदादौ श्रेयस इति न्यस्तमश्रेयसे पदम् ।
आतरेष्वत्यये सेतोर्गृहीता षट्शती त्वया ॥१३६॥

छिन्नोपानत्कषाबन्धे शतं चर्मकृतेऽर्पितम् ।
विपादिकाकृते दास्या नीतं पञ्चाशतो घृतम् ॥१३७॥

स्फोटने भाण्डभारस्य क्रन्दन्त्याः कृपयाऽर्पितम् ।
कुलाल्या बहुशः पश्य भूर्जे लग्नं शतत्रयम् ॥१३८॥

शिशुभ्योऽस्य बिडालस्य क्रीताः पोषाय मूषिकाः ।
त्वया शतेन वात्सल्याद्धट्टान्मत्स्यरसस्तथा ॥१३९॥

---

131 b) C S′ [अ]पि वरो; $P_{1-3}$ शिविरो (for दिविरो) —d) D S′ C $P_{1-3}$ °षाशिषो (for °षादिषो).

132 c) St suggests किराते (for किराटे found in all Mss.) किराट- means a shopkeeper, cf *Yogavāsistha* iv 83 16 and W. Panjābī किराड, also cf MW —d) C S′ °ष्टेष्वना° (for °ष्टेऽस्य ना°)

133. a) C °क्षत्र°; $P_1$ °क्पुत्र°, $I_3$ °क्षुट° (for °पुट°)

135 c) C तस्या (for तस्य)

136. d) C S′ °सुधी (for °शती).

139. d) C S′ °त्पट्टान् (for °द्धट्टान्)

चरणोद्वर्तनं सर्पिः शालिचूर्णं च सप्तभिः।
क्रीतं शतैः श्राद्धपक्षस्नाने च घृतमाक्षिकम् ॥१४०॥

नीतं क्षौद्रार्द्रकं कासायासायादर्भकेण ते।
सोऽव्यक्तजिह्वः किं वेत्ति वक्तुं लग्नं शतं ततः ॥१४१॥

वृषणोत्पाटको भिक्षाचरस्ते हठयाचकः।
यो वारितो युद्धपटुस्तस्मै दत्तं शतत्रयम् ॥१४२॥

आनीते भट्टपादानां मध्यं सर्वव्ययोपरि।
शतं शतद्वयं धूपशन्दामूलपलाण्डुषु ॥१४३॥

इत्याद्यचिन्तितायुक्तापरिहार्यव्ययानसौ ।
तस्यैकीकृत्य गणनां लाभेऽपि शनकैर्व्यधात् ॥१४४॥

वर्षमासग्रहतिथिप्रत्यावृत्तिः पुनः पुनः।
संसारस्येव तस्याऽन्तं न ययौ नर्तिताङ्गुलेः ॥१४५॥

स मूलग्रहणं पिण्डीकृत्याऽथ सकलान्तरम्।
प्रसारितौष्ठस्तन्नेत्रे मीलयन्नभ्यधान्मृदु ॥१४६॥

शल्यमुद्धर निक्षेपं नयोज्झामधनं त्विदम्।
विस्रम्भदत्तं निर्दम्भं दीयतां सकलान्तरम् ॥१४७॥

तत् स धर्म्यं वचो जानन् क्षणमुच्छ्वसितोऽभवत्।
क्षुरं क्षौद्रोपलिप्तं तु ध्यात्वा पश्चादतप्यत ॥१४८॥

---

140. $P_1$ om *ab*.

142. a) C S′ मृष° (for वृष°) —b) C S′ ज्व (for हठ°)

144. a) St °द्यचिन्त्यतायुक्तान्परि°, D (before suggestion) C S′ $P_{1-3}$ °द्यचिन्ततायुक्तापरि°, $I_3$ °दि चितता° (for °द्यचिन्तितायुक्ता° suggested with D)

145 c) C S′ °मेव (for °स्येव). C S′ °स्यान्ते (for °स्याऽन्त).

146 c) St $P_1$ °तोष्ठ°, $P_2$ $I_3$ °तोष्ट° (for °तौष्ठ°).

147. b) S′ C °योज्ञास°, $P_1$ °यज्ञास°; D St SA $P_{2,3}$ °योज्झास° (for °योज्झाम° found in SL). —c) St विश्रम्भ° (for विस्रम्भ°)

युक्त्याऽपह्नुतसर्वस्वं क्रौर्यानार्यमथाऽर्थकः ।
विवादे नाऽशकज्जेतुं नाऽपि स्थेया विचारकाः ॥१४९॥

स्थेयैरनिश्चितन्यायं पुरो न्यस्तं ततो नृपः ।
तदित्थमिति निश्चित्य वणिजं तमभाषत ॥१५०॥

अद्याऽपि न्यासदीन्नाराः सन्ति चेत् तत् प्रदर्श्यताम् ।
अंशः कियानपि ततस्ततो वच्मि यथोचितम् ॥१५१॥

तथा कृते तेन वीक्ष्य दीन्नारान् मन्त्रिणोऽब्रवीत् ।
राजभिर्भाविनां राज्ञां नाम्ना टङ्कः क्रियेत किम् ॥१५२॥

न चेत् कलशभूपालकाले न्यासीकृतेष्वमी ।
दीन्नारेषु कुतष्टङ्का मन्नामाङ्का अपि स्थिताः ॥१५३॥

निक्षितेनैष लक्षेण वणिक् तस्माद् व्यवाहरत् ।
वणिजो द्रविणेनाऽयमप्याप्तेनाऽतरान्तरा ॥१५४॥

तस्माद् यदा यदेतेन गृहीतं दीयतां ततः ।
तदाप्रभृत्यद्य यावल्लाभोऽस्मै वणिजोऽर्थिनः ॥१५५॥

न्यसनानेहसश्चैष प्रभृत्यस्मै प्रयच्छतु ।
लक्षादखण्डिताल्लाभं किं वाच्यं मौलिके धने ॥१५६॥

अवधारयितुं शक्यं मादृशैः सघृणैरियत् ।
श्रीयशस्करवद् रौक्ष्यमीदृक्षेषु तु युज्यते ॥१५७॥

---

149. [a]) St S′ C $I_3$ $P_{1,2}$ युक्ताप° (for युक्त्याऽप°). —[b]) S′ SA क्रौर्यानर्य° (for क्रौर्यानार्य°).

155. [c]) St C तदा प्रभृ° (for तदाप्रभृ°). St D C °त्यद्यया° (for °त्यद्य या°). —[d]) St Tr. suggestes वणिजोऽर्थिना (for वणिजोऽर्थिनः found in all Mss.).

156. [d]) C S′ लौलिके (for मौलिके).

विवादे संदिहानस्य युक्तं क्षान्त्याऽनुशासनम् ।
भाव्यं दण्डधराचारैः प्रयुक्तकुसृतैः पुनः ॥१५८॥

अनिर्हार्येषु शल्येषु महाममर्मगतेष्विव ।
सविवादेषु चोपेक्षां कालापेक्षी व्यधान्नृपः ॥१५९॥

पप्रथे पार्थिवस्येत्थं निश्चोद्यं तस्य पालनम् ।
प्रजासु जागरूकस्य मनोरिव मनस्विनः ॥१६०॥

सख्यं कारणनिर्व्यपेक्षमिनताऽहंकारहीना सती-
भावो वीतजनापवाद उचितोक्तित्वं समस्तप्रियम् ।
विद्वत्ता विभवान्विता तरुणिमा पारिप्लवत्वोज्झितो
राजत्वं विकलङ्कमत्र चरमे काले किलेत्यन्यथा ॥१६१॥

स तादृशोऽपि राजेन्द्रचन्द्रमाः सन् किलाऽभवत् ।
मात्सर्याविष्टवैवश्याद् दोषोल्कावर्षभीषणः ॥१६२॥

औदार्यशौर्यधीधैर्यगुणतारुण्यमत्सरः ।
बभूव संख्यातीतानां मानप्राणहरो नृणाम् ॥१६३॥

मानोन्नतैश्च भूयोऽपि वाक्पारुष्यरुषाऽऽहतैः ।
लाघवं प्रत्युपालम्भैः पार्थिवोऽप्यनुभावितः ॥१६४॥

प्रसुप्तानां फणीन्द्राणामिव कोपोद्भवं विना ।
तेजोविस्फूर्जितं ज्ञेयं नहि नाम शरीरिणाम् ॥१६५॥

विविधे भूतसर्गेऽस्मिन् न च कश्चित् स विद्यते ।
वपुर्वंशचरित्रादि यस्य दोषैर्न दूषितम् ॥१६६॥

---

158 b) C S′ क्षान्त्य° (for क्षान्त्या°). —c) C S′ °परा° (for °धरा°). —d) C S′ प्रयुक्त (for प्रयुक्त°)

159. a) D $P_1$ अतिहार्येषु (for अनिर्हार्येषु).

160. c) C S′ प्रजास्व° (for प्रजासु).

161. b) C S′ °तोत्थित्व (for °तोक्तित्व).

162. a) D suggests यत् (for स). —b) D S′ C $P_{1-3}$ $I_3$ SA स (for सन् suggested with St) —c) D suggests °वेश° (for °विष्ट°). —d) C S′ °त्कावर्षयो° (for °ल्कावर्षभी°)

164. b) D हतै. (for [आ]हतै )

जातिः पङ्करुहाद् वपुः कपिलताक्रान्तं शिरःखण्डन-
प्रभ्रश्यच्छुचिशीलतादिविगुणाचारप्रदुष्टं यशः ।
विश्वस्त्रष्टुरिति प्रभूतविषयव्याप्तिस्पृशो दुस्सहा
दोषा यत्र पुरोऽस्तु तत्र कतमो निर्दोषतोत्सेकभूः ॥१६७॥

अविचार्यैति भूपालः स चकाराऽनुजीविनाम् ।
वंशचारित्रदेहादिदोषोद्घोषणमन्वहम् ॥१६८॥

अन्योन्यद्वेषमुत्पाद्य संख्यातीता महाभटाः ।
युद्धश्रद्धालुना तेन द्वन्द्वयुद्धेषु घातिताः ॥१६९॥

मासार्घदिनमाहेन्द्रमहाद्यवसरेषु सः ।
निनाय योधान् संनद्धानन्योन्यप्रधनैर्धनम् ॥१७०॥

स नाऽभूदुत्सवः कश्चित् तदा यत्र नृपाङ्गने ।
भूमिर्न सिक्ता रक्तेन हाहाकारो न चोद्ययौ ॥१७१॥

नृत्यन्त इव निर्याता गृहेभ्यो वंशशोभिनः ।
बान्धवैर्निन्यिरे योधा लूनाङ्गाः पार्थिवाङ्गनात् ॥१७२॥

स्निग्धश्यामकचांश्चारुश्मश्रूनाकल्पशोभिनः ।
हतान् वीक्ष्य भटान् राजा मुमुदे न तु विव्यथे ॥१७३॥

नार्यो राजगृहं गत्वा प्रत्यायातेषु भर्तृषु ।
मेनिरे दिवसं लब्धमनास्था नित्यमन्यथा ॥१७४॥

भवेत् तद् यदहं कुर्यामित्यहंक्रियया वदन् ।
साचिव्यमव्याहतवाक् तैस्तैर्भृत्यैरजिग्रहत् ॥१७५॥

---

167. [a]) C S′ ज्ञात (for °क्रान्त). D S′ C °खण्डन (for °खण्डन°). —[d]) C S′ पुरस्तु (for पुरोऽस्तु).

169. [a]) C S′ °दोष° (for °द्वेष°). —[c]) D $I_3$ $P_{1-3}$ °द्धालुता (for °द्धालुना)

170. [a]) C S′ मासार्द्ध° (for मासार्घ°) —[d]) C S′ °न्योन्य (for °न्योन्य°). $P_3$ °नै क्षय (for °नैर्धन).

173 [d]) C S′ च (for तु)

175 [d]) St $P_{1-3}$ $I_3$ यै° (for तै°)

प्रवर्धमानांस्तानेव विद्वेषकलुषाशयः ।
हृताधिकारान् विदधे बहुशश्च विमानितान् ॥१७६॥

दञ्छक कम्पनाधीशः प्रवृद्धौ तत्र सक्रुधि ।
विद्रुतो विषलाटाया निपत्य निहतः खशैः ॥१७७॥

तेन स्ववर्धितो द्वाराधीश्वरो रक्काभिधः ।
हृताधिकारो विदधे विभूतिं वीक्ष्य भूयसीम् ॥१७८॥

माणिक्यसैन्यपतिना द्वारेऽकस्मान्निवारिते ।
खिन्नेन विजयक्षेत्रे चक्रे व्रतपरिग्रहः ॥१७९॥

कम्पनाद्यधिकारस्थाः प्रवीरास्तिलकादयः ।
काकवंशा मार्दवेन तत्कोपं नाऽनुभाविताः ॥१८०॥

भोगसेनो निरनुगः क्षीणवासा भवन् कृतः ।
तेनाऽतिसेवाप्रीतेन राजस्थानाधिकारभाक् ॥१८१॥

यस्येन्द्रद्वादशीयुद्धे सान्द्रसैन्योऽपि विद्रुतः ।
क्षुद्रवद् गग्गचन्द्रोऽपि रौद्रमालोक्य विक्रमम् ॥१८२॥

येऽपि सङ्गाभिधानस्य पुत्राः सामान्यशस्त्रिणः ।
तान् रड्डच्छुड्डव्यड्डान् स मन्त्रिणः समपादयत् ॥१८३॥

पुत्रौ विजयसिंहस्य तत्सेवात्यक्तदुर्दशौ ।
तिलको जनकश्चाऽऽस्ताममात्यश्रेणिमध्यगौ ॥१८४॥

---

176 b) S′ C विदुष (for विद्वेष°).

177. a) C S′ दशक (for दञ्छक). —b) C S′ प्रवृद्धे (for प्रवृद्धौ).

179. d) C S′ वृत° (व्रत°).

180. C S′ subst. काकवशादिमन्त्रित्वे न तत्कोपेन भाविता for *cd*.

181. b) C S′ °वासोऽभवत्कृत·; D (before suggestion) $P_{1-3}$ $I_3$ °वासा भवत्कृत ; D suggests °वासा कृतोभवत् (for °वासा भवन् कृत·).

184. c) SA $I_3$ $P_2$ °श्चास्त° (for °श्चाऽऽस्ता°).

यमैलाभयबाणादिमुख्या द्वारादिनायकाः ।
कस्तान् समर्थः संख्यातुं तडित्तरलसंपदः ॥१८५॥

द्वित्राः प्रशस्तकलशाद्यः पूर्वं तदन्तरे ।
प्रापुर्बालद्रुमान्तस्स्थजीर्णानोकहविभ्रमम् ॥१८६॥

कंदर्पः क्ष्माभुजा दूतैः समानीतोऽपि नाऽऽददे ।
तस्याऽसहनतां वीक्ष्य प्रार्थितोऽप्यधिकारिताम् ॥१८७॥

आस्थानाचारसंलापव्यवहारादि मण्डले ।
नवमेवाऽभवत् सर्वं तस्मिन्नभिनवे नृपे ॥१८८॥

लक्ष्मीः कार्मणचूर्णाङ्का वेश्येव वशवर्तिनः ।
धीरानपि विधायेयं करोत्युन्मार्गवर्तिनः ॥१८९॥

सपिण्डानामपि व्यक्तशीलवीक्षणतत्परा ।
प्रेततेव नरेन्द्रश्रीर्जातिस्नेहापकारिणी ॥१९०॥

समस्तसंपत्पूर्णोऽपि यस्मात् सुस्सलभूपतिः ।
दध्यौ भ्रातुरवस्कन्दं राज्यापहरणोद्यतः ॥१९१॥

अकस्मादश्रूणोच्छ्येनमिव तं शीघ्रपातिनम् ।
स्थानं वराहवार्ताख्यमुल्लङ्घ्याऽऽयातमग्रजः ॥१९२॥

क्षिप्रकारी विनिर्गत्य तमप्राप्तपदं ततः ।
निपत्य सैन्यैर्बहुलैः सोऽपकारमकारयत् ॥१९३॥

---

185 [a]) D C S′ $P_{1,3}$ °भाय° (for °भय°);

186. [d]) $I_3$ $P_{1,2}$ SA °नौकह° (for °नोकह°)

189. [ab]) C S′ °ङ्कवेश्यायावे, $P_2$ °ङ्का वेशेव व° (for °ङ्का वेश्येव व°).

190. [b]) C S′ $I_3$ St $P_2$ °शूल° (for °शील°).

विद्रुतस्याऽऽस्पदे तस्य नानोपकरणैश्च्युतैः ।
ताम्बूलवल्लीकूटैश्च सामग्री समभाव्यत ॥१९४॥

कृतकार्यः परावृत्त्याऽसावरूढोऽपि पार्थिवः ।
प्रत्यावृत्तं तमश्रृणोदन्येद्युः क्रूरविक्रमम् ॥१९५॥

गग्गचन्द्रस्तदादेशाद् गत्वा बहलसैनिकः ।
चक्रे सुस्सलभूपालबलनिर्दलनं ततः ॥१९६॥

असंख्यैः सोस्सलैर्योधैराहवायासनिस्सहैः ।
क्लान्तिर्विमानोद्यानेषु द्युनारीणाममुच्यत ॥१९७॥

भर्तृप्रसादस्याऽऽनृण्यं प्राणैर्युधि समर्पितैः ।
राजपुत्रौ गतौ तत्र सहदेवयुधिष्ठिरौ ॥१९८॥

वराश्वान् सुस्सलानीकाद् गग्गस्तान् प्राप विद्रुतान् ।
चक्रे भूरितुरङ्गस्य यैर्भूपस्याऽपि कौतुकम् ॥१९९॥

निविष्टकटकं तं स श्रुत्वा सेल्यपुराध्वना ।
क्रमराज्योन्मुखं यान्तं द्रुतमन्वसरन्नृपः ॥२००॥

अन्विष्यमाणसरणिः प्रयत्नादग्रजन्मना ।
प्रविवेश दरद्देशं परिमेयपरिच्छदः ॥२०१॥

दत्तमार्गं तस्य राजा डामरं लोष्टकाभिधम् ।
स सेल्यपुरजं हत्वा नगरं प्राविशत् ततः ॥२०२॥

तस्मिन् दूरं गते वैरकलुषोऽपि स नाऽऽददे ।
भ्रातृस्नेहेन संरम्भं ग्रहीतुं लोहरं गिरिम् ॥२०३॥

---

194. [c]) All Mss read °वेला° (for °वल्ली° suggested with St).

195. [a]) D St $I_3$ $P_{1-3}$ °कार्यं° (for °कार्यः)

197. [b]) C S' °याम° (for °यास°)

199. [a]) All Mss read °नीकान् (for °नीकाद् suggested with St D).

203. [c]) D C S' $P_{1,3}$ भ्रातृस्नेहैर° (for भ्रातृस्नेहेन)

कल्ह कालिञ्जराधीशो दौहित्री पुत्रवद्गृहे ।
यामवर्धयत स्नेहादपुत्रः पितृवर्जिताम् ॥२०४॥

राज्ञो विजयपालस्य सुतां सुस्सलभूपतिः ।
उपयेमे स तां श्रीमाननघां मेघमञ्जरीम् ॥२०५॥

तस्य प्रभावाधिष्ठानाच्छिशोरपि न लोहरे ।
शक्तिरासीद् विरुद्धानामपि वाधाय वैरिणाम् ॥२०६॥

धीरः सुस्सलदेवोऽपि मार्गैर्निर्गत्य दुर्गमैः ।
आसदद् भूरिभिर्मासैः स्वोर्वीं दुर्गिरिवर्त्मना ॥२०७॥

प्रशान्ते व्यसने तस्मिन् धीरस्योच्चलभूपतेः ।
अन्येऽपि व्यसनाभासा उत्पन्नध्वंसिनोऽभवन् ॥२०८॥

भीमादेव समादाय भोजं कलशदेवजम् ।
साहायकार्थमानिन्ये दरद्राजं जगद्दलम् ॥२०९॥

सह्लो हर्षमहीभर्तुरवरुद्धात्मजोऽभवत् ।
भ्राता दर्शनपलस्य सज्जपालस्तु तद्बलम् ॥२१०॥

नीतिज्ञेन ततो राज्ञा साम्नैव दरदीश्वरः ।
आक्षेपाद् वारितः प्रायात् प्रत्यावृत्त्य निजां भुवम् ॥२११॥

सह्लस्तमन्वगाच्छन्नं भोजोऽविक्षत् स्वमण्डलम् ।
भेजे सुस्सलदेवस्य सज्जपालोऽनुजीविताम् ॥२१२॥

गृहीतार्थेन भृत्येन निजेनैव प्रदर्शितः ।
भोज क्षिप्रं नृपात् प्राप निग्रहं तस्करोचितम् ॥२१३॥

---

204 a) All Mss read कालिन्दरा° (for कालिञ्जरा° suggested with St. cf vv vii 1257; viii 618) —b) C S′ $P_2$ °द्गृही [sic] (for द्गृहे°).

206 b) C S′ °च्छिशिरेऽपि (for °च्छिशोरपि)

209 a) C S′ °मुत्थाय (for °मादाय)

212 d) C S′ °पाला° (for °पालो°).

देवेश्वरात्मजः पित्थकोऽपि द्वैराज्यलालसः ।
डामरानाश्रिते राज्ञि निर्याते व्यद्रवद् दिशः ॥२१४॥

विचारपरिहारेण धावन्तः सर्वतो जडाः ।
तिर्यञ्च इव हास्याय प्रसिद्धिशरणा जनाः ॥२१५॥

मल्लस्य रामलाख्योऽहं सूनुरासं दिगन्तरे ।
अट्टसूदः कश्चिदेवं चक्रिकाचतुरो वदन् ॥२१६॥

निन्ये प्रवृद्धिं व्यामूढैर्बहुभिर्विप्लवप्रियैः ।
धनमानादिदानेन भूमिपैर्भूम्यनन्तरैः ॥२१७॥

ग्रीष्मे प्रविष्टः कश्मीरानेकाकी धर्मपीडितः ।
व्यधीयत च्छिन्ननासः परिज्ञाय नृपानुगैः ॥२१८॥

कटके पर्यटन् राज्ञः स एव ददृशे पुनः ।
स्वजात्युचितभक्ष्यादिविक्रयी सस्मितं जनैः ॥२१९॥

मिथ्यैव नीतिकौटिल्यैः क्रियतेऽभ्युदयश्रमः ।
शक्यतेऽपरथा कर्तुं न दैवस्य मनीषितम् ॥२२०॥

शान्ताऽपि ज्वलति काऽपि क्वचिद्दीप्ताऽपि शाम्यति ।
दैववातवशाच्छक्तिः पुंसः कक्षाग्निसंनिभा ॥२२१॥

पलायनैर्नाऽपयाति निश्चला भवितव्यता ।
देहिनः पुच्छसंलीना वह्निज्वालेव पक्षिणः ॥२२२॥

---

214. [d]) $I_3$ $P_{1,2}$ SA वद्रव° (for व्यद्रव°)

216 [a]) $SA_1$ (before corr ) मल्लरामाला° (for मल्लस्य रामला°) —[c]) C S′ अर्द्ध° (for अट्ट°)

217. [d]) C S′ °नन्तर (for °नन्तरै ) After this *v* युग्मम्

218 [c]) St छिन्न° (for च्छिन्न°).

222 [a]) C S′ पलायने नाप° (for पलायनैर्नाऽप°).

नाऽच्छिन्नवह्निविषशस्त्रशरप्रयोगै-
र्न श्वभ्रपातरभसेन न चाऽभिचारैः ।
शक्या निहन्तुमसवो विधुरैरकाण्डे
भोक्तव्यभोगनियतोच्छ्वसितस्य जन्तोः ॥२२३॥

भिक्षाचरः समादिष्टवधो जयमतीगृहात् ।
नक्तं वध्यभुवं निन्ये वधकैः पार्थिवाज्ञया ॥२२४॥

ग्राविण प्रस्फोटय निक्षिप्तो वितस्ताया समीरणैः ।
क्षिप्तस्तटं क्षणं स्पन्दमानवक्षाः कृपालुना ॥२२५॥

द्विजेनैकेन संप्राप्तश्चिरादुद्गतचेतनः ।
आसमत्यभिधानाया ज्ञातिर्दिद्देति गौरवात् ॥२२६॥

शाहिपुत्रीभिरुक्ता या दत्तश्चतुरया तया ।
नीतो देशान्तरं गूढं ववृधे दक्षिणापथे ॥२२७॥

स वृत्तप्रत्यभिज्ञोऽथ पुत्रवन्नरवर्मणा ।
मालवेन्द्रेण शस्त्रास्त्रविद्याभ्यासमकार्यत ॥२२८॥

अन्यदीयं घातयित्वा तत्तुल्यवयसं शिशुम् ।
रक्षितो जयमत्यैव स किलेत्यपरेऽब्रुवन् ॥२२९॥

देशान्तरागताद् दूतात् तां वार्तामुपलब्धवान् ।
अत एवाऽभवत् तस्या भूभृद् विरलितादरः ॥२३०॥

---

223. c) C S′ शक्ता (for शक्या)

225 c) C S′ °स्तटान्तरे (for °स्तट क्षण). —d) C S′ °वृक्षे (for °वक्षाः).

226 b) C S′ °श्रिया दुर्ग° (for °श्चिरादुद्ग°).

227 c) $P_2$ °शान्तरे रू° (for °शान्तर गू°). —d) $P_2$ °पथ (for °पथे). After this *v* तिलकम् .

228. a) C S′ क्रृत° (for वृत्त°). —c) S′ C शास्त्रा° (for शस्त्रा°).

230. ab) C S′ °तात्तद्वार्ता°, $I_3$ $P_1$ °तात्तावत्ता°; SA °तात्तावत्त° (for °तात् तां वार्ता°).

बहिरप्रतिभिन्दंस्तत् स धीरो मार्गवर्तिभिः ।
चक्रे तदप्रवेशाय संबन्धं पार्थिवैः समम् ॥२३१॥

ईर्ष्यामगोपयन् नार्याः शङ्कामच्छादयन् रिपोः ।
स्वयमन्याभिगम्यत्वं करोति हि जडो जनः ॥२३२॥

भिक्षाचरे हते बालं कंचिदादाय तत्समम् ।
तन्नाम्ना ख्यातिमनयद् दिद्दैवेत्यपरेऽब्रुवन् ॥२३३॥

तथ्येन सोऽस्तु मिथ्या वा प्रतिष्ठां तां तथाऽऽप्तवान् ।
यथा लघुत्वमानेतुं न दैवेनाऽप्यशक्यत ॥२३४॥

स्वप्नेन्द्रजालमायानामपि निर्विषया इमाः ।
कर्मवैचित्र्यजनिताः काश्चिदाश्चर्यविप्रुषः ॥२३५॥

स राजबीजी नाशाय विशां गूढं व्यवर्धत ।
पुरग्रामादिदाहाय कक्षान्तरिव पावकः ॥२३६॥

रोहत्यन्तिकसीमनि प्रतिविषावीरुद् विषक्ष्मारुहः
काले प्रावृडुपद्रुताच्छसलिले मूर्च्छत्यगस्त्योदयः ।
सर्गच्छेदविधिक्षमानुदयतो दृष्ट्वा किलोपद्रवान्
संधत्ते प्रतिकारकल्पनमहो दीर्घावलोकी विधिः ॥२३७॥

अजायत विपन्मज्जज्जगदुद्धरणक्षमः ।
तस्मिन्नेव क्षणे यस्मात् सुस्सलक्ष्मापतेः सुतः ॥२३८॥

तज्जन्मकालादारभ्य सर्वतो जयमर्जयन् ।
नामाऽन्वर्थं नृपस्तस्य जयसिंह इति व्यधात् ॥२३९॥

---

232. d) $P_3$ जने जड॰ (for जडो जन ).

234. a) C S′ तथैवैषोस्तु (for तथ्येन सोऽस्तु) —c) S′ C यया (for यथा). —d) $I_3$ SA °शङ्कत, $P_2$ °शक्यत (for °शक्यत).

236. b) $P_3$ गूढमव° (for गूढ व्यव°)

237. a) $SA_3$ gloss प्रतिविषा वरित् यस्या उपविषेत्यादिनामान्तर कोशे यथा विश्वाविषा प्रतिविषातिविषोपविषारुणा शृङ्गीमहौषध चेति (for प्रतिविषा-वीरुद् )

शास्तुः सर्वार्थसिद्धाख्या यथा सर्वार्थसिद्धिभिः ।
तथा तस्याऽभिधाऽन्वर्था नाऽत्यजद् रूढिशब्दताम् ॥२४०॥

मुद्रां सकुङ्कुमस्याऽङ्घ्रेस्तदीयस्याऽभ्युपागताम् ।
विलोक्योच्चलदेवोऽभूद् विमन्युर्भ्रातरं प्रति ॥२४१॥

बालस्यैवाऽङ्घ्रिमुद्राऽस्य वैरं पितृपितृव्ययोः ।
निवारयन्ती विदधे सुस्थितं मण्डलद्वयम् ॥२४२॥

स स्वर्गिणः पितुर्नाम्ना ततः सुकृतसिद्धये ।
चकारोच्चलभूपालः पैतृके स्थण्डिले मठम् ॥२४३॥

गोभूमिहेमवस्त्रान्नदाता तस्मिन् महोत्सवे ।
आश्चर्यकल्पवृक्षत्वं त्यागी सर्वार्थिनामगात् ॥२४४॥

प्रसादैः प्रहितैस्तेन महार्घैः श्लाघ्यसंपदा ।
महान्तोऽपि दिगन्तेषु पार्थिवा विस्मयं ययुः ॥२४५॥

भर्तृप्रसादाधिगतां श्रियं नेतुं परार्घ्यताम् ।
विहारं समठं देवी जयमत्यपि निर्ममे ॥२४६॥

केषांचित् पूर्वपुण्यानां विरहेण महीभुजः ।
हताभीष्टाभिधानोऽभून्मठो नवमठाख्यया ॥२४७॥

सुल्ला स्वसारमुद्दिश्य परस्मिन् स्थण्डिले पितुः ।
विहारोऽपि कृतस्तेन नोचितां ख्यातिमाययौ ॥२४८॥

---

240. [a]) C S′ $P_{1,3}$ °सिद्धाख्या (for °सिद्धाख्या).

241 [a]) St स कु°, C S′ ता कु° (for सकु°).

242. [d]) $P_{1,2}$ स्वस्थि° (for सुस्थि°).

247 [c]) C S′ सुताभी° (for हताभी°) —[d]) C S′ $I_3$ $P_{1,2}$ SA °न्मठे (for °न्मठो).

248 [a]) C S′ स्वला, $P_1$ स्वह्ला (for सुल्लां)

मृत्योर्मस्तकपातित्वं तस्याऽऽकलयतः किल।
न निष्ठां स्वप्रतिष्ठासु संप्रपेदे व्ययस्थितिः ॥२४९॥

कदाचित् क्रमराज्यस्थो द्रष्टुमाग्निं स्वयंभुवम्।
ययौ बर्हठचक्राख्यं गिरिग्रामं स भूपतिः ॥२५०॥

तं कम्बलेश्वरग्रामाध्वना यान्तमवेष्टयन्।
अकस्मादेत्य तत्रत्याश्चौराश्चण्डालशस्त्रिणः ॥२५१॥

प्रजिहीर्षुभिरप्याशु तस्मिन्नत्यल्पसैनिके।
न तैः प्रहृतमुत्तेजोऽवष्टम्भस्तम्भितायुधैः ॥२५२॥

अथ हारितमार्गः स गहने गिरिगह्वरे।
भ्रमन्नल्पानुयाय्येकां क्षणदामत्यवाहयत् ॥२५३॥

उच्चचार क्षणे तस्मिन् स्कन्धावारेषु दुस्सहा।
नाऽस्ति राजेति दुर्वार्ता सर्वतः क्षोभकारिणी ॥२५४॥

कटकान्निस्सृताऽत्यल्पा वात्येव गिरिगह्वरात्।
सा दुष्प्रवृत्तिर्दीर्घत्वं पुरेऽरण्य इवाऽऽसदत् ॥२५५॥

नगराधिकृतस्तस्मिन् क्षणे छुड्डाभिधोऽभवत्।
शस्त्रिणः कामदेवस्य कुल्यो रड्डादिसोदरः ॥२५६॥

कृत्वा पुरक्षोभशान्तिं शस्त्रौकः स नृपास्पदे।
प्रविश्य भ्रातृभिः सार्धं कार्यशेषमचिन्तयत् ॥२५७॥

---

249. a) C S′ मृत्योर्हं° (for मृत्योर्म°). —c) $P_{1-3}$ सुप्राति° (for स्वप्रति°).

250 c) D C S′ $P_{1-3}$ बर्हण°, St Tr बर्हट° (for बर्हठ°)

252. c) S′ C °मह्यो°, D SA $I_3$ $P_{1-3}$ °मुद्रो° (for °मुत्ते° suggested with St).

254. b) St (before corr.) SA $I_3$ $P_{1-3}$ C स्कन्दा° (for स्कन्धा°)

257. b) C S′ शस्त्रौघै (for शस्त्रौक).

नृपं कं कुर्म इत्येवं तान् विचिन्तयतोऽब्रवीत् ।
सङ्गाभिधोऽपि कायस्थः कुटुम्बिकुटिलाशयः ॥२५८॥

यूयमेव सुहृद्बन्धुभृत्यबाहुल्यदुर्जयाः ।
राज्यं कुरुत संप्राप्य राष्ट्रमेवमकण्टकम् ॥२५९॥

तेनैवमुक्तास्ते पापा जातराज्यस्पृहास्ततः ।
सिंहासनाधिरोहाय क्षिप्रमासन् समुद्यताः ॥२६०॥

श्रीयशस्करदेवस्य वंश्या एत इति श्रुतिः ।
तदन्वयेऽभूत् सर्वेषां राज्यौत्सुक्यप्रदायिनी ॥२६१॥

अत एवाऽभजत् क्रोधं तेषां कुसुहृदुक्तिभिः ।
सा वासनाऽन्तस्संलीना सदाचारानपेक्षिणाम् ॥२६२॥

कथं न प्रतिभात्वेषा सङ्गयाऽपि कुपद्धतिः ।
भारिकस्य कुले जातो लवटस्य हि सोऽधमः ॥२६३॥

क्षेमदेवाभिधानस्य पुत्रोऽप्यल्पनियोगिनः ।
क्रूराशयत्वमभजन्महासाहसिकोचितम् ॥२६४॥

चौर्येण स्वर्णभृङ्गारं हृतवान् भूपतेर्गृहात् ।
संभावितोऽपि गाम्भीर्यान्नाऽज्ञायि स किलेङ्गितैः ॥२६५॥

सासिधेनुर्निरुष्णीषो विहसन्नखिलान् स्मयात् ।
राजपुत्र इवाऽत्यल्पं स त्रैलोक्यममन्यत ॥२६६॥

तस्य चिन्ता काचिदासीत् सदा दोलायतोऽङ्गुलीः ।
या राज्यहेतुः क्रूरेण फलेन समभाव्यत ॥२६७॥

---

261 b) C S′ $I_3$ °यत (for एत)

263. a) C S′ व॰ (for न). C S′ °भात्वेषा (for °भात्वेषा).

266 a) C S′ सामि° (for सासि°). C S′ °रुष्णीषे (for °रुष्णीषो). —b) C S′ स्मयन् (for स्मयात् ).

तद्गिरा निजसंकल्पादपि ते राज्यलालसाः ।
नृपं जीवन्तमाकर्ण्य ततोऽभूवन् हतस्पृहाः ॥२६८॥

न स्फुरन् न च संमीलन् न वा सुप्त इवाऽनिशम् ।
तेषां चेतसि संकल्पस्तदाप्रभृति सोऽभवत् ॥२६९॥

असुस्थिरादरेणाऽथ शनकैः पृथिवीभुजा ।
निन्यिरे मध्यमां वृत्तिं राजस्थानान्निवार्य ते ॥२७०॥

प्रकृत्या रूक्षवाग् राजा सर्वेषामेव सर्वदा ।
तेषामप्यकरोदत्राऽन्तरे मर्मस्पृशः कथाः ॥२७१॥

ते राज्ये हर्षभूभर्तुः पितरि प्रमयं गते ।
मातुस्तारुण्यमत्ताया विधवाया गृहेऽवसन् ॥२७२॥

तैर्मय्यामत्तको नाम शस्त्रभृत् प्रातिवेश्मिकः ।
सुहृद्धतोऽथ विश्वस्तो जननीजारशङ्कया ॥२७३॥

असतीमपि किं नैते न्यगृह्णन्निति भूपतिः ।
विचार्य कोपात् तन्मातुर्नासाच्छेदमकारयत् ॥२७४॥

तां कथां स नृपस्तेषां परोक्षमुदघोषयत् ।
क पुत्राश्छिन्ननासाया वदन्नित्यन्वियेष च ॥२७५॥

बृहद्गञ्जादिगञ्जेशं कृत्वा कार्यान्न्यवारयत् ।
स कायस्थकृतान्तत्वं भजन् सङ्गमपि प्रभुः ॥२७६॥

पीडितस्तेन रौद्रेण निजोऽथ गणनापतिः ।
कोशोत्पत्त्यपहर्तारं तं नृपाय न्यवेदयत् ॥२७७॥

---

269. d) St °स्तदा प्रभृ° (for °स्तदाप्रभृ°).
273. a) D C S′ °र्मंधासत्तको (for °र्मय्यामत्तको).
274. d) C S′ °र्नाम°; $I_3$ $P_3$ °र्नामा° (for °र्नासा°).
275. c) SA $P_2$ °याच्छि°, C °त्र्याच्छि° (for °त्राश्छि°)
276. c) C S′ °यस्थ कृ° (for °यस्थकृ°)

प्रवेशभागिकपदे हृते राज्ञा रुषा ततः ।
स क्रूरो रड्डच्छुड्डादीन् प्रैरयत् पूर्वचिन्तिते ॥२७८॥

जिघांसवस्ते नृपतिं प्रसङ्गापेक्षिणः परैः ।
समगंसत दुष्प्रज्ञैरथ हंसरथादिभिः ॥२७९॥

प्रजिहीर्षुभिरुर्वीशं पीतकोशैः समेत्य तैः ।
चतुष्पञ्चानि वर्षाणि नाऽवाप्यवसरः क्वचित् ॥२८०॥

बहुभिर्बहुधा भिन्नैर्बहुकालं विचिन्तितः ।
न भेदमगमन्मन्त्रः स चित्रं लोकदुष्कृतैः ॥२८१॥

तवैतां कुरुते शश्वन्नृपो मर्मस्पृशं कथाम् ।
इति प्रत्येकमुक्त्वा ते विरागं पार्थिवेऽभजन् ॥२८२॥

तैरुरःपार्श्वपृष्ठादि गूढैर्वर्मभिरायसैः ।
प्रच्छाद्य पार्थिवोऽजस्रमनुसस्रे जिघांसुभिः ॥२८३॥

असहो विरहं सोढुं यां प्रसादयितुं न काम् ।
राजाऽपि संदधे चेष्टां प्राक् प्राकृतभुजंगवत् ॥२८४॥

स्वभाववैपरीत्येन नाशचिह्नेन स स्थिराम् ।
जयमत्या सहाऽप्रीतिं तदाऽऽदाद् वत्सरद्वयम् ॥२८५॥

रक्षां भिक्षाचरस्याऽऽहुर्निमित्तं तत्र केचन ।
केचित् तु विद्युत्सदृशी प्रेम्णां तरलवृत्तिताम् ॥२८६॥

---

279. b) C S′ °सङ्गप्रेक्षि° (for °सङ्गापेक्षि°).

282 b) $P_2$ °स्पृशा (for °स्पृश).

283. c) $I_3$ $P_{1-3}$ SA C पार्थिवे° (for पार्थिवो°)

285. c) S′ C $I_3$ $P_{1,3}$ SA महा° (for सहा°)

286 c) SA $P_{1-3}$ °विद्रुत्स° (for °विद्युत्स°).

अथ वर्तुलभूभर्तुरात्मजा विज्जलाभिधा ।
कृतपाणिग्रहाऽस्याऽगाद् वाल्लभ्य वसुधाभुजः ॥२८७॥

सग्रामपाले नृपतौ तस्मिन्नवसरे मृते ।
तत्सूनुः सोमपालाख्यः पित्र्यं राज्यं समादधे ॥२८८॥

राज्यार्हमग्रजं बद्ध्वा सोऽभ्यषिच्यत चाक्रिकैः ।
इति कोपान्नरेन्द्रोऽभूत् क्रुध्यन् राजपुरीं प्रति ॥२८९॥

लक्ष्मीस्थैर्यप्रतिभुवः पुत्र्याः पाणिमजिग्रहत् ।
तं प्रेष्ठं सर्वलोकानां श्रेष्ठं सर्वक्षमाभुजाम् ॥२९०॥

अर्थिचिन्तामणेस्तस्य प्रीणतो निखिलाः प्रजाः ।
नानाव्ययोर्जितो रेजे पश्चिमः स महोत्सवः ॥२९१॥

याते जामातरि क्ष्माभृच्चक्रे निखिलतन्त्रिणः ।
निवृत्तान् किमपि क्रुध्यन् दुभ्रक्षूंस्तु व्यसर्जयत् ॥२९२॥

भोगसेनोऽपि भूपेन काले तस्मिन् समन्युना ।
निवारितो द्वारकार्यात् सवैरः समपद्यत ॥२९३॥

विक्रान्तः स हि कार्यस्थो निर्जिताखिलडामरः ।
सुस्सलक्ष्मापतिं जेतुं प्रतस्थे लोहर पुरा ॥२९४॥

वात्सल्यमिश्रवैरेण वारितोऽथ महीभुजा ।
तत्परीवादमकरोच्चुक्रोधाऽवेत्य तच्च सः ॥२९५॥

---

287. c) St $I_3$ $P_{1-3}$ °ग्रहस्या° (for °ग्रहाऽस्या°).

288. d) C S′ पितृरा° (for पित्र्य रा°).

290. D St SA $P_{1-3}$ $I_3$ om *cd*.

292 c) SL निवृत्ती , D $I_3$ $P_{1-3}$ SA निर्वृत्ती ; C S′ St निर्वृत्तीन् (for निवृत्तान् suggested) —d) SA $I_3$ $P_{1,2}$ दुद्दु °(for दुभ्रु°).

294 b) C S′ °त खिल° [sic] (for °ताखिल°).

295. a) $I_3$ $P_{1-3}$ D SA °मिश्र वै° (for °मिश्रवै°).

प्रावेशयद् रङ्गच्छुङ्गमुखान् स समयान्तरम् ।
तमादिसुहृदं वीर तदा राज्ञा विमानितम् ॥२९६॥

विमानिता विशालेच्छाः संहता हतवृत्तयः ।
न ते बहिष्कृतास्तेन यमराष्ट्रं जिगीषता ॥२९७॥

तान् भोगसेनविन्यस्तसद्भावान् कुटिलाशयः ।
सङ्गो निनिन्द वीरत्वात् तं जानन् सरलान्तरम् ॥२९८॥

ऊचे चाऽद्यैव हित्वाऽपि प्राणान् व्यापाद्यतां नृपः ।
भोगसेनोऽन्यथा भेदं कुर्यादगहनाशयः ॥२९९॥

अन्यथाऽभून्न सङ्गोक्तं भोगसेनो यदब्रवीत् ।
किंचिद् रहोऽस्मि वक्तेति नृपतिं भेदलालसः ॥३००॥

स तु किं वक्षि न द्वारं तव दद्यामिति ब्रुवन् ।
दुध्रुक्षुपक्षप्रणयं निन्ये तमवमानयन् ॥३०१॥

प्रबोधाधायिनो द्वेष्टि नियतिप्रणयीभवन् ।
तपात्ययाहनिद्रान्त इव जन्तुर्गतस्मृतिः ॥३०२॥

तन्त्रिणो यामिका भूत्वा स्वस्मिन् वारे ततोऽविशन् ।
ते राजधानीं संनद्धैः स्वसैन्यैः सह संहताः ॥३०३॥

यामिन्यां यं वयं हन्मस्तं हतेत्यभिधाय च ।
प्रावेशयन्न्यस्तचिह्नांश्चण्डालान् मण्डपान्तरम् ॥३०४॥

---

296. a) St $I_3$ $P_1$ प्रवेशयन्, D $P_{2,3}$ प्रावेशयन् (for प्रावेशयद्) —b) C S′ समया तत. (for समयान्तरम्).

300 b) C S′ °सेने (for °सेनो). —c) C S′ द्रोहेऽस्मि (for रहोऽस्मि).

301 a) C S′ दक्षिण° (for वक्षि न) —c) $P_{1-3}$ SA दुद्रु° (for दुध्रु°).

302 c) D °द्रार्त (for °द्रान्त).

304 b) S′ हृते° (for हते°)

भुक्तोत्तरं स्थिते राज्ञि ते बाह्ये मण्डपे स्थिताः ।
सरोषो नृप इत्युक्त्वा सेवकोत्सारणं व्यधुः ॥३०५॥

राजा च बिज्जलावेश्म यियासुर्मण्डपान्तरात् ।
दीपिकाभिः कृतालोको निर्ययौ मदनालसः ॥३०६॥

मध्यमं मण्डपं तस्मिन् प्राप्ते स्वल्पैः सहानुगैः ।
तत्यक्तं मण्डपं सङ्गो रुद्ध्वाऽन्यानरुणज्जनान् ॥३०७॥

अन्यैरप्यग्रिमे द्वारे निरुद्धे सर्व एव ते ।
जिघांसवः समुत्थाय नृपतिं पर्यवारयन् ॥३०८॥

विज्ञप्तिदम्भादेकेन रुद्धमग्रे निषेदुषा ।
तं द्विजो दिन्नजस्तेज शस्त्र्या कृष्टकचोऽभिनत् ॥३०९॥

ततः काञ्चनगौराणि तस्याङ्गान्यसिधेनवः ।
बह्वयः सुमेरुशृङ्गाणि महोरग्य इवाऽऽविशन् ॥३१०॥

स द्रोहो द्रोह इत्युक्त्वा केशान् कृष्टान् विमोचयन् ।
क्रीडाशस्त्र्याः कषां रुद्धमुष्टिं दन्तैर्व्यपाटयत् ॥३११॥

सुजनाकरनामा हि भृत्यः कट्टारकं वहन् ।
तस्याऽन्तिकात् पलायिष्ट प्रहरत्सु विरोधिषु ॥३१२॥

अतो बालोचितां लघ्वीं क्षुरिकां स चकर्ष ताम् ।
मुष्टावर्गलिता कोशात् सा कृच्छ्रेण विनिर्ययौ ॥३१३॥

---

305. c) C S′ सरोष° (for सरोषो)

307. c) C $P_3$ मव्यम, $P_2$ मध्यमे (for तत्यक्त)

309 c) $SA_1$ (before corr ) दिन्नजस्तेज्ज , S′ दीर्घसतेजा , C दीर्घसस्तेजा , $I_3$ दिर्नंजस्तेज (for दिन्नजस्तेज )

310 d) St [sic] महोरम्य (for महोरग्य).

311. d) C S′ °पादयत् (for °पाटयत् ).

313. c) C S′ $P_{1,3}$ कीला°; $I_3$ कीना° (for कोशा°).

निर्यातान्त्रः शत्रुभिस्तैस्त्यक्तकेशो बबन्ध तम् ।
धम्मिल्लमथ तां शस्त्री जानुद्वन्द्वान्तरर्पयन् ॥३१४॥

नदित्वा प्रहरंस्तेज ताद्दग्वीर्योऽपि सोऽभवत् ।
येन क्षितौ निपतितः सर्वमर्मस्विवाऽऽहतः ॥३१५॥

अभिनच्च ततो रड्ड प्रहरन्तं च पृष्ठतः ।
नदन् सिंह इव व्यड्डं परिवृत्य व्यदारयत् ॥३१६॥

अन्यं च शस्त्रिणं कंचित् सवर्माणमपातयत् ।
विवेष्टमनो यः प्राणैरचिरेण व्ययुज्यत ॥३१७॥

लब्धान्तरे प्रवासाय तस्मिन् धावति मण्डपः ।
रक्षिभिर्भूमिपालोऽयमित्यबुद्ध्वा कवाटितः ॥३१८॥

द्वारमन्यत् प्रसर्पन् स क्व प्रयासीति जल्पता ।
छुड्डन रुद्धमार्गेण खड्गपातैरहन्यत ॥३१९॥

भोगसेन ततोऽपश्यद् द्वारस्याऽन्ते समुत्थितम् ।
दारुतूलिकया भित्तिमालिखन्तं पराङ्मुखम् ॥३२०॥

भोगसेनेक्षसे कस्मादमुं त्वमिति वादिनम् ।
सोऽव्यक्तं किमपि ह्रीतः प्रधावन्तं जगाद तम् ॥३२१॥

रय्यावट्टाभिधो दीपधरस्तिष्ठन् निरायुधः ।
अयोदीपिकयाऽऽरब्धयुद्धस्तैर्विक्षतोऽपतत् ॥३२२॥

---

314 d) $P_3$ °रुद्धानु° (for °द्वन्द्वान्त°)

315. a) C S′ न हित्वा, $P_1$ नशित्वा (for नदित्वा) C S′ °स्तेजस्ता°, D °स्तेजस्ता° (for °स्तेज ता°).

316. d) C °व्यड्य (for °वृत्य)

318. b) $P_3$ मण्डपात् (for मण्डप ) —d) C S′ कपा° (for कवा°)

321 a) C S′ $I_3$ $P_2$ क्षमे (for °क्षसे).

चाम्पेय सोमपालाख्यराजपुत्रः क्षताहितः।
प्रहारैः प्राप्तवैक्लव्यो न गर्ह्याचारतामगात् ॥३२३॥

पौत्रः श्रीशूरपालस्य राजकापत्यमज्जक।
विदद्रौ श्वेव संछाद्य शस्त्री पुच्छच्छटोपमाम् ॥३२४॥

ततः प्रधावन् प्रग्रीवमारुरुक्षुः क्षितीश्वरः।
निकृत्तजानुश्चण्डालैरालिलिङ्ग वसुंधराम् ॥३२५॥

तत्पृष्ठे स्वं क्षिपन् देहं प्रहारैर्जर्जरीकृतः।
शृङ्गारनामा कायस्थो निर्द्रोहो वारितोऽरिभिः ॥३२६॥

पुनरुत्थातुकामस्य सर्वे शस्त्रावलीर्द्विषः।
न्यपातयंस्तस्य काल्या नीलाब्जवरणस्रजम् ॥३२७॥

तिष्ठेत् कदाचिद् धूर्तोऽयमविपन्नो विपन्नवत्।
कंधरामधमः सङ्गस्तस्येति स्वयमच्छिनत् ॥३२८॥

कृतं पदापहरणं यस्य सोऽहमिति ब्रुवन्।
छित्त्वाऽङ्गुलीश्चकर्षाऽपि रत्नाङ्कामूर्मिकावलीम् ॥३२९॥

एकपादस्थितोपानत्स्रस्तमाल्यैः शिरोरुहैः।
छन्नवक्त्रः स ददृशे सुप्तो दीर्घभुजः क्षितौ ॥३३०॥

पर्याप्तयाऽस्य पर्यन्ते वीरवृत्त्या महौजसः।
निर्दोषतामीषदगान्निस्त्रिंशत्वं जनान् प्रति ॥३३१॥

सेवकः शूरटो नाम पूत्कुर्वन् द्रोहमुच्चकैः।
निर्गत्य भोगसेनेन बहिः क्रोधान्निपातितः ॥३३२॥

---

323. d) C ग्राह्या° (for गर्ह्या°).

332. a) C S' शूरजो° (for शूरटो)

प्रस्थितो दयितावासं स दिङ्मोहवशादिव।
पन्थानं पृथिवीनाथः काल्या जग्राह वेश्मनि ॥३३३॥

राज्योद्याने नृपतिमधुपा भोगकिञ्जल्कलोला-
श्श्रेतो नानावसनकुसुमश्रेणिभिः प्रीणयन्तः।
हा धिग्दैवानिलतरलया पात्यमाना नियत्या
वल्ल्येवैते किमपि सहसा दृष्टनष्टा भवन्ति ॥३३४॥

तिर्यग्भ्यस्त्रिजगज्जयी परिभवं लङ्केश्वरो लब्धवान्
प्रापाऽशेषनृपोत्तमः कुरुपतिः पादाहतिं मूर्धनि।
इत्यन्ते बहुमानहृत्परिभवः सर्वस्य सामान्यवत्
तत्को नाम भवेन्महानहमिति ध्यायन् धृताहंक्रियः ॥३३५॥

परासुमहितैस्त्यक्तं तमनाथमिव प्रभुम्।
नग्नं हुताशसात्कर्तुं स्वच्छत्रग्राहिणोऽनयन् ॥३३६॥

भुजौ कण्ठे गृहीत्वैकः कराभ्यां चरणौ परः।
तं भुग्नग्रीवमालोलकुन्तलं रुधिरोक्षितम् ॥३३७॥

सशूत्कारव्रणं नग्नमनाथमिव पार्थिवम्।
राजधान्या विनिष्कृष्टं न्यधत्तां पितृकानने ॥३३८॥

महासरिद्वितस्ताम्भस्संभेदद्वीपभूतले।
अह्नाय वह्निसंस्कारं ते भीतास्तस्य चक्रिरे ॥३३९॥

न हतो नाऽपि निर्दग्धः स केनाऽपि व्यलोक्यत।
उड्डीयेव गतस्त्वाशु नेत्रनिर्विषयोऽभवत् ॥३४०॥

---

334. b) $P_2$ °कुमुद° (for °कुसुम°).

336 a) $I_3$ $P_2$ पुरा° (for परा°). S′ C °स्त्यक्तु (for °स्त्यक्त).

338. a) C सथूत्कार°, S′ सपूत्कार° (for सशूत्कार°). After this *v.* D $P_3$ add युग्मम्

339 d) C S′ भूता° (for भीता°).

व्यतीतेन स वर्षैकचत्वारिंशतमायुषा ।
सप्ताशीत्यब्दपौषस्य शुक्लषष्ठ्यां व्ययुज्यत ॥३४१॥

चक्रेऽथ सासिकवचो रङ्ग· शोणितमण्डितः ।
श्मशानाश्मनि वेताल इव सिंहासने पदम् ॥३४२॥

. . .. . . . . . . ....... .. ... ... ।
सकक्षबद्धमूलानामाद्यानां तन्न दिद्युते ॥३४३॥

तस्याऽवरोहतः सिंहासनाद् योद्धुं पुरो युधि ।
विक्रामन्तो बन्धुभृत्या युद्धभूमिमभूषयन् ॥३४४॥

तन्त्रिणौ वट्टपट्टाख्यौ युद्ध्वा तद्बान्धवौ चिरम् ।
योधाश्च कट्टसूर्याद्याः सिंहद्वारेऽपतन् हताः ॥३४५॥

रणरङ्गनटो नृत्यन्निव राजगृहाङ्गने ।
सखड्गखेटको रङ्गः खण्डयन्नहितान् बभौ ॥३४६॥

दिशन् विजयसंदेहमहितानां क्षणे क्षणे ।
प्रहारैः सुबहून् भित्त्वा स चिरेणाऽपतद् रणे ॥३४७॥

राजद्रोहोचितं तस्य निहतस्याऽपि निग्रहम् ।
वैशसत्यक्तमर्यादो गर्गः कोपादकारयत् ॥३४८॥

दिद्दामठान्तिके व्यङ्ग पौरैर्भस्माश्मवर्षिभिः ।
अवस्करप्रणालान्तर्मग्नवक्त्रो न्यपात्यत ॥३४९॥

---

343. C S′ om. this *v.* St D SA $P_{1-3}$ $I_3$ om. upto सकक्ष in *c.* SL om. *ab.* —d) $P_{1,2}$ °त्याना (for °द्यानां). SA $I_3$ $P_{1,2}$ तन्निदि° (for तन्न दि°)

345. c) $P_1$ कण्ठ° (for कट्ट°).

348. d) $SA_1$ (before corr.) $P_{2,3}$ गग्ग· (for गर्ग )

349. a) C S′ °ठान्तिको (for °ठान्तिके).

ते गुल्फदामभिः कृष्टाः स्थाने स्थाने प्रभुद्रुहः।
तत्क्षणं लोकथूत्कारपूजां कृत्योचितां दधुः ॥३५०॥

पलाय्य प्रययुः क्वाऽपि सङ्ग हंसरथादयः।
मरणाभ्यधिकां कंचित् कालं सोढुं विपद्व्यथाम् ॥३५१॥

दृप्यन् पराजितं गर्गं नष्टे तदनुजे विदन्।
भोगसेनोऽथ तां वार्तामश्टणोत् प्रलयोपमाम् ॥३५२॥

व्यावृत्य प्रत्यवस्थातुकामः पश्यन् पलायिनः।
योधान्स्वैः सहितः कैश्चित् ततः क्वाऽपि भयादगात् ॥३५३॥

इत्थं निहतविध्वस्तनायका द्रोग्धृसंहतिः।
स्वदोर्मात्रसहायेन गर्गचन्द्रेण सा कृता ॥३५४॥

सत्त्वं साहससिद्धिं च नेतिहासेष्वपि क्वचित्।
अश्रौषं तादृशं यादृक् तस्याऽऽस्ते स प्रतापिनः ॥३५५॥

निशां प्रहरमह्नश्च राज्यं कृत्वा स लब्धवान्।
द्रोहकृच्छड्खराजाख्यां गतिं कुकृतिनामगात् ॥३५६॥

यशस्करकुले जन्म द्रोग्धृभिस्तैः प्रमाणितम्।
क्षणभङ्ग्यभजद् राज्यं यस्माद् वर्णटदेववत् ॥३५७॥

दावोद्दीपनकूटयन्त्रघटनैः सिंहादिसंहारिणो
 यान्त्याकस्मिकगण्डशैलपतनैरन्तं किराता वने।
एकेनैव ननु प्रधावति जनः सर्वोऽपि मृत्योः पथा
 हन्ताऽहं निहतोऽयमेष तु मितं कालं विभेदग्रहः ॥३५८॥

---

351. [b]) C S′ सङ्गहस° (for सङ्ग हस°) —[c]) $P_3$ काचित् (for कचित्).
352. [a]) C S′ दृप्त परा° (for दृप्यन् परा°). $SA_1$ (before corr.) $P_{2,3}$ गग्ग (for गर्गं).
356. $P_1$ om. *ab.* —[c]) C S′ °कृच्छ्र ख° (for °कृच्छड्ख°).
357. [c]) SL St.Tr. °भजन् (for °भजद्).
358. [d]) C S′ subst. हन्ता हन्ति हतोऽयमेष तु वृथा कालस्य भेदग्रहः (for *d*). $SA_1$ gloss अहं हन्ता (for हन्ताऽहं).

राजधान्यन्तिके क्षितिकाख्यायाः सरितस्तटे ।
पृथ्वीहरश्चकाराऽऽजावशेषसुभटक्षयम् ॥७३२॥

तिलके विजयेशस्थेऽप्यगृह्णन्नेत्य डामराः ।
महासरित्तटे युद्धं खड्वीहोलडौकसः ॥७३३॥

ते रुद्धनगरा दाहं क्वाऽपि क्वाऽपि च लुण्ठनम् ।
वास्तव्यानां विदधिरे विनदन्तो दिवानिशम् ॥७३४॥

निर्यत्सतूर्यपृतनाः प्रविशच्छस्त्रविक्षताः ।
क्रन्दद्धतार्तनिवहा· प्रधावद्भग्नसैनिकाः ॥७३५॥

प्रसरत्प्रेक्षिनिवहा वहदाशुगभारिकाः ।
संचार्यमाणसंनाहाः कृष्यमाणतुरंगमाः ॥७३६॥

आसन्नशान्तसंमर्दप्रसरत्पांसवोऽनिशम् ।
दिने दिने राजपथा उपप्लवविश्रृङ्खलाः ॥७३७॥

प्रतिप्रत्यूषमायात्सु सर्वारम्भेण वैरिषु ।
अद्य ध्रुवं जितो राजेत्यशङ्कि प्रतिवासरम् ॥७३८॥

धीरः कः सुस्सलादन्यो न यः प्रत्यभियोगिनाम् ।
कृच्छ्रेणाऽपि स्वराष्ट्रेण क्रष्टुं धैर्यादपार्यत ॥७३९॥

व्रणपट्टाञ्जनं शल्योद्धारं पथ्यधनार्पणम् ।
शस्त्रक्षतानां सततं कारयन् स व्यलोक्यत ॥७४०॥

---

733. a) $P_{1,3}$ तिलक (for तिलके) —b) $P_{2,3}$ प्रगृह्ण°, S′ °थ गृह्ण° (for °प्यगृह्ण°) —c) C S′ D महत्सरि°, $P_{1,3}$ महिसरि° (for महासरि°). —d) D $P_1$ $I_3$ खड्गवी°; C स्वड्गाची°; $P_{2,3}$ खड्गावी°, S′ स्वड्गची° (for खड्वी°). SA °होलळौ°, $P_3$ °हौलडौ° (for °होलडो°)

735 c) C S′ °द्धतात्म°, St °द्धतास्र°; $P_{1-3}$ °द्धतान्त° (for °द्धतार्त°).

736. a) C S′ °त्पाक्षि° (for °त्प्रेक्षि°). —b) SA व्यहद° (for वहदा°). C S′ °तारि° (for °भारि°).

737 a) C S′ °शत°, $P_{2\,3}$ °मान्त° (for °शान्त°) After this *v* तिलकम् ,

738 b) $P_{1,3}$ $I_3$ °म्भेन (for °म्भेण). —c) $P_3$ क्षिति° (for जितो)

739 c) $P_{1,3}$ सुरा° (for स्वरा°) —d) C दर्पादु° (for धैर्याद°).

740 a) C S′ °पट्यञ्ज° (for °पट्टाञ्ज°). —b) C S′ यद्रा (for पथ्य°)

प्रवासवेतनप्रीतिदायभैषज्यदत्तिभिः ।
शस्त्रिलोके नरपतेर्निस्संख्योऽभूद् धनव्ययः ॥७४१॥

युद्ध एव विपन्नानां क्षतानां च स्ववेश्मसु ।
नित्यं नरतुरंगाणां सहस्राणि क्षयं ययुः ॥७४२॥

तुरंगबहलैर्हन्यमाना नृपबलैस्ततः ।
लाहरा मल्लकोष्ठाद्या मन्दोद्रेकत्वमाययुः ॥७४३॥

भिन्नैराभ्यन्तरैरेव दत्तमन्त्राः सुरेश्वरीम् ।
ते निन्युर्भिक्षुमल्पेन तन्मार्गेण युयुत्सवः ॥७४४॥

सेतुना स्वल्पपार्श्वेन धन्विप्रायैः सरोऽन्तरे ।
अवापि तैर्जयोऽमोचि वाजिभ्यश्च भयं रणे ॥७४५॥

द्रोग्धाऽथ कम्पनेशः स निवसन् विजयेश्वरे ।
बलितां डामरान्निन्ये मन्दोद्रेकं स्फुरन् रणे ॥७४६॥

लवन्यलोको मा ज्ञासीदशक्तिं मेऽथ गच्छतः ।
पृष्ठे निपत्य मा कार्षीद् व्यथां चेति विचिन्तयन् ॥७४७॥

स प्रभावं दर्शयितुं प्रातस्य विजयेश्वरम् ।
अज्जराजस्य सेनायां व्यावृत्य प्रस्थितोऽभवत् ॥७४८॥

सार्धां शतद्वयीं तस्य योधानां हतवानपि ।
संत्यज्य विजयक्षेत्रं द्रोहकृन्नगरं ययौ ॥७४९॥

---

741. c) C S′ शश्वल्लो° (for शस्त्रिलो°)

742 c) All Mss except D $P_3$ read °गानां (for °गाणा)

745 cd) C S′ °योऽमीभिर्वा°, St ( before corr ) °यो मोचिवा° ( for °योऽमोचि वा°).

746 a) $SA_1$ (before corr ) कम्पनेशस्य (for कम्पनेश. स)

747 d) C S′ वृथा (for व्यथा).

748. c) C S′ अज° (for अज्ज°).

749. a) C S′ सार्द्ध शतद्वय (for सार्धां शतद्वयीं)

पथि नाऽन्वसरन् भीत्या भयात् तं डामराः क्वचित् ।
नदन्तोऽद्रिशिरोरूढा मार्गान् सर्वांश्च तत्यजुः ॥७५०॥

त्यक्त्वा मडवराज्य स प्रविष्टो व्यसनातुरम् ।
पूर्वचेष्टां स्मरन् भूपं जहास कृतसत्क्रियम् ॥७५१॥

इतरामात्यवत्स्थामस्थितोऽथ न निजोचितम् ।
रणे प्रादर्शयत् किंचित् साक्षिभूत इव स्थितः ॥७५२॥

ततो मडवराज्यात् ते समस्ता एव डामराः ।
अभ्येत्य प्रत्यपद्यन्त तां महासरितस्तटीम् ॥७५३॥

उपायाः सामभेदाद्या रिपुचक्रे प्रयोजिताः ।
राज्ञो विफलतां जग्मुर्बहिरात्तैः प्रकाशिताः ॥७५४॥

क्रान्ततत्तन्महीपालमण्डलस्याऽपि भूपतेः ।
फलं दोर्विक्रमस्याऽग्र्यमासीन्नगररक्षणम् ॥७५५॥

अमरेशे द्वारपतिः सार्धं तस्थौ नृपात्मजैः ।
राजानवाटिकोपान्ते राजस्थानीयमन्त्रिणः ॥७५६॥

दूरद्वीपान्तरगता इव स्वीचक्रिरे नृपात् ।
ते प्रवासधनं भूरि न चाऽयुध्यन्त कुत्रचित् ॥७५७॥

कटका विद्विषां सर्वे पर्यायेण जयाजयौ ।
लेभिरे विजयादन्यत्र तु पृथ्वीहरः क्वचित् ॥७५८॥

---

750. b) $P_2$ $I_3$ °यात्तं (for °यात् त).
751. b) C S′ $P_{2,3}$ °नान्तरम् (for °नातुरम्). —c) C S′ °चेष्ट (for °चेष्टां).
752. b) C S′ °थाजो नि° (for °थ न नि°)
753. a) C S′ $I_3$ °राज्य (for °राज्यात्). —c) $SA_1$ (before corr) °पद्यत (for °पद्यन्त).
756. c) $P_{2,3}$ °नुवाटि° (for °नवाटि°). After this v. $P_1$ $I_3$ $SA_1$ add युग्मम्.
757. a) C S′ °प्रपासद° (for °प्रवासध°).

मधुमत्तेन तेनाऽऽजौ वेतालेनेव वल्गता ।
प्रायो वरा वराः सर्वे ग्रस्ता नृपचमूभटाः ॥७५९॥

उदयस्येच्छटिकुलोद्भूतस्यैकस्य पप्रथे ।
युवदेश्यस्याऽपि शौर्यमेकस्मिंस्तु तदाहवे ॥७६०॥

पृथ्वीहरस्याऽपजह्रे द्वन्द्वयुद्धाभिमानिना ।
प्रहृत्य कृष्टकूर्चेन कराग्रेनाऽसिवल्लरी ॥७६१॥

युद्धे पुरोपकण्ठेषु वर्तमाने शराहताः ।
स्त्रीबालाद्या अपि वधं प्रमादात् प्रतिपेदिरे ॥७६२॥

एवं जनक्षये घोरे वर्धमाने किमप्यभूत् ।
अनुत्साहान्नृपो गेहादपि निर्गन्तुमक्षमः ॥७६३॥

तस्मिन्निरुद्धसंचारे सोमपालस्तदन्तरे ।
अलुण्ठयच्चाऽट्टलिका लब्धरन्ध्रो ददाह च ॥७६४॥

सिंहे गजाहवव्यग्रे तद्गुहाग्रपरिग्रहे ।
समयो ग्रामगोमायोः पौरुषस्याऽपरोऽस्तु कः ॥७६५॥

राष्ट्रद्वयोपमर्देन राजा निस्सह्दशेन सः ।
तेन त्रपाविधेयोऽभूत् स्वमपि द्रष्टुमक्षमः ॥७६६॥

सर्वानौचित्यबहलः सर्वव्यसनदुस्सहः ।
सर्वदुःखमयः कालस्तस्याऽवर्तत कोऽपि सः ॥७६७॥

---

759 b) $I_3$ $P_{1,3}$ S′ C D °नैव (for °नेव) C वल्गुना (for वल्गता) —c) D C S′ वरावरा· (for वरा वरा·).

763. c) C S′ व्यूहा° (for गेहा°)

764. c) All Mss except St read °च्चाटलि° (for °च्चाऽट्टलि°, cf. vv. viii. 581, 831, 1945)

765. d) C S′ पुरोऽस्तु, $P_2$ परोस्तु (for [अ]परोऽस्तु)

तथाऽप्यस्खलिते तस्मिन् हितव्याजाद्धितापहः ।
राजानवाटिकाविप्रैः प्रायश्चक्रे विरागिभिः ॥७६८॥

प्रार्थयन्ते स्म ते युद्धे तटस्थास्तव मन्त्रिणः ।
गृहीत्वा नीविरेतेभ्यो लोहराद्रौ विसृज्यताम् ॥७६९॥

न चेद् व्याप्य इवैतस्मिन् व्यसने स्थायितां गते ।
को दद्यान्नः परैर्नीतं प्रत्यासन्नं शरत्फलम् ॥७७०॥

न प्रत्यभैत्सीत् ताटस्थ्यं यत्कालापेक्षया नृपः ।
तस्मिंस्तैर्दर्शिते शङ्कां निखिला मन्त्रिणो दधुः ॥७७१॥

शक्तिस्तृणं कुब्जयितुं न यस्य स तदाऽर्थिभिः ।
विसूत्रव्यवहारत्वं निन्ये राजा शठद्विजैः ॥७७२॥

कर्मस्थानोपजीव्युग्रपारिषद्यादिसंकुला ।
तत्पार्श्वात् प्रययौ वृद्धिमन्या सेनेव वैरिणाम् ॥७७३॥

तत्सान्त्वनक्षणे तैस्तैः प्रमादैरुत्थितैरगात् ।
देशो व्याकुलतां कृच्छ्रं लुण्ठिश्चाऽघटतोत्कटा ॥७७४॥

अदृष्टपार्थिवास्थानैः शठैरव्यवहारिभिः ।
ऊचे तैः सान्त्वयन् राजा दुस्स्थितस्तत्तदप्रियम् ॥७७५॥

लवन्यविप्लवाद् राज्ञः सोऽधिको विप्लवोऽभवत् ।
गलरोगः पादरोगादिव तीव्रव्यथावहः ॥७७६॥

---

769. b) $P_{1-3}$ तदस्था° (for तटस्था°).

770 a) D suggests चेद्या° ( for चेद् व्या° ). —c) D ( before suggestion) St $P_{1-3}$ $I_3$ C S′ को दव्यान्न, SL कोप्यदान्न (for को दद्यान्न suggested with D)

772. b) D suggests येषा (for यस्य).

773. a) $P_{2,3}$ °स्थाने° (for °स्थानो°).

774 d) $P_{1-3}$ $I_3$ SA °घटितो° (for °घटतो°)

776. a) C S′ राज्ञा (for राज्ञः)

काञ्चनोत्कोचदानेन तन्मध्येऽधिकचक्रिकाम् ।
कांश्चित् स्वीकृत्य स प्रायं कथंचिद् विन्यवीवरत् ॥७७७॥

विजयो वर्णसोमादिशस्त्रिवंश्यो हठात् पुरम् ।
प्रविशन् भिक्षुसेनानीरश्वारोहैरहन्यत ॥७७८॥

तेनाऽतिरभसात् स्थानं भित्त्वा प्रविशता पुरम् ।
प्रायशः कृत एवाऽभूत् तदा राज्यविपर्ययः ॥७७९॥

ईषन्मन्दप्रतापेन लवन्येष्वपि भूपतेः ।
पृथ्वीहरेण संधित्सा भेदेच्छोः संप्रकाशिता ॥७८०॥

तस्मिन् धुर्ये जिगीषूणां संधित्सौ भूभुजा समम् ।
द्वयेऽपि सैनिकाः शान्तं तममन्यन्त विप्लवम् ॥७८१॥

राज्ञा नागमठोपान्तमानेतुं प्रहितांस्ततः ।
त्रीनमात्यान् स विश्वस्तानागच्छंश्छद्मनाऽवधीत् ॥७८२॥

धात्रेयो मम्मको गुञ्जो द्विजो रामश्च वारिकः ।
तेषां तिलकसिंहस्य पार्श्वे भृत्यास्त्रयो हताः ॥७८३॥

नीविर्दत्तो गौरकस्तु हतो भूतपतिं स्मरन् ।
दृष्ट्वा त्वाक्रन्दिनि परैः प्रहृतं करुणोज्झितैः ॥७८४॥

तद्वैशसं श्रुतवतो देशः सर्वो विरागकृत् ।
राजधान्यन्तरे राज्ञो दुरुक्तिमुखरोऽभवत् ॥७८५॥

---

777. c) All Mss. except St काचित् (for काश्चित्). —d) $SA_1$ *Prima manu* °वीवृतत् (for °वीवरत्).

780. b) D (before suggestion) $P_{1-3}$ $I_3$ नवन्ये°, SA न वन्ये°; C S' नचान्ये° (for लवन्ये° suggested with St D)

781. b) C S' समाम् (for समम्) —c) S' °योऽपि (for °येऽपि) C S' $P_{1-3}$ $I_3$ °काश्चान्त (for °का शान्त)

782 c) St $I_3$ सुवि°, C $P_{2,3}$ स्ववि° (for स वि°) —d) D C S' $I_3$ $P_1$ °च्छञ्छ°, $P_{2,3}$ °च्छच्छ° (for °च्छश्छ°)

783. b) For वारिक cf vv vi. 345; vii. 781; viii. 861.

784. a) C S' नीविन्दत्ते, $P_2$ नीविमत्तो (for नीविर्दत्तो).

इषे शुक्लचतुर्दश्यां तद्विपर्यस्तमण्डलम् ।
अतिवाहयितुं कष्टं दिनमासीन्महीपतेः ॥७८६॥

अथ संजातवैक्लव्यो नेदमस्तीति चिन्तयन् ।
किं कृत्यमित्यसद्दृशानपि पप्रच्छ भूपतिः ॥७८७॥

विषमे वर्तमानस्य तस्य कश्चित् स नाऽभवत् ।
अन्तर्जहास यो नाऽन्तर्बहिर्यो न तुतोष वा ॥७८८॥

तमपि व्यसनापातं तस्य सोढवतस्ततः ।
अभजन्त क्रमाद् भृत्याः प्रतिपक्षसमाश्रयम् ॥७८९॥

कम्पनेशस्य बिम्बाख्यो भ्राता द्वैमातुरोऽहितान् ।
समाश्रयद् द्वारकार्यं तद्दत्तं प्रत्यपद्यत ॥७९०॥

गूढं जनकसिंहेन दूतान् प्रेषयताऽनिशम् ।
भिक्षवे भ्रातृतनया वाग्दत्ता निरवर्त्यत ॥७९१॥

असिवाजितनुत्रादि हृत्वा भिक्षाचरान्तिकम् ।
अश्ववारा व्यभाव्यन्त प्रयान्तः प्रतिवासरम् ॥७९२॥

किमन्यद् व्यक्तमेवाऽह्नि येऽवसन् पार्थिवान्तिके ।
अलक्ष्यन्ताऽग्रतो भिक्षोस्ते निशायां गतत्रपाः ॥७९३॥

इतो याति ततश्चैति लोको व्यक्तमतन्त्रितः ।
इति राजनि कुण्ठाज्ञे कोऽप्यजृम्भत विप्लवः ॥७९४॥

---

788 S′ om. *b-d* —c) $I_3$ SA °हासं, $P_2$ °हासे (for °हास) —d) All Mss except C om बहिर्यो

789 S′ om *a* —a) C °मतिव्य (for °मपि व्य°) —b) C S′ °स्यासोढ° (for °स्य सोढ°)

790 b) D C द्वैमातुरो हि तान् (for द्वैमातुरोऽहितान् ).

791. d) C S′ °वर्त्तत (for °वर्त्यत).

792. b) $P_2$ कृत्वा, S′ हृता (for हृत्वा). —d) S′ °पान्त (for °यान्त ).

793. a) C S′ व्यर्थं° (for व्यक्त°)

794. a) C S′ यतो (for इतो) S′ $P_{1-3}$ $I_3$ °तश्चेति (for °तश्चैति). —b) $SA_1$ (before corr. in marg ) °तन्द्रित° (for °तन्त्रित ). —d) S′ कोऽश; $I_3$ कोपि (for कोऽप्य°).

डामरैः शरदुत्पत्तौ नीतायां सर्वतस्ततः ।
कान्दिशीकोऽभवल्लोकः कृत्स्नो धनजनोज्झितः ॥७९५॥

प्रयाते मुस्सलनृपे स्वर्णपूर्णामिमां महीम् ।
भिक्षुः कुर्यादिति मृषा लोकस्याऽऽसीद् विनिश्चयः ॥७९६॥

क्व दृष्टा त्यागिता भिक्षो कुतो वा तस्य संपदः ।
परामर्शं नैवेति गतानुगतिको जनः ॥७९७॥

संदृश्यते परिवृता चिरमम्बरेण
रेखा स्वयं न खलु या शशिनो नवस्य ।
तस्यां जनः प्रकुरुते नतिमम्बरार्थी
धिग् लुब्धतामपसरत्सदसद्विचाराम् ॥७९८॥

विजये राजवर्ग्याणां भुग्नग्रीव इवाऽभवत् ।
भिक्षुपक्षजये लोको हृष्यन्नासीद् विशृङ्खलः ॥७९९॥

द्विजकौलेयकन्यायो राजडामरसंघयोः ।
ततोऽन्योन्यभयभ्रश्यद्वैरयोरुदजृम्भत ॥८००॥

राजाभ्यन्तरभेदेन राज्ञः स्थैर्येण चाऽरयः ।
ऐच्छन् पलायितुं भीता अज्ञातान्योन्यनिश्चयाः ॥८०१॥

बान्धवानपि दुभ्रुक्षूनविश्वस्तो विदन् नृपः ।
स्थितौ पलायने वाऽपि श्रद्दधे न स्वजीवितम् ॥८०२॥

तं महाव्यसने वासस्स्वर्णरत्नादिवर्षिणम् ।
नाऽभ्यनन्दन् गृहीतार्था निनिन्दुः शस्त्रिणः परम् ॥८०३॥

---

797. c) C S′ °मर्षणामेति, D $I_3$ $P_{1-3}$ SA °मर्षं नैवेति (for °मर्शं नैवेति suggested with St).

801. b) S′ चारयो (for चाऽरय)

802. a) $P_{1,3}$ $I_3$ SA दुद्रु°, C दुभ्रू°; S′ दुवु° (for दुभ्रु°). —c) S′ °न चा° (for °ने वा°).

803. b) St $P_{1,2}$ °वर्ष° (for °वर्षि°).

नष्टोऽयं नैष भवितेत्यभीतेर्जल्पतो जनात्।
वचो रोगी भिषक्त्यक्त इव शृण्वन् स विव्यथे ॥८०४॥

अप्यग्रोपस्थितं किंचित् तदादेशेन ढौकयन्।
सविलासं सगर्वं च तमैक्षिष्टाऽनुगव्रजः ॥८०५॥

सोऽन्य एवाऽभवत् तस्मिन् क्षणे साहसिकोऽप्यहो।
स्वगृहादपि निर्गन्तुं नाऽशकद् यद्भयाकुलः ॥८०६॥

यावदैच्छन् संघभेदाच्चलितुं डामरव्रजाः।
स्वैरेव शस्त्रिभिस्तावन्निन्ये भूभृद् विसूत्रताम् ॥८०७॥

ते कृष्टशस्त्रा द्वाराणि रुन्धन्तो नृपमन्दिरे।
प्रवासवित्ते लब्धव्ये प्रायं चक्रुः पदे पदे ॥८०८॥

ददद्धनं धनेशश्रीदैंयादप्यधिकं नृपः।
तेषामभिमतो नाऽभूदवमानाभिलाषिणाम् ॥८०९॥

मर्त्तुं चिचलिषुस्तीर्थमृणिकैरिव सामयः।
स रुद्ध्वा निखिलैर्देयं दापितोऽथ गतत्रपैः ॥८१०॥

स्थानपालैरपि प्रायकृद्भिराक्रम्य दापितः।
धनं सुवर्णभाण्डादि चूर्णीकृत्य विश्रृङ्खलैः ॥८११॥

सवृद्धबालं नगरं ततः क्षुभ्यत्क्षणे क्षणे।
सोऽभूदब्धिमिवोद्वृत्तं न संस्थापयितुं क्षमः ॥८१२॥

---

805. c) C S' सर्वग (for सगर्वं).

806. a) C S' सैन्य° (for सोऽन्य°).

807. a) C सङ्ग° (for संघ°) —c) C °भि· सर्वैर्नि°, S' भि सर्वे नि° (for °भिस्तावन्नि°)

808. b) C S' रुन्धतो; $P_2$ रुद्धन्तो (for रुन्धन्तो).

810. a) $P_{1-3}$ $I_3$ S' SA विचलि° (for चिचलि°). —ab) C °र्थं सृणिकै; S' $P_{2,3}$ °र्थसृणिकै° (for °र्थमृणिकै°).

812. a) $P_2$ °बाले (for °बाल).

एकदा प्रातरेवाऽन्यै रुद्धद्वारः स्वशस्त्रिभिः।
सर्वतः क्षोभमागच्छन्नगरं स व्यलोकयत् ॥८१३॥

ततः क्षोभं शमयितुं जनकं नगराधिपम्।
पुरभ्रमार्थमादिश्य चलितुं क्षणमैक्षत ॥८१४॥

कथंचिद् दानमानाभ्यां तानावर्ज्याऽपि शस्त्रिणः।
सावरोधः स संनद्धो राजधान्या विनिर्ययौ ॥८१५॥

अङ्गनात् तुरगारूढो बहिर्यावन्न निर्ययौ।
राजधान्यन्तरे लुण्ठिस्तावत् प्रारम्भि तस्करैः ॥८१६॥

अरुदन् केऽपि केऽप्युच्चैरनदन् केऽप्यलुण्ठयन्।
तद्भृत्यान् राज्यमुत्सृज्य तस्मिन् व्रजति शस्त्रिणः ॥८१७॥

विशृङ्खलस्त्रपाकोपशङ्काभिः शस्त्रिणां नृपः।
सहस्रैः पञ्चषैरासीद् व्रजन्ननुगतोऽध्वनि ॥८१८॥

वर्षे षण्णवते कृष्णषष्ठ्यां मार्गे विनिर्गतः।
याममात्रावशेषेऽह्नि सभृत्यो द्रोहविह्वलः ॥८१९॥

निजैर्हरद्भिरश्वादि त्यज्यमानः पदे पदे।
स प्रतापपुरं प्राप क्षपायामल्पसैनिकः ॥८२०॥

तिलकस्य पुरो गत्वा प्रातस्याऽग्रं च विश्वसन्।
तत्र बन्धोरिवाऽस्रूणि चिरं दुःखोल्बणोऽमुचत् ॥८२१॥

---

813 b) All Mss read स शस्त्रिभि (for स्वशस्त्रिभि. suggested with St).

816. a) $P_2$ $I_3$ SA आङ्ग° (for अङ्ग°).

817 a) C S′ °दद° (for °रुद°).

819. a) SA षण्णन°; $P_{1-3}$ D षण्न°, C S′ षण°, $I_3$ षणन° (for षण्ण°). —b) C $P_{1-3}$ $I_3$ °षष्ट्यां (for °षष्ठ्यां).

821. b) $P_2$ °स्याग्रे (for °स्याऽग्र)

द्रोहं न कुर्यादेवं मे चिन्तयित्वेति सत्वरम् ।
वेश्म हुष्कपुरेऽन्येद्युस्तस्य च प्राविशत् स्वयम् ॥८२२॥

तद्गौरवेण स्नानादि कृत्वैच्छत् सैन्यसंग्रहम् ।
प्रविश्य क्रमराज्यं स कर्तुं भूयो जयोत्सुकः ॥८२३॥

गूढं युयुत्सून् कल्याणवाडादीनथ डामरान् ।
आनीय स पुरस्तस्य धैर्यभ्रंशमकारयत् ॥८२४॥

गृहात् तेन तया युक्त्या निष्कृष्टः स ततो ययौ ।
स्वीकुर्वन् स्वर्णदानेन दस्यून् मार्गविरोधिनः ॥८२५॥

प्रयान्तं तत एवौज्झीत् तिलकस्तत्सहोदरः ।
प्रयाणमेकमानन्दो दाक्षिण्यादन्वगात् तु तम् ॥८२६॥

भृत्यत्यक्तः स दानेन विक्रमेण च तस्करान् ।
अगान्मार्गेण शमयन्नायुश्शेषेण रक्षितः ॥८२७॥

त्राणं सिंहनखा द्रुमाद्रिगहनस्याऽऽरादरण्यस्य ये
तेषां बालगलाश्रयादपि भवेत् कालातिवाहः क्रमात् ।
ये दन्ताः करिणां रणप्रहरणं तेऽप्याप्नुयुर्दीव्यतां
क्रीडायां करताडनानि न दृढा शौर्यस्य रूढिः क्वचित् ॥८२८॥

जन्तूनां विक्रमत्यागयशःप्रज्ञादयो गुणाः ।
भवे चित्रस्वभावेऽस्मिन् न भवेयुरभङ्गुराः ॥८२९॥

भास्वानप्यौग्र्यमृदुतां भिन्नावस्थां दिने दिने ।
तां तामायाति जन्तूनां कः प्रभावेषु निश्चयः ॥८३०॥

---

823. c) C S′ प्राविशत् (for प्रविश्य) —d) All Mss read भूयो जनो°; D suggests भूयोर्जनो° (for भूयो जयो° suggested with St)

824. a) C S′ गृह युयुत्सु° (for गूढं युयुत्सून्). —b) SA °वाळा°, S′ °वधा°, C $P_2$ °वाडया° (for °वाडा°).

826. d) C S′ ताम् (for तम्).

828. a) D द्रमा° (for द्रुमा°) S′ °दिग° (for °द्रिग°). —c) S′ °करणे (for °हरण). C S′ तेऽथा° (for तेऽप्या°).

830. a) $P_3$ $I_3$ °मृडता (for मृदुता). —b) D (before suggestion) SA $P_{1-3}$ $I_3$ भिन्नोवस्थां (for भिन्नावस्था)

अशक्नुवन्नट्टलिकामरिप्लुष्टां निरीक्षितुम्
मन्युनिश्शब्दसैन्योऽद्रिमारुरोह स लोहरम् ॥८३१॥

स्वं कलत्रमपि द्रष्टुं तत्राऽतित्रपयाऽक्षमः ।
शयनीयविमुक्ताङ्गस्तप्यते स दिवानिशम् ॥८३२॥

दत्तदीपादनिर्गच्छन्नन्तर्गेहाद् दिनेष्वपि ।
दाक्षिण्याद् दर्शनं प्रादाद् भृत्यानां भोजनक्षणे ॥८३३॥

विलेपनानि नाऽस्प्राक्षीन्नारुरोह तुरंगमान् ।
गीतनृत्तादि नैक्षिष्ट सुखगोष्ठीर्न चाऽऽदधे ॥८३४॥

ताम्यंस्ताटस्थ्यमौखर्यतैक्ष्ण्यद्रोहादि दर्शितम् ।
एकैनैकेन च स्मृत्वा स्मृत्वा देव्यै न्यवेदयत् ॥८३५॥

अन्वगात् स्वां भुवं त्यक्त्वा मामेतेऽन्वगुरित्यपि ।
निन्ये वृद्धिं परार्ध्यश्रीः स दाक्षिण्याद्धनार्पणैः ॥८३६॥

कश्मीरेषु गते तस्मिंस्तदैवाऽखिलमन्त्रिणः ।
पुराणराजधान्यग्रे ससैन्याः समगंसत ॥८३७॥

मन्त्र्यश्वारोहसामन्ततन्त्रिपौरादिसंमतः ।
तेषां जनकसिंहोऽभूदग्रणीर्नगराधिपः ॥८३८॥

स भिक्षोर्मल्लकोष्ठाद्यैराप्तैः कृतगतागतैः ।
विश्वासाय सुतभ्रातृसुतौ नीविं प्रदापितः ॥८३९॥

---

833. c) C °क्षिण्याद° (for °क्षिण्याद् द°).

834. c) C S′ °नृत्यादि (for °नृत्तादि).

836. a) St. Tr suggests अनुगान् (for अन्वगात् also found in SL).

837. c) D (before suggestion) C $P_{1-3}$ $I_3$ SA पुराणि; S′ पुराणे (for पुराण° suggested with St D).

839. d) C °दायि°; $I_3$ °दाप° (for °दापि°).

प्रावर्तत भयभ्रश्यत्स्त्रीबालाद्यावृते पुरे ।
अराजकाऽथ रजनी सर्वभूतभयावहा ॥८४०॥

निहताः केऽपि मुषिताः केऽपि केऽप्यरिभिः पुरे ।
दग्धागारा व्यधीयन्त दुर्बला राजवर्जिते ॥८४१॥

सैन्यैरन्येद्युरुन्नादैर्निरुद्धाखिलदिक्पथः ।
सिन्दूरारुणपुण्ड्राश्वसादिमण्डलमध्यगः ॥८४२॥

विकोशशास्त्रकदलीषण्डदुर्लक्ष्यविग्रहः ।
मृगेन्द्र इव लोकस्य भयकौतूहलावहः ॥८४३॥

वीरपट्टाश्चलश्लिष्टैर्यौवनोद्रेचितैः कचैः ।
अबद्धैः शोभितः पृष्ठे जयश्रीबन्धशृङ्खलैः ॥८४४॥

कुण्डलद्योतिना स्निग्धधवलायतदृष्टिना ।
प्रत्यग्रश्मश्रुणा चारुचन्दनोल्लेखशोभिना ॥८४५॥

ताम्राधरेण वक्त्रेण श्रीसांनिध्याधिकत्विषा ।
पक्षपाति विपक्षाणामपि संपादयन्मनः ॥८४६॥

असेर्विकोशस्याऽन्तस्स्थां श्रियमश्वेन वल्गता ।
केसरच्छटया चाऽपि चामरेणेव वीजयन् ॥८४७॥

पदे पदे निवृत्ताश्वः सामन्तैरुपपादिताम् ।
स्वीकुर्वन्नर्हणां भिक्षु· प्राविशन्नगरं ततः ॥८४८॥

---

840. a) C S′ °भ्रव्य° (for °भ्रश्य°) S′ om. *cd*
841. S′ om *ab*. —c) C S′ दग्धगेहा (for दग्धागारा).
843. a) $I_3$ विशोक°, $P_3$ निकोश° (for विकोश°).
844. a) C °श्चल° (for °श्चल°).
845. cd) D C चारु च° (for चारुच°).
847 c) SA (without indicating a *lacuna*) D $P_{1-8}$ $I_3$ om. चाऽपि.
848. d) After this *v* कुलकम् .

तस्याऽर्भकस्य धात्रीव पृष्ठस्थो मल्लकोष्ठकः ।
प्रययावप्रगल्भस्य सर्वकार्योपदेष्टृताम् ॥८४९॥

अयं पितुः प्रियस्तेऽभूत् त्वमस्याऽङ्के विवर्धितः ।
राज्यस्याऽयं मूलमिति प्रत्येकं समदर्शयत् ॥८५०॥

गृहं जनकसिंहस्य प्राक्कन्यावाप्तयेऽविशत् ।
राजलक्ष्मीं स संप्राप्तुं राजधानीं ततः परम् ॥८५१॥

दूरनष्टे कुले तेन पुनरुद्रेचिते ययौ ।
बद्धास्थो गर्भगेऽपत्ये स्त्रीजनोऽनवहास्यताम् ॥८५२॥

दृष्टेन तादृशा भिक्षोरितिवृत्तेन शत्रुषु ।
चित्रस्थेष्वपि साशङ्का नोपहास्या जिगीषवः ॥८५३॥

प्रावर्तन्त धनाधीशश्रियः सुस्सलभूपतेः ।
कोशेन नीतशेषेण विलासा नवभूपतेः ॥८५४॥

वाजिवर्मासिभूयिष्ठां राजलक्ष्मीं विभेजिरे ।
राजडामरलुण्ठाकमन्त्रिणो यन्त्रणोज्झिताः ॥८५५॥

पुरे स्वर्ग इवाऽऽस्वादं भोगानामुपलेभिरे ।
दस्यवो ग्रामभोगार्हाः पिशाचा इव गह्वराः ॥८५६॥

आस्थाने न बभौ भूभृद् ग्रामीणैः सर्वतो वसन् ।
प्रलम्बकम्बलप्रायविलासावरणैः समम् ॥८५७॥

---

850 b) C S′ °द्धित (for °र्धित) —c) $P_{1,3}$ राज° (for राज्य°)
852 c) C S′ °र्भके° (for °र्भगे°).
853 b) St C °रिति वृत्ते° (for °रितिवृत्ते°). —c) S′ विव° (for चित्र°).
854. c) All Mss. except St $P_3$ कोषेण (for कोशेन).
855. d) $P_{2,3}$ यन्त्रि (for यन्त्र°).
856. d) C S′ गत्वरा· (for गह्वरा·)

भिक्षाचरस्याऽसंभाव्यप्रादुर्भावतया प्रथाम् ।
डामरा अवतारोऽयमित्यन्यां निन्यिरे प्रथाम् ॥८५८॥

राज्यस्याऽनन्यदृष्टस्य कर्तव्येषु मुमोह सः ।
अदृष्टकर्मैव भिषग् भैषज्यस्य पदे पदे ॥८५९॥

शनैर्जनकसिंहेन कृतभ्रातृसुतार्पणम् ।
कम्पनाधिपतिर्दत्तकन्योऽपि तमशिश्रियत् ॥८६०॥

जुङ्गो राजपुरीयस्य राज्ञः कटकवारिकः ।
पादाग्राधिकृतोऽद्राक्षीत् स्वार्थमर्थं न तु प्रभोः ॥८६१॥

सर्वाधिकारिणं राजलक्ष्मीर्बिम्बमशिश्रियत् ।
राजशब्दस्यैव पात्रमभूद् भिक्षाचरः परम् ॥८६२॥

वेश्यायत्तीकृतैश्वर्यः प्राकृताचारभागपि ।
अन्तरज्ञः सदसतां किंचिद् बिम्बस्तदाऽभवत् ॥८६३॥

द्वैमातुरो दर्यकस्य भ्राता साश्चर्यशौर्यभूः ।
नृपान्तरङ्गज्येष्ठत्वं ज्येष्ठपालोऽप्यशिश्रियत् ॥८६४॥

मन्त्रिणो भूतभिश्राद्यास्तस्य पैतामहा अपि ।
लक्ष्मीसरोजिनीभृङ्गा बहवोऽन्ये जजृम्भिरे ॥८६५॥

मुग्धे राज्ञि प्रमत्तेषु मन्त्रिषूग्रेषु दस्युषु ।
उत्थानोपहतं राज्यं नवत्वेऽपि बभूव तत् ॥८६६॥

---

861. [a]) C S′ जङ्गो (for जुङ्गो) —[d]) C S′ प्रभु (for प्रभो)

862. [a]) $P_{1-3}$ $I_3$ SA राजा (for राज°). —[b]) SA लक्ष्मीबिम्बमाशिश्र°, $P_2$ लक्ष्मीबिब°, $I_3$ लक्ष्मीविवममिश्र° (for °लक्ष्मीर्बिम्बमाशिश्रि°).

863. [c]) All Mss read अन्तरङ्ग (for अन्तरज्ञ suggested with D)

864 [a]) $P_2$ °तुरे (for °तुरो).

865. [a]) SA भूतविश्चा°; C S′ भूतविश्वा°, D $P_{1-3}$ $I_3$ भूतविश्शा° (for भूतभिश्रा° cf *vv* vii. 1696, viii 94).

स्त्रीभिर्नवनवाभिश्च भोज्यैः प्राज्यैश्च रञ्जितः।
भिक्षुर्नैक्षिष्ट कर्तव्यं सुखानुभवमोहितः ॥८६७॥

स सुखानुभवप्रावृण्णिद्रान्धो विजयोद्यमे।
स्वैः प्रेरितः सभामध्ये स्वप्तुमैच्छन्मदालसः ॥८६८॥

दर्पेण सचिवे वाचं कथयत्यनुकम्पिकाम्।
न स चुक्रोध मुग्धस्तु पितरीवाऽन्वरज्यत ॥८६९॥

निष्प्रतिष्ठैः सेव्यमानो वेश्योच्छिष्टैरशिष्टवत्।
अट्टचेटोचिताश्चेष्टा विटैः प्रैर्यत सेवितुम् ॥८७०॥

पानीयरेखाप्रतिमस्थैर्यस्याऽखिलवस्तुषु ।
तस्याऽप्रमाणवचसः सेवां प्रणयिनो जहुः ॥८७१॥

यदूचुः सचिवास्तत् तानन्ववोचन्न भूभृतः।
वचः सुषिरगर्भस्य तस्य किंचित् समुद्ययौ ॥८७२॥

सचिवैः स्वगृहान्नीत्वा दत्तभोज्यः स मुग्धधीः।
धनी विपन्नपितृक इव प्रमुषितो विटैः ॥८७३॥

आहारमुष्टिं बिम्बस्य गृहे बिम्बनितम्बिनी।
तस्याऽश्वस्येव वडवा रागिणोऽग्रगताऽऽहरत् ॥८७४॥

वञ्चयित्वा दृशौ पत्युर्दर्शितैः स्मेरया तया।
कुचकक्षकटाक्षैः स लुप्तधैर्यो व्यधीयत ॥८७५॥

---

868. [ab]) St $P_{2,3}$ $I_3$ °वृह्नि°, C °वृणि° (for °वृण्नि°)

870 [b]) $P_{1,3}$ SA वेश्यै°; $P_2$ वश्यै° (for वेश्यो°). —[c]) C S′ अद्धा (for अट्ट°).

871. [d]) $P_1$ om प्रणयिनो जहु

872. [ab]) $P_1$ om upto तानन्व —[b]) C °चत, S′ °चत्त (for °चन्न).

874. [a]) St °ष्टोर्बि°, SA $P_{1,3}$ $I_3$ °ष्टिर्बि° (for °ष्टिं बि°) —[c]) SA $P_{1,2}$ $I_3$ °श्वेव (for °श्वस्येव)

875 [c]) $P_2$ $I_3$ °कक्ष्य° (for °कक्ष°).

पृथ्वीहरो मल्लकोष्ठश्चाऽन्योन्योद्भूतमत्सरौ ।
क्षोभं व्यधत्तां संरब्धौ राजधान्याः क्षणे क्षणे ॥८७६॥

स्वयं राज्ञा सुतोद्वाहं गृहान् गत्वाऽपि कारितौ ।
तावन्योन्यमुपैक्षेतां न मन्युं विक्रमोन्मदौ ॥८७७॥

अथ पृथ्वीहरगृहात् कृतोद्वाहः स्वयं नृपः ।
जातामर्षेण सुस्पष्टं मल्लकोष्ठेन तत्यजे ॥८७८॥

द्रुह्यञ्जनककाणोऽपि संबन्धापेक्षयोज्झितः ।
विरागमोजानन्दादीन् निन्ये ब्राह्मणमन्त्रिणः ॥८७९॥

तटस्थो द्रोग्धृदुर्बुद्धिप्रायभृत्यविधेयधीः ।
विसूत्रव्यवहारत्वं निन्द्यत्वं च ययौ नृपः ॥८८०॥

डामरस्वामिके लोके प्राभवत् को न विप्लवः ।
ब्राह्मण्यो धर्षणं यत्र श्वपाकेभ्योऽपि लेभिरे ॥८८१॥

अराजकेऽथवा भूरिराजके मण्डले तदा ।
समस्तव्यवहाराणां स्फुटं तुत्रोट पद्धतिः ॥८८२॥

दीन्नारा भैक्षवे राज्ये निष्प्रचाराः पुरातनाः ।
तच्छतेन तु नव्यानामशीतेरभवत् क्रयः ॥८८३॥ - ——

राजपुर्यध्वना बिम्बं ससैन्यमथ पार्थिवः ।
लोहरं प्राहिणोत् कर्तुं सुस्सलास्कन्दमुन्मदः ॥८८४॥

तुरुष्कसैन्यमानिन्ये सोमपालेन सोऽन्वितः ।
साहायकाय सल्लारे विस्मये मित्रतां गते ॥८८५॥

---

877. c) All Mss. read °मुपेक्षेता (for °मुपैक्षेता suggested with St).

879. b) C S' °योर्ज्जित° (for °योज्झित.).

881. b) C S' प्रभवेत् ; $P_2$ प्राभवेत् (for प्राभवत् ).

संदर्श्य पाशमेतेन बद्ध्वा क्रक्ष्यामि सुस्सलम् ।
इत्येक एकोऽश्वारोहस्तुरुष्कै समकथ्यत ॥८८६॥

काश्मीरकखशम्लेच्छयोधव्यतिकरोऽभवत् ।
न केषां नाम संभाव्यो विश्वोत्पाटनपाटवः ॥८८७॥

भिक्षाचरः प्रयाते तु बिम्बे विगलिताङ्कुशः ।
न कासामव्यवस्थानां मूढः स्थानमजायत ॥८८८॥

स निमन्त्र्य निजं नीतो गृहं बिम्बावरुद्धया ।
भोगसंभोगदानेन धर्षण्या पर्यतोष्यत ॥८८९॥

कार्यापेक्षाऽपि तस्याऽऽसीन्न मन्त्रिस्त्रीसमागमे ।
कौलीनभीतेरासन्ननिपातस्य कथैव का ॥८९०॥

आद्यूनानुगुणं भोज्यं कुम्भकांस्यादिवादनम् ।
तत्र प्राकृतकामीव न स जिह्वाय शीलयन् ॥८९१॥

शनैः शनैस्ततो नष्टावष्टम्भस्य महीपतेः ।
काले भोज्यमपि प्राप्यं नाऽऽसीद् गलितसंपदः ॥८९२॥

तादृक्प्रलोभक्रौर्यादिक्रान्तो यः प्रागगर्ह्यत ।
स सुस्सलोऽथ लोकानामभिनन्द्यत्वमाययौ ॥८९३॥

---

886. b) D (before corr ) $P_{1-3}$ °द्ध्वा द्रक्ष्यामि, S′ °द्ध्वा क्रक्षामि; D suggests °द्ध्वाक्रक्ष्यामि (for °द्ध्वा क्रक्ष्यामि) —c) इत्येवमेको° is suggested (for इत्येक एको°). —d) St °ष्काणामकत्थत, $P_1$ °ष्का समकथ्यत, $P_2$ °ष्काणामकथ्यत, $P_3$ °ष्कस्ससकथ्यत, $I_3$ °ष्कामचकथ्यत; SA °ष्कामकथ्यत (for °ष्कै समकथ्यत)

887. a) St (before corr in corrigenda) काश्मीरि°, C S′ $P_2$ कश्मीर° (for काश्मीर°). —d) St (before corr ) °पाटब (for °पाटव ).

890. c) S′ °भीतो° (for °भीते°).

891. a) $P_{1-3}$ $I_3$ SA °गुणो (for °गुण) —c) C S′ °कर्मेव (for °कामीव)

893. c) C S′ °लो हि, $P_{1,3}$ °लो वा (for °लोऽथ).

धनमानादिनाशं या विरक्तास्तस्य चक्रिरे।
काङ्क्षन्ति स्म घनोत्कण्ठास्ता एवाऽऽगमनं प्रजाः ॥८९४॥

प्रत्यक्षदर्शिनोऽद्याऽपि साश्चर्या वयमस्य यत्।
ताः प्रजाः कोपिताः केन केन भूयः प्रसादिताः ॥८९५॥

क्षणाद्वैमुख्यमायान्ति सांमुख्यं यान्ति च क्षणात्।
न हेतुं कंचिदीक्षन्ते पशुप्रायाः पृथग्जनाः ॥८९६॥

ते मल्लकोष्ठजनकादयो दूतैर्विसर्जितैः।
त्यक्तराज्यं पुनर्भूपं जयोद्यममजिग्रहन् ॥८९७॥

अक्षोसुवाग्रहारेऽथ लोकैष्टिकस्य लुण्ठिते।
तत्रत्या ब्राह्मणाः प्रायं नृपमुद्दिश्य चक्रिरे ॥८९८॥

तैश्चाऽन्यैश्चाऽग्रहारैश्च संश्रितैर्विजयेश्वरे।
राजानवटिकाप्रायो नगरेऽपि न्यविक्षत ॥८९९॥

ओजानन्दादिभिर्मुख्यद्विजैरुत्तेजितास्ततः।
गोकुलेऽपि न्यधुः प्रायं त्रिदशालयपर्षदः ॥९००॥

युग्यार्पितैः सितच्छत्रवस्त्रचामरशोभिभिः।
विबुधप्रतिमावृन्दैः सर्वतश्छादिताङ्गनः ॥९०१॥

काहलाकांस्यतालादिवाद्यक्षोभितदिङ्मुखः।
अदृष्टपूर्वो ददृशे पारिषद्यसमागमः ॥९०२॥

---

894. c) C S′ च सोत्क° (for घनोत्क°)
895. b) $P_3$ तत् (for यत्)
896 c) $P_3$ केचि° (for कचि°).
897. d) $P_2$ °ग्रहत् (for °ग्रहन्)
898. b) St. Tr तिलकस्य (for टिक्कस्य)
899. b) $P_3$ °श्रिते° (for °श्रितै°). —c) C S′ °प्राणे (for °प्रायो).
900. a) D $P_{1-3}$ $I_3$ ओज° (for ओजा°). —d) C S′ °पार्षद. (for °पर्षदः).
901. d) $P_1$ °श्छादिता°, $P_{2,3}$ $I_3$ °च्छादिता° (for °श्छादिता°).
902. a) St (before corr) °तालादी° (for °तालादि°)

ते सान्त्व्यमाना भूभर्तुर्दूतैरुत्सेकवादिनः ।
न विना लम्बकूर्चं नो गतिरित्यब्रुवन् वचः ॥९०३॥

ते हेलया लम्बकूर्चाख्यया सुस्सलभूपतिम् ।
तं निर्दिशन्तोऽमन्यन्त क्रीडापुत्रकसंनिभम् ॥९०४॥

प्रायं प्रेक्षितुमायातैः पौरैः सह दिने दिने ।
अमन्त्रयत कां कां न व्यवस्थां पर्षदां गणः ॥९०५॥

नृपापातभयात् क्षोभं मुहुर्मुहुरुपागतैः ।
पारिषद्यैश्च पौरैश्च योद्धुमास्थीयतोद्धतम् ॥९०६॥

वश्यं जनकसिंहस्य नगरं तन्मतेन तत् ।
सज्जं सुस्सलदेवस्य कृत्स्नमानयनेऽभवत् ॥९०७॥

प्रायाद् वारयितुं पूर्वमग्रहारद्विजान्नृपः ।
प्रययौ विजयक्षेत्रं तत्राऽऽसीच्च हतोद्यमः ॥९०८॥

तन्मध्ये निखिलांस्तत्र डामरांस्तिलकोऽब्रवीत् ।
व्यापादयेति तं तच्च सत्त्वैकाग्रो न सोऽग्रहीत् ॥९०९॥

राज्ञ एव मुखाद् बुद्ध्वा लवन्यास्तद्विशश्वसुः ।
तस्मिन् पृथ्वीहरमुखास्तत्रसुस्तिलकात् पुनः ॥९१०॥

भागिनेयं प्रयागस्य क्षत्तारं लक्ष्मकाभिधम् ।
बन्द्धुमैच्छन्नृपोऽस्निग्धं प्रययौ स तु सुस्सलम् ॥९११॥

---

903. a) St C S′ $P_{2,3}$ $I_3$ सान्त्व° (for सान्त्व्य°). —c) D लाम्ब° (for लम्ब°).
905. d) C पार्षदा, S′ पाषदा (for पर्षदां)
906. d) C S′ °तौद्ध° (for °तोद्ध°).
907. a) C S′ ततो (for वश्य)
910. a) C S′ $P_{1-3}$ $I_3$ SA बद्ध्वा (for बुद्ध्वा)
911. b) C S′ लक्षका°, $P_3$ लक्ष्मणा° (for लक्ष्मका°)

ततः प्रविश्य नगरं संनिपात्याऽखिलं जनम् ।
अकारणविरक्तानां पौराणां प्रददौ सभाम् ॥९१२॥

युक्तमप्युक्तवांस्तत्र हतोक्तिः शठबुद्धिभिः ।
पौरैः स चक्रे नास्त्येव भेषजं विप्लवस्पृशाम् ॥९१३॥

अत्रान्तरे सोमपालबिम्बाद्या लोहरे स्थितम् ।
योद्धुं सुस्सलभूपं ते सर्वे पर्णोत्समाययुः ॥९१४॥

तं च पद्मरथो नाम राजा कालिञ्जरेश्वरः ।
मैत्रीं संस्मृत्य कल्हाद्यैरायथौ तत्कुलोद्भवः ॥९१५॥

सोऽथ शुक्लत्रयोदश्यां वैशाखे बलिभिः समम् ।
तैर्मानी सुस्सलो राजा संग्रामं प्रत्यपद्यत ॥९१६॥

प्रेक्षकैर्वर्ण्यतेऽद्याऽपि स पर्णोत्सान्तिके रणः ।
तस्याऽद्भुतोऽवमानाग्निक्षालनप्रथमक्षणः ॥९१७॥

कुतोऽप्येत्य निजस्फारस्ततः प्रभृति भूपतिम् ।
तमशून्यं पुनश्चक्रे मृगेन्द्र इव काननम् ॥९१८॥

भयस्खलितपाशानां कालपाशैः समागमम् ।
स चकार तुरुष्काणा क्षणात् पुष्कलविक्रमः ॥९१९॥

मातुलं सोमपालस्य निन्ये कवलतां बली ।
रणे तत्कोपवेतालो वितोलासरितस्तटे ॥९२०॥

---

912. b) D (before suggestion) St $P_{1-3}$ S′ सनिपत्या°, C $I_3$ स निपत्या° (for सनिपात्या° suggested with D).

913. d) $P_{1-3}$ $I_3$ भैषज (for भेषज).

914. b) All Mss. read लहरे (for लोहरे suggested with St, cf. v. viii. 831). D C S′ $P_3$ स्थिता (for स्थितम्). —d) $P_3$ पूर्णो° (for पर्णो°).

919. c) $P_{1,3}$ $I_3$ °ष्काना [sic] (for °ष्काणा).

920. c) S′ रण (for रणे).

किमन्यदल्पसैन्यः सन् बहूनपि स तान् व्यधात् ।
हतविद्रुतविध्वस्तान् यथाऽऽत्मपरिपन्थिनः ॥९२१॥

काश्मीरकाणामौचित्यं किं नाऽभूत् स्वामिनो द्रुः ।
एकस्य ये रणं नष्टाः कुकीर्तिमपरस्य च ॥९२२॥

तुरुष्कै सह यातेऽथ सोमपाले गतत्रपाः ।
बिम्बं काश्मीरकास्त्यक्त्वा राजान्तिकमशिश्रियन् ॥९२३॥

ह्यो धनूंषि शिरांस्यद्य नमयन्तोऽद्भुताशयाः ।
कुलप्रभोः पुरः स्पष्टं न ते धृष्टा ललज्जिरे ॥९२४॥

आगच्छद्भिस्ततः पौरैर्डामरैश्च समं नृपः ।
प्रतस्थे दिवसैर्द्वित्रैः कश्मीराभिमुखः पुनः ॥९२५॥

राजपुत्रः साहदेवि कल्हणो विशतः प्रभोः ।
डामरान् क्रमराज्यस्थान् संगृह्याऽग्रेसरोऽभवत् ॥९२६॥

य एव प्रथमं राजसैन्याद् भिक्षुमशिश्रियत् ।
स एव बिम्बो राजानं तमुत्सृज्य समाययौ ॥९२७॥

अन्ये जनकसिंहस्य संमता मन्त्रितन्त्रिणः ।
प्रत्युद्यन्तो व्यलोकयन्त नृपतिं निरपत्रपाः ॥९२८॥

काण्डिलेत्राभिधग्रामजन्मा शास्त्री सुलक्षणः ।
भाङ्गिले कश्चिदभवच्छून्ये क्रान्तोपवेशनः ॥९२९॥

---

921. a) D St C S′ $P_{1,2}$ $I_3$ स, $P_3$ सु (for सन् suggested). —c) D C S′ SA $P_{1,2}$ $I_3$ °ध्वस्तय°; $P_3$ °ध्वस्ताय° (for °ध्वस्तान् य° suggested with St).

922. a) C S′ कश्मीर, St (before corr.) $P_3$ काश्मीरि° (for काश्मीर°). —c) $P_{1,3}$ नष्टः (for नष्टा॰).

923. c) St (before corr ) $P_3$ काश्मीरि° (for काश्मीर°)

927. b) $P_{2,3}$ °श्रयत् (for °श्रियत् ).

928. c) D °द्यान्तो, C S′ $P_1$ °च्यन्तो (for °द्यन्तो).

929. d) $P_2$ $I_3$ SA °वेदन , S′ °वेशिन (for °वेशन ).

भिक्षुर्वितीर्णमार्गं तं सुस्सलान्तिकगामिनः ।
लोकस्याऽत्रान्तरे जेतुं सहपृथ्वीहरो ययौ ॥९३०॥

जितवांस्तं बबन्धेच्छां निहन्तुं सुस्सलोन्मुखम् ।
क्रोधाज्जनकसिंहं च वार्तां तां संविवेद सः ॥९३१॥

नगरस्थेन तेनाऽथ पौराश्वारोहतन्त्रिणः ।
संघट्य्याऽखिलान् भिक्षो प्रातिपक्ष्यमगृह्यत ॥९३२॥

जानंस्तेनाऽऽवृतं राज्यं ततो भिक्षाचरो नृपः ।
पृथ्वीहरेणाऽनुयातो नगरं सहसाऽविशत् ॥९३३॥

सेतौ सदाशिवाग्रस्थे तत्सैन्यैः सह संगरम् ।
दृप्यज्जनकसिंहोऽथ सान्त्व्यमानोऽपि सोऽग्रहीत् ॥९३४॥

दृष्टं जनकसिंहस्य योधानां वल्गतां मदात् ।
अविशङ्क्य पराभूतिं मुहूर्तं सुभटायितम् ॥९३५॥

अलकेन समं पृथ्वीहरस्तद्भ्रातृसूनुना ।
अन्येन सेतुना तीर्त्वा तस्य सैन्यमनाशयत् ॥९३६॥

तन्त्र्यश्वारोहपौरेषु विद्रुतेषु सबान्धवः ।
नक्तं जनकसिंहोऽथ पलाय्य लहरं ययौ ॥९३७॥

भिक्षुपृथ्वीहरौ प्रातस्तत्पृष्ठग्रहणोद्यतौ ।
तत्पश्चात्तेऽश्ववाराद्या धृष्टा भूयोऽप्यशिश्रियन् ॥९३८॥

---

930. d) D सह पृ° (for सहपृ°).
931. d) St C S′ $P_3$ च विवे°, SA $P_2$ स विवे° (for संविवे°).
934. d) St $P_2$ $I_3$ सान्त्व° (for सान्त्व्य°). $P_3$ °माने सो° ⌊om ऽपि⌋ (for °मानोऽपि सो°).
935. a) C S′ द्रष्टु (for दृष्ट) —d) C S′ °त समजायत (for °र्तं सुभटायितम्).
937. a) $P_{1,2}$ $I_3$ SA तन्त्र्यारोह° (for तन्त्र्यश्वारोह°).
938 d) D C S′ $P_{1-3}$ पृष्टा (for धृष्टा).

क्षिप्त्वा क्षिप्रं स्वकक्षान्तर्विबुधप्रतिमा भयात् ।
ते पारिषद्यविप्राद्याः प्रायमुत्सृज्य विद्रुताः ॥९३९॥

शून्यानि सुरयुग्यानि रक्षन्तः केऽपि भिक्षुणा ।
प्रायान्निवृत्ता वयमित्युक्तवन्तो न बाधिताः ॥९४०॥

ह्यो जानके भैक्षवेऽद्य वल्गत्तुङ्गतुरङ्गमान् ।
दृष्टवन्तो वयं सैन्ये सादिनोऽद्याऽपि साद्भुताः ॥९४१॥

भिक्षुराजप्रदीपेन द्योतितः क्षणभङ्गिना ।
पैतृव्येणाऽधिकारेण स्यालस्तिलकसिंहजः ॥९४२॥

गते जनकसिंहेऽथ प्रतिपक्षानुसारिणाम् ।
विधातुं वेश्मभङ्गादि लब्धं भिक्षुमहीभुजा ॥९४३॥

अत्रान्तरे हुष्कपुरे नीतेषु तिलकादिषु ।
भङ्गं सुल्हणसिम्बाद्यैः समेतानन्तसैनिकैः ॥९४४॥

अग्रायातैर्मल्लकोष्ठजनकाद्यैः ससैनिकैः ।
अपरैरपि सामन्तैर्बलबाहुल्यशालिभिः ॥९४५॥

अन्वीयमानो दिवसैर्द्वित्रैराक्रान्तमण्डलः ।
विशंल्लहरमार्गेण विपक्षालक्षितोऽपतत् ॥९४६॥

नगरापणवीथ्यन्तर्हयारोहमुखान् पुरः ।
द्रोहयोधानुपायातांस्तदैवोज्झितसाध्वसः ॥९४७॥

---

939. [a]) D (before suggestion) St $P_{1-3}$ S′ $I_3$ स्वकक्ष्या° (for स्वकक्षा°). —[d]) D $P_1$ °मृत्सृज्य (for °मुत्सृज्य).

941. [b]) S′ $P_1$ वला°, $P_2$ वल्ह° (for वल्ग°). —[c]) C S′ सैन्यै· (for सैन्ये).

942. [c]) C S′ पितृवित्ताधि°, SA $P_3$ पितृव्येणाधि°, D $P_{1,2}$ $I_3$ पितृव्येनाधि° (for पैतृव्येणाऽधि° suggested with St).

946. [d]) C S′ °पक्षापेक्षि° (for पक्षालक्षि°).

947 [b]) C S′ °हया° (for °र्हया°) C S′ $P_{1-3}$ $I_3$ SA °खात् (for °खान्). —[d]) C S′ °स्तान् वीक्ष्यो° (for °स्तदैवो°).

वेष्टितालम्बकूर्चेन वक्त्रेण भ्रुकुटीभृता ।
कोपकम्पिततारेण फुल्लनासापुटस्पृशा ॥९४८॥

कांश्चित् संतर्जयन्निन्दन्नन्यान् भग्नांस्तथाऽपरान् ।
तीव्रातपश्यामवपुस्ताम्यन् काल इवोल्बणः ॥९४९॥

आशीर्घोषकृतां पुष्पवर्षिणां पुरवासिनाम् ।
पूर्वापकारिणां श्रेणीष्ववज्ञान्यस्तलोचनः ॥९५०॥

स्कन्धमात्रोपरिन्यस्तं कवचं हेलया दधत् ।
केशानन्तशिरस्त्रान्तनिस्सृतान् धूलिधूसरान् ॥९५१॥

पक्ष्ममालां च बिभ्राणः सकोशासिस्तुरंगिणाम् ।
आकृष्टखड्गमालानामन्तर्वल्गत्तुरंगमः ॥९५२॥

ससिंहनादैरुद्दामैर्भेरीभांकारनिर्भरैः ।
बलैर्भरितदिक्कोशः सुस्सल प्राविशत् पुरम् ॥९५३॥

षड्भिः सद्वादशदिनैर्मासैर्ज्यैष्ठे सितेऽहनि ।
स सप्तनवताब्दस्य तृतीये पुनराययौ ॥९५४॥

राजधानीमप्रविष्टो भिक्षुं पूर्वपलायितम् ।
अन्विष्यन् क्षिप्तिकातीरे सलवन्यं व्यलोकयत् ॥९५५॥

सरित्पारं रिपौ प्राप्ते स सपृथ्वीहरो गतः ।
मार्गे लवन्यैर्मिलितैरन्यैः साकं न्यवर्तत ॥९५६॥

---

948. [a]) C S′ चेष्टितो (for वेष्टिता°) —[b]) SA $P_{1-3}$ $I_3$ वस्त्रेण (for वक्त्रेण).
949. [a]) C S′ भिन्द° (for निन्द°). —[b]) D °मग्ना° (for °भग्ना°). —[d]) D C S′ $P_2$ °स्ताम्यत्काल° (for °स्ताम्यन् काल°).
950 [a]) C S′ °दौंष° (for °घोंष°). —[c]) C श्रेणि° (for श्रेणी°).
951 [a]) St न्यस्त (for °न्यस्त)
953. [a]) C स सिंह (for ससिंह). —[c]) $P_2$ °दिक्कोशै· (for °दिक्कोशः) After this *v.* कुलकम्.
955. [d]) All Mss. read सलवन्यो (for सलवन्य suggested with St)
956. [a]) $P_2$ °पारे (for °पार).

तं विद्राव्य रणे राजा बद्ध्वा प्रहृतिविक्षतम् ।
सिंह पृथ्वीहरज्ञातिं राजधानीमथाऽविशत् ॥९५७॥

उपभोगैः सपत्नस्य तत्कालनिस्सृतस्य सा ।
अङ्किता मानिनस्तस्य वेश्येवोद्वेगदाऽभवत् ॥९५८॥

भिक्षु संत्यज्य कश्मीरान् सह पृथ्वीहरादिभिः ।
ग्रामं पुष्याणनाडाख्यं सोमपालाश्रयं ययौ ॥९५९॥

प्रस्थिते डामरान् सर्वान् राज्ञा स्वीकृत्य तु व्यधात् ।
खेर्या वट्टात्मजं मल्ल हर्षमित्रं च कम्पने ॥९६०॥

पूर्वापकारं स्मरतो देशकालानपेक्षिणः ।
पूर्वविद्वेषिणस्तस्य न कृपां प्रतिपेदिरे ॥९६१॥

भिक्षुसंपर्कजं गन्धमपि सोढुमशक्नुवन् ।
भृत्येभ्यः खण्डशः कृत्वा द्वेषात् सिंहासनं ददौ ॥९६२॥

अनयोपार्जितां त्यक्तुमनीशा डामराः श्रियम् ।
समन्योश्च नृपाद् भीता नाऽत्यजन् विप्लवोद्यमम् ॥९६३॥

भिक्षुस्तु राज्यविभ्रष्टः सुहृदो विषये वसन् ।
उत्साहं सोमपालस्य दानमानैः पुनर्ययौ ॥९६४॥

बिम्ब. साहायकप्रार्थी विस्मयस्याऽन्तिकं गतः ।
तस्मिन् विरोधिभिर्बद्धे रणे धीरस्तनुं जहौ ॥९६५॥

---

958. $P_1$ om *bc* S′ om *c*

959. ᶜ) D C S′ $I_3$ $P_{1-3}$ पुष्पा° (for पुष्या°)

960. ᵃ) St (after suggestion) C S′ प्रस्थितो (for प्रस्थिते).

961. SA (without indicating the *lacuna*) St $P_{1-3}$ $I_3$ SL om. *cd*.

965. ᶜ) D (before suggestion) $P_{1-3}$ $I_3$ SA °र्बद्धै, D (after suggestion) C S′ °र्बद्धो (for °र्बद्धे suggested with St)

भिक्षाचरो बिम्बशून्यो भजन् दुर्नयपात्रताम्।
अनैषीदवरुद्धात्वं तत्प्रियां तां गतत्रपः ॥९६६॥

निपत्य स्वल्पसैन्योऽपि ततः शूरपुरे बली।
जित्वा पृथ्वीहरो वड्डात्मजं व्यद्रावयद् रणात् ॥९६७॥

तस्मिन् पलायिते भिक्षुं पुनरानीय सोऽविशत्।
भुवं मडवराज्याना दस्यूनां स्वचिकीर्षया ॥९६८॥

तत्रत्यैर्मङ्गजय्याद्यैर्डामरैः स्वीकृतैः समम्।
जगाम विजयक्षेत्रं विजेतुं कम्पनापतिम् ॥९६९॥

जितस्तेनाऽऽहवे हर्षमित्रो निहतसैनिकः।
विजयेश्वरमुत्सृज्य भीतोऽवन्तिपुरे ययौ ॥९७०॥

विजयक्षेत्रजास्तत्तत्पुरग्रामोद्भवा अपि।
जना भयेन प्राविक्षन्नथ चक्रधरान्तिकम् ॥९७१॥

योषिच्छिशुपशुव्रीहिधनोपेतैरपूर्यत।
स्थानं तत्तैश्च राज्ञश्च योधैः सायुधवाजिभिः ॥९७२॥

अन्वारूढैरथ स्पष्टं लोकोल्लुण्ठनलालसैः।
ते भैक्षवैरवेष्ट्यन्त कटकैर्व्याप्तदिक्तटैः ॥९७३॥

तान् दारुमयवप्रौघद्वारगुप्ते सुरौकसः।
अङ्गने तिष्ठतो हन्तुं बन्द्धुं वा नाऽशकन् द्विषः ॥९७४॥

---

966. a) $P_{1,2}$ $I_3$ SA °चरे (for °चरो) —b) C S′ सुन°, $I_3$ सुन्न° (for दुर्न°) —c) C S′ °रुद्धा यत्, $P_1$ $I_3$ °रुद्धाध (for °रुद्धात्व)

967. d) $P_{2,3}$ SA विद्रा° (for व्यद्रा°)

969. a) C °यज्या°, S′ °यय्या° (for °जय्या°). —b) S′ स्वकृ° (for स्वीकृ°).

970. b) C S′ विहत°, $P_1$ निहित° (for निहत°). —d) $P_3$ °पुर (for °पुरे).

973. a) C S′ स्पृष्ट (for स्पष्टम्) —c) D (before suggestion) C S′ $P_{1-3}$ $I_3$ SA तैर्भै° (for ते भै° suggested with St D). C S′ $P_2$ °ष्टन्त (for °ष्ट्यन्त)

974 a) $P_3$ द्वार° (for दारु°). —c) $P_{1,2}$ $I_3$ SA आङ्गने (for अङ्गने).

तदन्तरस्थितं दग्धुं कर्पूराख्यं स्ववैरिणम् ।
कश्चित् कतिस्थलीग्रामजन्मा निर्गुटडामरः ॥९७५॥

पापो जनकराजाख्यस्तत्राऽग्निमुददीदिपत् ।
मूढस्ताद्दगपर्यन्तजन्तुसंहारनिर्घृणः ॥९७६॥

तमापतन्तं ज्वलितं ज्वलनं वीक्ष्य सर्वतः ।
भूतग्रामस्य सुमहान् हाहाकारः समुद्ययौ ॥९७७॥

विशत्कृतान्तवाहारिभियेव छिन्नबन्धनैः ।
अश्वैरसूचीसंचारा भ्रमद्भिर्जघ्निरे जनाः ॥९७८॥

प्राच्छाद्यत वलज्ज्वालाकरालैर्धूमराशिभिः ।
व्योम पिङ्गकचश्मश्रुजालैर्नक्तंचरैरिव ॥९७९॥

निर्धूमस्य विसारिण्यो ज्वाला हव्यभुजो दधुः ।
संतापद्रुतहेमाभ्रसुवर्णलहरीभ्रमम् ॥९८०॥

संतापविद्रुतव्योमचारिमौलिपरिच्युताः ।
रक्तोष्णीषा इव भ्रेमुर्ज्वालाभङ्गा नभोऽङ्गने ॥९८१॥

दीर्घदारुग्रन्थिभङ्गजन्मा चटचटारवः ।
तापप्रक्वाथ्यमानाभ्रगङ्गाघोष इवोद्ययौ ॥९८२॥

स्फुलिङ्गैः प्लोषवित्रस्तजन्तुजीवितसंनिभैः ।
अग्राहि गहनव्योममार्गभ्रमणसंभ्रमः ॥९८३॥

---

975. d) C S′ निर्गूढ°, St (suggests in Ed. but rejects in Tr.) निर्गुण° (for निर्गुट°).

976. After this *v.* $P_3$ adds युग्मम्

979. a) C S′ °ज्ज्वालै. (for °ज्ज्वाला°). —d) D C S′ °ज्वालै° (for जालै°).

980. c) S′ °हसा° (for °हेमा°)

981. c) C S′ °श्रीषा [sic] (for °ष्णीषा)

शकुनैः शावसंचारशोकादाक्रन्दिभिर्नभः ।
मानुषैर्दह्यमानैश्च भूमिर्मुखरिताऽभवत् ॥९८४॥

भ्रातॄन् भर्तॄन्पितॄन्पुत्रानालिङ्ग्याऽऽक्रन्दनिर्भराः ।
भीमीलितदृशो नार्यो निरदह्यन्त वह्निना ॥९८५॥

तदन्तरात् साहसिका ये केचिन्निरयासिषुः ।
बहिस्ते निहताः क्रूरैर्डामरैर्मृत्युचोदितैः ॥९८६॥

तावन्तो जन्तवस्तत्र व्यपद्यन्त तदा क्षणात् ।
स्विन्ना एव न ये दग्धास्तावताऽपि कृशानुना ॥९८७॥

अन्तश्शान्तेषु सर्वेषु बहिश्शान्तेषु हन्तृषु ।
क्षणादेव प्रदेशः स निश्शब्दः समजायत ॥९८८॥

वह्नेः कहकहाशब्दो ह्रस्वीभूतार्चिषः परम् ।
स्विद्यतश्च शवौघस्य श्रुतः सिमसिमाध्वनिः ॥९८९॥

विलीनासृग्वसामेदोनिष्ष्यन्दाः सरणीशतैः ।
प्रसस्रुर्विस्रगन्धश्च योजनानि बहून्यगात् ॥९९०॥

एकः सुश्रवसः कोपाद् द्वितीयो दस्युविप्लवात् ।
ईदृग्घुतवहाबाधो घोरश्चक्रधरेऽभवत् ॥९९१॥

भूतग्रामस्य संहारः संवर्त इव वह्निना ।
तादृक् त्रिपुरदाहे वा खाण्डवे तत्र वाऽभवत् ॥९९२॥

---

984. b) C S′ $P_3$ °कोशा°, $P_2$ °शौका° (for °शोका°). —c) $P_2$ मानुष्यै° (for मानुषै°)

988. b) C $P_{1,2}$ $I_3$ हर्तृषु (for हन्तृषु).

989. a) S′ °कहो°, $P_3$ °कका° (for °कहा°). —c) S′ शत्रो°, $P_3$ शिवौ° (for शवौ°)

990. b) C °नि स्पन्दा (for °निष्ष्यन्दा)

991. a) cf *vv.* I. 224–270 (for सुश्रवस) —c) $P_{1-3}$ $I_3$ SA ईदृग्घु° (for ईदृग्घु°) —d) D भवत् [sic] (for [अ]भवत).

992. a) $I_3$ om मस्य in °ग्रामस्य. SA °ग्रामसहार°, C S′ °ग्रामादिसहार°; $P_{1,2}$ °ग्रामससहार (for °ग्रामस्य सहार). —d) $I_3$ खण्डवे (for खाण्डव).

पुण्येऽह्नि शुक्लद्वादश्यां नभसः कुक्तं महत् ।
तद्भिक्षुः कृतवान् राज्यलक्ष्म्या भाग्यैश्च तत्यजे ॥९९३॥

सकुटुम्बेषु दग्धेषु तदानीं गृहमेधिषु ।
पुरग्रामसहस्रेषु गृहाः शून्यत्वमाययुः ॥९९४॥

मल्लाख्यो डामरश्चिन्वञ्शवान् नौनगरोद्भवः ।
प्रीतिं प्राप्तैस्तदीयार्थैः कापालिक इवाऽऽययौ ॥९९५॥

अवरूढोऽथ विजयक्षेत्रे भिक्षाचरस्ततः ।
लब्ध्वा नागेश्वरं पापं यातनाभिरमीमरत् ॥९९६॥

गर्ह्यं पैतामहे देशे किं नाऽऽसीत् तस्य चेष्टितम् ।
पितृद्रुहः स तु वधः सर्वप्रीतिकरोऽभवत् ॥९९७॥

गृहिणी हर्षमित्रस्य पत्यौ त्यक्त्वा पलायिते ।
पृथ्वीहरेण संप्राप्ता विजयेशाङ्गनान्तरात् ॥९९८॥

निमित्तभूतमेतादृक्प्रजासंहारवैशसम् ।
स्वं निन्दन् सुस्सलो राजा ततो योद्धुं विनिर्ययौ ॥९९९॥

संवेगात् पाप्मनः शीघ्रं निरयक्लेशभुक्तये ।
प्राप्तो जनकराजेन वधोऽवन्तिपुरान्तिके ॥१०००॥

यत्कृते क्रियते कर्म लोकान्तरसुखान्तकम् ।
स मूढैः सुलभापायः कायश्चित्रं न गण्यते ॥१००१॥

---

993 a) $P_2$ शुक्ले (for शुक्ल°).

995. b) $P_3$ सख्या° (for मल्ला°). D $P_{2,3}$ °न्नौना°, C °न्नन्ना°, $P_1$ °न्नौन्ना°, SA °न्नौग°, S′ °न्नगन्ना°, (for °न् नौन° suggested with St, cf. v. vii. 358). —c) C S′ प्राप्त (for प्राप्तै).

996. a) C S′ °रोद्धा° (for °रूढो°). —c) $P_2$ °श्वरे (for °श्वर).

999. b) D suggests °वैशसे (for °वैशसम्).

1000. d) $P_3$ °पुरान्तरे (for °पुरान्तिक)

कम्पनाधिपतिं सिम्ब कृत्वा डामरमण्डलम् ।
चकर्ष विजयक्षेत्रादन्यतोऽपि ततो नृपः ॥१००२॥

शमाला प्रययौ पृथ्वीहरो मडवराज्यतः ।
विजित्य मल्लकोष्ठेन त्याजितो निजमण्डलम् ॥१००३॥

क्षिप्ताः केचिद् वितस्ताया केचिच्चक्रवराङ्गने ।
अक्रियन्ताऽग्निसात्कष्टुमशक्या बहवः शवाः ॥१००४॥

क्रमराज्येऽथ कल्याणवाडादीन् रल्हणोऽजयत् ।
आनन्दोऽनन्तजस्तत्र ततो द्वाराधिपोऽभवत् ॥१००५॥

शूले प्रमापितं सिंहं नयन् पृथ्वीहरो बली ।
सार्धं जनकसिंहाद्यैरयुध्यत् क्षितिकातटे ॥१००६॥

तीर्थं प्रस्थाप्यमानेषु विपन्नास्थिष्विहाऽस्त्यहः ।
भाद्रे मास्येकमबलाक्रन्दिताक्रान्तदिक्पथम् ॥१००७॥

हतवीरावलाक्रन्दमुखरे नगरान्तरे ।
पृथ्वीहराहवे सर्वैर्दिवसैरन्वकारि तत् ॥१००८॥

अथाऽऽयातो यशोराजस्यालः शूरो दिगन्तरात् ।
श्रीवको विदधे राज्ञा खेरीकार्याधिकारभाक् ॥१००९॥

---

1002. a) $P_2$ विव (for सिम्ब)

1003. c) SA (without indicating a *lacuna*) $I_3$ om कोष्ठे.

1004 d) C °शक्तया (for °शक्या)

1005 b) D °वाड्या°; C S′ $P_1$ °वारा°, SA °वाळा°, $P_3$ °वाऽधा° (for °वाडा°, cf. *v* viii. 824). C S′ St रिल्ह° (for रल्ह°)

1006 a) $P_3$ शूलप्र° (for शूले प्र°)

1008 a) D (before suggestion) C S′ $P_{1-3}$ $I_3$ SA °क्रान्त°, St (before corr in corrigenda) °क्रान्द° (for °क्रन्द° suggested with D). After this *v.* युग्मम् .

1009 a) All Mss read अथ यातो (for अथाऽऽयातो suggested with St D). —b) D C S′ °श्याल° (for °स्याल°).

अप्रियं स लवन्याना तेऽपि वा तस्य नाऽऽचरन् ।
कालं तु गूढसौहार्दैरन्योन्यस्याऽत्यवीवहन् ॥१०१०॥

पुनराश्वयुजे राजा शमाला निर्गतस्ततः ।
परैर्मनीमुषग्रामे युधि भङ्गमनीयत ॥१०११॥

नित्याभ्यासेन युद्धानां लब्धोत्कर्षो न्यदर्शयत् ।
सर्ववीराग्रणीर्भिक्षुस्तत्पूर्वं तत्र विक्रमम् ॥१०१२॥

तुक्कद्विजादयो मुख्या भिक्षुपृथ्वीहरादिभिः ।
आसारापातविवशा निहताः सौस्सले बले ॥१०१३॥

प्रधानवीरभूयिष्ठे सैन्यद्वन्द्वे न कोऽप्यभूत् ।
स वीरश्चरतः संख्ये भिक्षोरैक्षिष्ट यो मुखम् ॥१०१४॥

पृथ्वीहरस्य भिक्षोश्च संग्रामे भूरिवार्षिके ।
कादम्बरीपताकाख्ये द्वे अश्वे पीतपाण्डुरे ॥१०१५॥

आस्तामत्यद्भुते याभ्यामनेकतुरगक्षये ।
न विपन्नं प्रहृतिभिर्नाऽन्वभाव्यथवा क्लमः ॥१०१६॥

सैन्यानां संकटे त्राणमश्रान्तिरविकत्थनः ।
अभूत् क्लेशसहो वीरो नाऽन्यो भिक्षाचरात् क्वचित् ॥१०१७॥

योधानां मौस्सले सैन्ये विद्रवेषु न कश्चन ।
त्राणं बभूव तेनैते बहवो बहुधा हताः ॥१०१८॥

नवेषु डामरानीकाः केचिद् भङ्गेषु सैनिकाः ।
भिक्षाचारगजेन्द्रेण कलभा इव पालिताः ॥१०१९॥

---

1010. d) D C S′ °स्य न्यवी°, $P_{1-3}$ $I_3$ °स्यान्यवी° (for °स्याऽत्यवी°).

1011. b) C °मालान्नि (for °मालां नि°)

1014. a) S′ $P_{1,2}$ $I_3$ °यिष्टे (for °यिष्ठे). —d) C S′ °रक्षिप्रियोन्मुखः (for °रैक्षिष्ट यो मुखम् ).

1017. c) $I_3$ °महो (for °सहो).

1019. a) D suggests °नीकात् (for °नीकाः found in all Mss.).

नाऽन्यस्योत्थानशीलत्वं दृष्टं पृथ्वीहरात् तदा ।
स्वयं यो भैक्षवे द्वारे जजागार प्रतिक्षपम् ॥१०२०॥

ततः प्रभृत्यभूद् गोप्ता पुरः पश्चाच्च सर्वदा ।
विश्वेदेवा इव श्राद्धे युद्धे भिक्षुर्महाभटः ॥१०२१॥

आहवे साहसं कुर्वन् सर्वतः सोऽभ्यधान्निजान् ।
एवमस्खलितस्थैर्यमुपपत्तिमसंत्यजन् ॥१०२२॥

न मे राज्याय यत्नोऽयं पर्याप्तं दुर्यशः पुनः ।
कृत्ये प्रसक्तं पूर्वेषां व्यवसायो व्यपोहितुम् ॥१०२३॥

अनाथा इव ते नाथा विशां व्यापादनक्षणे ।
ज्ञात्वा नष्टं कुलं नाथवद्भ्यो नूनं स्पृहां दधुः ॥१०२४॥

इति मत्वा सोढकष्टश्लेष्टे सुदृढनिश्चयः ।
दूयमानोऽस्मि दायाददुःखदायी दिने दिने ॥१०२५॥

नास्त्येवाऽप्राप्तकालस्य विपत्तिरिति जानतः ।
कस्य साहसवैमुख्यमुत्पद्येत यशोऽर्थिनः ॥१०२६॥

किं कार्यगतिकौटिल्यैरुक्तैस्तान्यथवा कथम् ।
न वदामः प्रतिज्ञाय स्वयमार्षेऽध्वनि स्थितिम् ॥१०२७॥

सोत्कर्षपौरुषाद् भिक्षोरशङ्किषत डामराः ।
ततो दायादविच्छेदं नाऽस्याऽकृषत जातुचित् ॥१०२८॥

---

1020. a) S′ °दीनत्व (for °शीलत्व) —d) S′ °क्षय° (for °क्षप°).
1021. c) D St $P_{1,3}$ °देव इव (for °देवा इव) $P_3$ श्रान्ते (for श्राद्धे). —d) $P_2$ $I_3$ °भटा· (for °भट ).
1022. c) $P_2$ °स्खलित (for °स्खलित°)
1023. c) $I_3$ St SA प्रसक्तु (for प्रसक्त also found in SL). —d) All Mss. read व्यवसाय (for व्यवसायो suggested with St. Tr.).
1025. a) $SA_1$ gloss स्वय (for सोढकष्टश्लेष्टे).
1026. a) $P_{1-3}$ $I_3$ SA °वप्राप्त° (for °वाऽप्राप्त°).
1027. b) C °रुत्थै° (for °रुक्तै°).
1028. d) St जातु चित् (for जातुचित् ).

प्राग्राज्याधिगमाद् राज्ञामन्येषां राजबीजिनः ।
चिन्तयन्तो व्यवहृति व्युत्पद्यन्ते शनैः शनैः ॥१०२९॥

पितुः पितामहस्याऽथ न दृष्टं तेन किंचन ।
अत एवाऽभजन्मोहं राज्यं संप्राप्तवान् पुरा ॥१०३०॥

तत् स भूयोऽपि चेदाप्स्यत् कैव वार्ता विपाटने ।
साक्षेपं वीक्षितुं जाने न दैवेनाऽप्यशक्यत ॥१०३१॥

जानंल्लवन्यकौटिल्यं प्रमादात् स हतेऽहिते ।
प्राप्नुयां राज्यमित्याशां बद्ध्वाऽहान्यत्यवाहयत् ॥१०३२॥

दस्यूनां सुस्सलो राजा मेने तत्स्वहितं मतम् ।
जिगीषुर्नीतिविक्रान्त्योः प्रयुक्तौ लिप्सुरन्तरम् ॥१०३३॥

युद्धे स्वान्स स्मरन्वैरं नाऽपासीत् तेन तेऽभजन् ।
नाऽस्मिन् विश्वासमेतस्माद्धेतोर्नाऽस्याऽभवज्जयः ॥१०३४॥

इत्थं नानामतैः पक्षप्रतिपक्षैरुपेक्षितम् ।
राष्ट्रं निखिलमेवाऽगात् सर्वतः शोचनीयताम् ॥१०३५॥

यत्संबन्धाद् विटपिनिवहैर्निग्रहव्यग्रवन्य-
व्याधप्रत्तानलपरिभवः कोऽपि नन्वन्वभावि ।
हा धिग् दन्ती विघटनपरः सोऽपि माद्यन्नमीषां
लभ्यं श्रेयो विधिविधुरितैर्नाऽन्यतो न स्वतोऽपि ॥१०३६॥

---

1031. a) D C S′ °दीक्षेत्, $P_{1,2}$ °दाक्ष्येत्, $I_3$ SA °दाप्स्येत् (for °दाप्स्यत्). —c) All Mss. except SL read सापेक्ष (for साक्षेप). After this *v* चक्कलकम्.

1032. b) C S′ हितेऽहितम् (for हतेऽहिते).

1033. c) All Mss. read जिगीषो° (for जिगीषु° suggested with St). —d) D SA $P_{1,2}$ $I_3$ प्रयुक्तो लिप्तरन्तरम्; C प्रयत्नो लिप्यनन्तरः; S′ प्रयत्नो लिप्तनन्तरम्, $P_3$ प्रयुक्तैर्लिप्सुरन्तरम् (for प्रयुक्तौ लिप्सुरन्तरम् suggested with St).

1035. a) C S′ पक्षै· (for पक्ष°).

1036. c) C S′ धात्रा (for दन्ती). —d) D C श्रेयोवि° (for श्रेयो वि°).

द्वैराज्ये प्रभवत्येवमकाण्डपतितैर्हिमैः ।
विवशं सुस्सलक्ष्माभृदजयद् भैक्षवं बलम् ॥१०३७॥

पुष्याणनाड भूयोऽपि भिक्षुपृथ्वीहरौ गतौ ।
अन्यैर्लवन्यैर्भूभर्तुर्नतिर्दत्तकरैः कृता ॥१०३८॥

सिम्बोऽपि कम्पनाधीशो व्यधाद् विजितडामरः ।
सर्वां मडवराज्योर्वीं वीरः शमितविप्लवाम् ॥१०३९॥

तावत्याऽपि विपक्षाणां शान्त्या शीतलतां गतः ।
पूर्ववैरं स्वपक्षाणां प्रादुश्चक्रे स भूपतिः ॥१०४०॥

जिघांसौ कथिते राजन्युत्लूणेन पलायितः ।
मल्लकोष्ठ सोऽपि कोपाद् राज्ञा राष्ट्रात् प्रवासितः ॥१०४१॥

अनन्तात्मजमानन्दं बद्ध्वा द्वाराधिकारिणम् ।
व्यधत्त सैन्धवं प्रज्जिनामानं राजबीजिनम् ॥१०४२॥

गतोऽथ विजयक्षेत्रं सिम्बेन सहितोऽविशत् ।
नगरं तं च विश्वस्तं बद्ध्वा कारागृहेऽक्षिपत् ॥१०४३॥

अनुस्मृतिमहावात्याप्रेरितोऽमर्षपावकः ।
आचचाम क्षमावारि तस्य भृत्यान् दिधक्षतः ॥१०४४॥

सिंहथक्कनसिंहाभ्यामनुजाभ्यां सहाऽवधीत् ।
शूलेऽधिरोप्य सिम्बं स रोषावेशविलुप्तधीः ॥१०४५॥

---

1037. b) D C S′ °मकाण्डाप°, $I_3$ °सकाण्डप° (for °मकाण्डप°).

1038. a) $P_{1-3}$ $I_3$ SA पुष्यान°, D C S′ पुष्पाण° (for पुष्याण°).

1040. c) S′ पूर्वापर (for पूर्ववैर). St $P_1$ $I_3$ °पक्ष्याणा (for °पक्षाणां). —d) St $P_{2,3}$ $I_3$ °क्रेथ (for °क्रे स)

1041 a) C S′ जिघांसु° (for जिघासौ).

कम्पने श्रीवक चक्रे सुज्जि प्रज्जे सहोदरम् ।
बद्ध्वा जनकसिंहं च राजस्थाने न्ययोजयत् ॥१०४६॥

आप्ताश्च मन्त्रिणश्चाऽऽसंस्तस्य वैदेशिकास्ततः ।
स्वदेशजस्तु सोऽभूद् यो लोहरस्थं तमन्वगात् ॥१०४७॥

अथ सर्वेऽपि साशङ्कास्तं त्यक्त्वाऽशिश्रियन्रिपून् ।
शतैकीय कश्चिदासीद् राजधान्यां नृपाश्रितः ॥१०४८॥

तेनाऽप्रतिसमाधेयो भूयः शान्तेऽप्युपद्रवे ।
इत्थमुत्थापितोऽनर्थो न पुनर्यः शमं ययौ ॥१०४९॥

एकाक्षेपे परेऽपि स्युर्यत्र भृत्या विशङ्किताः ।
तत्राऽपराधे प्राज्ञस्य राज्ञोऽवज्ञैव शस्यते ॥१०५०॥

माघेऽथ मल्लकोष्ठाद्यैराहूताः पुनराययुः ।
ते शूरपुरमार्गेण भिक्षुपृथ्वीहरादयः ॥१०५१॥

वितस्तापरिखाक्षिप्ता भूरगम्या द्विषामियम् ।
इति प्रायान्नवमठं त्यक्त्वा राजगृहं नृपः ॥१०५२॥

वर्षेऽष्टानवते चैत्रे डामरेषु युयुत्सुषु ।
अभ्येत्य मल्लकोष्ठेन प्रागेवाऽग्राहि संगरः ॥१०५३॥

सोऽश्ववारैः सह रणं चकार नगरान्तरे ।
नृपावरोधैः सौधाग्रादालोकितमथाऽऽकुलैः ॥१०५४॥

---

1048. [b]) St त्यक्त्वाध्यश्र°; $P_{1-3}$ $I_3$ त्यक्त्वाधिश्र°; SA त्यक्ताधिश्र° (for त्यक्त्वाऽशिश्रि°).

1049. [b]) C S′ $P_{1,2}$ $I_3$ भूयश्चा° (for भूय शा°).

1050. [a]) D °क्षेपेप° (for °क्षेपे प°).

1051. [ab]) SA $P_2$ °कोष्ठाद्ये आहू°; C °कोष्टाद्या आहू°, $P_1$ $I_3$ कोष्टाद्यै आहू° (for °कोष्ठाद्यैराहू°). —[c]) C S′ शूरा· पु° (for शूरपु°).

1053. [b]) C S′ रुरु° (for युयु°)

भिक्षुणा क्षितिकातीरे स्कन्धावारो न्यबध्यत।
रामेण वानरी सेना यथा पाथोनिधेस्तटे ॥१०५५॥

नृपोद्यानाद् द्रुमान् निन्युरिन्धनाय महानसे।
दूर्वाङ्कुरान्मन्दुराभ्यो वाहभोज्याय डामराः ॥१०५६॥

पृथ्वीहरस्तु संगृह्णन् दस्यून् मडवराज्यजान्।
चकार विजयक्षेत्रे यावत् कटकसंग्रहम् ॥१०५७॥

तावत् प्रज्जिमुखान्मल्लकोष्ठयुद्धाय भूपतिः।
आदिश्याऽदादवस्कन्दं वैशाखे साहसोन्मुखः ॥१०५८॥

अकस्मात् पतिते तस्मिन् हतावष्टम्भविक्षताः।
प्रययुः सेतुमुल्लङ्घ्य जीवाश्वस्ताः कथंचन ॥१०५९॥

नगरं मल्लकोष्ठाजिव्यग्रे प्रज्जावथाऽविशत्।
पृथ्वीहरानुजः सुज्जि निर्जित्य मनुजेश्वर· ॥१०६०॥

परं पारं वितस्तायाः सेतुच्छेदादनाप्नुवन्।
अर्वाचि तीरे स गृहान् दग्ध्वाऽगात् क्षितिका ततः ॥१०६१॥

लवन्यैर्नगरं प्राप्तं मत्वा सुस्सलभूपतिः।
आययौ विजयक्षेत्रात् सैन्यमुत्थाप्य विह्वलः ॥१०६२॥

---

1055. b) St (before corr. in corrigenda) $P_{1-3}$ $I_3$ SA स्कन्दावार; St (after suggestion) स्कन्धावार; S′ स्कन्धवार (for स्कन्धावारो). SA (without indicating a *lacuna*) D St $P_{1-3}$ $I_3$ om. *cd*.

1056. c) $I_3$ om न्मन्दु.

1058. c) SA $P_{1,3}$ $I_3$ C S′ °दावव°; $P_2$ °दवव° (for °दादव°)

1059. b) $P_{1,2}$ $I_3$ SA °विक्षतः (for °विक्षता). —d) D C S′ जीव° (for जीवा°).

1060 b) $P_2$ $I_3$ प्रज्ञा°; S′ प्रजा°, $P_3$ प्राज्ज° (for प्रज्जा°).

1061 a) St $P_{1-3}$ $I_3$ °स्तायां (for °स्ताया). —d) $P_{1,2}$ $I_3$ SA दग्ध्वाग्रा° (for दग्ध्वागा°).

अहंपूर्विकयाऽरातिशङ्कार्तैश्च निजैर्बलैः ।
पीडितस्तस्य गम्भीरासिन्धुसेतुरभज्यत ॥१०६३॥

स कृष्णषष्ठ्यां ज्यैष्ठस्य तस्याऽसंख्यश्चमूचयः ।
यथाऽग्निना चक्रधरे तथा तत्राऽम्भसा मृतः ॥१०६४॥

भुजमुद्यम्य शमयन् सैन्यानां संभ्रमं नृपः ।
त्रस्तैर्भ्रष्टैस्तथा पृष्ठे पतितः सरिदन्तरे ॥१०६५॥

अनभ्यस्ताम्बुतरणैराश्लिष्य ब्रुडितोऽसकृत् ।
तरदायुधविद्धाङ्गः स निस्तीर्णः कथंचन ॥१०६६॥

अनुत्तीर्णं बलं त्यक्त्वा पारे सामन्तसंकुलम् ।
सहस्रांशेन सैन्यस्य तीर्णेनाऽनुगतो ययौ ॥१०६७॥

संत्यक्तानन्तसैन्योऽपि सोऽवष्टम्भमयो नृपः ।
प्रविश्य नगरं मल्लकोष्ठमुख्यान् रणेऽग्रहीत् ॥१०६८॥

विजयस्याऽथ जननी सिल्लाख्या स्वामिनोज्झितम् ।
निनाय देवसरसं सैन्यं तद् विजयेश्वरात् ॥१०६९॥

साऽथ पृथ्वीहरेणैत्य हता तत्रोपवेशने ।
टिक्कश्च दत्तो भूपालसैन्यं विद्रावितं च तत् ॥१०७०॥

परं व्यायामविद्याविद् विद्रुते निखिले बले ।
द्विजः कल्याणराजाख्यः समरेऽभिमुखो हतः ॥१०७१॥

मन्त्रिडामरसामन्तसंकुलात् सौस्सलाद् बलात् ।
पृथ्वीहरेणाऽगृह्यन्त बद्ध्वा वृन्दानि शस्त्रिणाम् ॥१०७२॥

---

1063. b) C S′ °सक्रान्तै°, $P_2$ $I_3$ °शकाते° (for °शङ्कार्तै°). —d) C S′ गम्भीर (for गम्भीरा°)

1065. a) C S′ मुजाबु°; $P_1$ मुवामु° (for मुजमु°). —c) $P_3$ °भ्रंष्ट (for °भ्रंष्टै°) S′ $P_1$ $I_3$ पृष्टे (for पृष्ठे)

1066 c) C S′ तरसायुद्ध° (for तरदायुध°).

1068. S′ om *ab*. —b) D C ययौ (for नृप )

1069. b) C S′ मिल्ला° (for सिल्ला°). C S′ °नोर्ज्जि° (for °नोज्झि°).

अन्वगात् स वितस्तान्तं यावत्तान्विद्रुतान् बलात् ।
ओजानन्दद्विजादींश्च बद्ध्वा शूले व्यपादयत् ॥१०७३॥

मन्त्रिणो जनकश्रीवकाद्या राजात्मजास्तथा ।
तीर्त्वाऽद्रिं विष्लाटाया शरणं प्रययुः खशान् ॥१०७४॥

इत्थं पृथ्वीहरो लब्धजयः संगृह्य डामरान् ।
जिगीषुर्भिक्षुणा साकं नगरोपान्तमाययौ ॥१०७५॥

भूयोऽपि मानुषाश्वौघसंहर्ता सर्वतस्ततः ।
रणः प्रववृते प्राग्वत् पुरे रुद्धस्य भूपतेः ॥१०७६॥

निर्निरोधः पथाऽनेन नृपावसथ इत्यभूत् ।
सैन्ये मडवराज्याना स्वयं पृथ्वीहरोऽग्रणीः ॥१०७७॥

तत्तत्सामन्तकुलजैर्वीरैः काश्मीरकैर्भटैः ।
समेतं डामरकुलं दुर्जयं सर्वतोऽभवत् ॥१०७८॥

काश्मीरका शोभकाद्याः काकवंश्याः सहस्रशः ।
प्रख्याता भैक्षवे पक्षे रत्नाद्याश्चाऽपरेऽस्फुरन् ॥१०७९॥

नदतः स्वबलाद् वाद्यं तुमुलं शृण्वतोन्मिषत् ।
पृथ्वीहरेणाऽगण्यन्त वाद्यभाण्डानि कौतुकात् ॥१०८०॥

हित्वा भूर्यथ तूर्यादि परिच्छेत्तुं स कौतुकी ।
श्वपाकदुन्दुभीभाण्डशतानि द्वादशाऽशकत् ॥१०८१॥

---

1073 ab) C S′ °स्तान्तर्या°, $P_3$ °स्तान्तया° (for °स्तान्त या°)

1074 d) C S′ स्वशान् (for खशान् ).

1078. d) C S′ सर्वता° (for सर्वतो°)

1079. a) $P_3$ काश्मीरि° (for काश्मीर°)

1080 a) D $P_2$ वाद्य° ( for वाद्य ). —b) C S′ °ता मिषात् (for °तोन्मिषत् ).

1081 c) $P_3$ °ड्न्द्व° (for °दुन्दु°)

तथा विनष्टसैन्योऽपि त्रिंशद्विंशैर्नृपात्मजैः ।
मितैः स्वदेशजैश्चाऽरीन् प्रतिजग्राह सुस्सलः ॥१०८२॥

राजन्याविच्छटिकुलोद्भूतावुदयधन्यकौ ।
चम्पावल्लापुराधीशावुदयब्रह्मजज्जलौ ॥१०८३॥

ओजो मल्हणहंसानां धुर्यो हरिहडौकसः ।
क्षत्रिकाभिञ्जिकास्थानसव्यराजादयस्तथा ॥१०८४॥

विडालपुत्रा नीलाद्या भावुकान्वयसंभवाः ।
रामपाल सहजिको युवा तस्य च नन्दनः ॥१०८५॥

नानावंश्याः परेऽप्युग्रसंग्रामव्यग्रताजुषः ।
पुरोपरोधसंनद्धानरुन्धन् सर्वतो रिपून् ॥१०८६॥

तनूजनिर्विशेषेण रिल्हणेन महीभुजः ।
रणाग्रेसरताऽग्राहि विजयाद्यैश्च सादिभिः ॥१०८७॥

स्वयमुद्यमिना राज्ञा वर्मणेव निजौ भुजौ ।
सुज्जिप्रज्जी पाल्यमानावभूतां रणकर्मठौ ॥१०८८॥

ताभ्यां साधारणीकुर्वन् राज्योत्पत्तिं महीपतिः ।
स महाव्यसने तस्मिन् सम्यगूढधुरोऽभवत् ॥१०८९॥

तत्पक्षा भागिकशरद्धासिमुम्मुनिसङ्गटाः ।
कलशाद्याश्च कुशला विपक्षक्षोभणेऽभवन् ॥१०९०॥

---

1083. b) C °धान्यकौ, S′ °दान्यकौ (for °धन्यकौ).

1084. a) $SA_1$ D तेजोमल्ह°; C S′ तेज सल्ह°; $I_3$ $P_{1-3}$ ओजोसल्ह° (for आजो मल्ह° also found in $SA_1$ in marg SL) —c) St (after corr. in corrigenda) क्षत्रिकाभिञ्भिका°; SL क्षत्रियभिञ्जिका°; S′ क्षत्रिभिज्जिका°, $P_2$ क्षत्रिकाभिञ्झिका°, $P_3$ क्षत्रिकाभिञ्भिका° (for क्षत्रिकाभिञ्जिका°).

1085. c) $P_3$ साह° (for सह°)

1086. c) $P_3$ °सरु° (for °सन°) After this *v* $P_3$ adds चक्कलकम्.

1090. b) St (before suggestion) D C S′ $P_{1-3}$ $I_3$ °मुङ्गटाः; St suggests °मुञ्जजा; SL °सुगटा (for °सगटा suggested with St. Tr cf *vv*. vii 589, viii. 2178, 2183).

भूभर्तुष्टक्कविषये लवराजस्य नन्दनः ।
आसीत् कमलियश्चाऽस्य संग्रामाग्रेसरः प्रभोः ॥१०९१॥

प्रहारं बलिनस्तस्य चामरध्वजशोभिनः ।
प्रभिन्नस्येव नागस्य हयारोहा न सेहिरे ॥१०९२॥

अनुजः सङ्गिक पृथ्वीपालो भ्रातुः सुतोऽस्य च ।
पाञ्चालाः फाल्गुनस्येव पार्श्वरक्षित्वमाययुः ॥१०९३॥

एतावद्भिर्भृत्यरत्नै राष्ट्रेऽपि कुपितेऽजयत् ।
भूरिस्वर्णार्पणोपात्तैर्वाजिभिश्च महीपतिः ॥१०९४॥

तत्र तत्राऽऽहवे सोऽपि बभ्रामाऽसंभ्रमो नृपः ।
उत्सवे गृहमेधीव मण्डपे मण्डपे स्वयम् ॥१०९५॥

तस्य हि व्यसनं त्रासहेतुः प्राभूदुपक्रमे ।
प्रवृद्धिं प्राप्तमभवद् धैर्यादाय्यथ धीमतः ॥१०९६॥

क्लैब्यकृद्भयमापाते मध्यपाते न तादृशम् ।
करक्षिप्तं यथा शीतं मज्जने न तथा पयः ॥१०९७॥

वैरिसैन्यतमो यत्र यत्र ज्योत्स्नेव निर्ययौ ।
सितासिता च भूभर्तुस्तत्र तत्राऽस्य वाहिनी ॥१०९८॥

एकदा कृतसंकेतास्तुल्यमाहवमेलके ।
महासरितमुत्तीर्य डामरा नगरेऽपतन् ॥१०९९॥

---

1091. c) C S′ कमल° (for कमलि°)
1093 c) D C S′ $P_{1,3}$ SA पाञ्चालो, $I_3$ $P_2$ पाचालो (for पाञ्चालाः suggested with St) St SA फल्गु° (for फाल्गु°)
1094. c) $P_1$ $I_3$ °पातै° (for °पात्त°).
1096. c) C प्रवृद्धि° (for प्रवृद्धि).
1097. b) C °पातेन (for °पाते न) —d) C मज्जनेन (for मज्जने न).

असीमनगरस्थानविभक्तकटको नृपः ।
परिमेयाश्ववारस्तान् विशतः स्वयमाद्रवत् ॥११००॥

नाऽभजड्डामरानीकस्तेन विद्रावितो धृतिम् ।
हेमन्तमरुता कीर्णपर्णराशिरिवेरितः ॥११०१॥

श्यानन्दः काककुलजो लोष्टशाह्यनलादयः ।
अन्ये च डामरानीके ख्याता भूभृद्भटैर्हताः ॥११०२॥

लग्नाभिघातानानीतान् राज्ञः क्रूरस्य दृक्पथम् ।
बहून् निजघ्नुश्चण्डाला इव राजोपजीविनः ॥११०३॥

भयाद् गोपाद्रिमारूढाश्चाऽपरे भैक्षवास्ततः ।
आसन्नमृत्यवोऽभूवन् कटकैर्वेष्टिता द्विषाम् ॥११०४॥

यो मार्गो दुर्गमः पत्रिणोऽपि त्रातुं ततः स तान् ।
तत्र व्यापारयामास भिक्षुर्मानी तुरंगमान् ॥११०५॥

कथंचित् पत्रिणा विद्धग्रीवस्तस्याऽग्रहीन्मुहुः ।
पार्श्वे पृथ्वीहरो रूढिं छिन्नाश्चाऽन्ये महाभटाः ॥११०६॥

वेलाद्रिभिरिवोद्वृत्तैः सिन्धौ तैर्द्विषतां बले ।
रुद्धे गोपाचलं त्यक्त्वा तेऽन्यानारुरुहुर्गिरीन् ॥११०७॥

अथोदतिष्ठद् वामेन राजानीकस्य वाहिनी ।
मल्लकोष्ठस्य पत्त्यश्वक्षोभिताशेषदिक्तटा ॥११०८॥

---

1102. a) D C S′ $I_3$ $P_{1,2}$ आनन्द (for श्यानन्द) —b) C °शाख्य° (for °शाह्य°) C S′ °ह्वय, $P_1$ $I_3$ °हय (for °दय).

1103 a) C S′ लग्नाभिधाना नानीता (for लग्नाभिघातानानीतान्) —c) C S′ °श्चाण्डाला (for °श्चण्डाला).

1104 b) St $P_{1-3}$ अपरे (for °श्चाऽपरे). —d) C S′ $P_{1-3}$ $SA_1$ दिशाम् (for द्विषाम्)

1108. a) C S′ °तिष्ठत् सुस्सेन; D (before suggestion) SA °तिष्ठ मेन; $P_{1-3}$ $I_3$ °तिष्ठ सेन (for °तिष्ठद् वामेन suggested with St D).

अरिपृष्ठग्रहव्यग्रैस्तिष्ठन् स्वैर्वर्जितो बलैः ।
तदाऽज्ञाय्यखिलैरेष हतो राजेत्यसंशयम् ॥११०९॥

आपातं सुस्सलो राजा यावत् तस्याऽविसोढवान् ।
तावत् सावरजः प्रज्जिराजगाम रणाङ्गनम् ॥१११०॥

आषाढबहुलाष्टम्यां स हयारोहमेलकः ।
निजशस्त्रध्वनिप्रत्तसाधुवादो महानभूत् ॥११११॥

ताभ्यां स शमितो युद्धे ससूनुः ससमीरणः ।
दावो नभोनभस्याभ्यामिव प्राप्ताम्बुवृष्टिभिः ॥१११२॥

संग्रामबहुले काले तादृगन्यो न कोऽप्यभूत् ।
यादृक् स दिवसो वीर्यशौटीर्यनिकषोपलः ॥१११३॥

अनीकिनी लाहरी सा विलम्बेनाऽऽययाविति ।
तेषामुत्पाटनेच्छूनां नाऽभवद्धस्तमेलकः ॥१११४॥

अन्योन्यस्य परिज्ञाता दिवसे तत्र संकटे ।
भिक्षोर्भूमिभृता शक्तिर्भूमिभर्तुश्च भिक्षुणा ॥१११५॥

ततो मडवाराज्यास्तान् योद्धुं तत्रैव निर्दिशन् ।
क्षितिकारोधसा युद्धमेत्य पृथ्वीहरोऽग्रहीत् ॥१११६॥

दिगन्तरादथाऽऽयातो यशोराजो महीभुजा ।
मण्डलेश्वरतां निन्ये रिपून् प्रतिजिहीर्षुणा ॥१११७॥

---

1110 b) D तस्या (for तस्या°) —c) C S′ °वरज° (for °वरज॰). $P_1$ $I_3$ SA प्राज्जि° (for प्रज्जि°).

1111 c) $P_1$ $I_3$ °शस्त्रा° (for °शस्त्र°)

1112. a) St $P_{1-3}$ $I_3$ SA SL शमिते, St. Tr. suggests शमिता (for शमितो) —c) D °नमस्या° (for °नभस्या°) —d) All Mss. read प्रापाबु° (for प्राप्ताम्बु° suggested).

1113 a) S′ सग्रामे (for सग्राम°) C S′ °हुले (for °हुले). —b) $P_2$ °गन्ये (for °गन्यो).

1114 b) $P_1$ $I_3$ SA विलम्भे° (for विलम्बे°).

1117. d) D C प्रति जि° (for प्रतिजि°). D suggests °जिगीषुणा (for °जिहीर्षुणा)

खेरीकार्ये पुरा तस्य लवन्या दृष्टविक्रमाः ।
रणेषु मुखमालोक्य शतशः प्रचकम्पिरे ॥१११८॥

कुङ्कुमालेपनच्छत्रहयादिप्रतिपत्तिदः ।
सर्वेषामभिनन्द्यत्वं तं राजा स्वमिवाऽनयत् ॥१११९॥

दीर्घोपप्लवयाप्येन दुस्स्थतः स्वास्थ्यलिप्सया ।
जनो बबन्ध तत्राऽऽस्थां नववैद्य इवाऽऽतुरः ॥११२०॥

ज्यायांसं पञ्चचन्द्राख्यं शेषाणां गर्गजन्मनाम् ।
नृपतिर्मल्लकोष्ठस्य प्रातिपक्ष्ये न्ययोजयत् ॥११२१॥

शिशुस्छुड्डाख्यया मात्रा पालितः स शनैः शनैः ।
आश्रीयमाणोऽनुचरैः पित्र्यैः किंचित् प्रथां ययौ ॥११२२॥

यशोराजानुयातेन राज्ञा जन्येषु निर्जिताः ।
केचित् तत्पक्षमभजन् भग्नाः केचिच्च डामराः ॥११२३॥

सभिक्षु प्रययौ पृथ्वीहर स्वमुपवेशनम् ।
मल्लकोष्ठोन्मुखो राजा निर्जगामाऽमरेश्वरम् ॥११२४॥

अत्रान्तरे मल्लकोष्ठो विसृज्य निशि तस्करान् ।
सदाशिवान्तिके शून्यां राजधानीमदाहयत् ॥११२५॥

पृथ्वीहरेण भूयोऽपि योद्धुमागच्छताऽसकृत् ।
प्रज्जिसुज्जिमुखा युद्धमकुर्वन् क्षितिकातटे ॥११२६॥

---

1120. a) C S′ °प्येष (for °प्येन)
1121. d) $P_2$ SA प्रातिपक्षे (for प्रातिपक्ष्ये)
1122 a) St °स्छुडा° (for °स्छुड्डा°).
1123. $P_2$ om. *cd*. —c) $P_1$ $I_3$ SA तान्पक्ष° (for तत्पक्ष°)
1124. $P_2$ om *ab*. —a) D स भिक्षु (for सभिक्षु)

वारं वारं लवन्य स नगरे निर्दहन् गृहान्।
प्रायः शून्यत्वमनयद् वितस्तातीरमुत्तमम् ॥११२७॥

तत्र तत्र रणान् कुर्वन् प्राणसंदेहदायिनः।
आचक्रामाऽथ नृपतिर्ल्हर बहलैर्बलैः ॥११२८॥

सिन्धुं तरन्तो निस्सेतुं दृतिभङ्गाद् ययुर्जले।
मन्दिरं कन्दराजाद्यास्तदीयाः समवर्तिनः ॥११२९॥

दरद्देशं ययौ मल्लकोष्ठो राज्ञा निराकृतः।
सपुत्राऽप्यभजच्छुड्डा प्रारोहं लहरान्तरे ॥११३०॥

आनिन्यिरे जय्यकेन लवन्येन नृपान्तिकम्।
विषलाटान्तरात् तेऽथ जनकश्रीवकादयः ॥११३१॥

लहरारब्ध्यतिक्रान्तनिदाघः शरदागमे।
शमाला निर्ययौ राजा यशोराजान्वितस्ततः ॥११३२॥

भग्नं पृथ्वीहरत्रासात् सैन्यं रक्षन् मनीमुषे।
आजौ सज्जात्मजो डोम्बनामा राजसुतो हतः ॥११३३॥

युद्धं सुवर्णसानूरग्रामशूरपुरादिषु।
कुर्वञ्शश्वन्नृपः प्राप पर्यायेण जयाजयौ ॥११३४॥

श्रीकल्याणपुराद् भङ्गं नीते पृथ्वीहरादिभिः।
श्रीवके नागवट्टाद्या युधि प्रापुः प्रमापणम् ॥११३५॥

---

1127. c) $P_2$ °नयन् (for °नयद्).
1128. a) $P_2$ रणात् (for रणान्). —d) $P_2$ °ह्रे (for °हर). C S′ °ह्ल ब° (for °ह्लैर्ब°).
1129. a) St $P_{1-3}$ $I_3$ नि·सेतु तरतः सिन्धुं (for सिन्धु तरन्तो निस्सेतु). —b) C S′ °द्यु° (for °द् ययु°)
1130. a) $P_2$ °देशे (for °देश). —d) $P_{1,2}$ प्रारोहे (for प्रारोह).
1133. b) C S′ मुनी° (for मनी°). —c) C S′ डम्भ° (for डोम्ब°). —d) S* हृत· (for हत·).

पौषे सुवर्णसानूराञ्चिहन्तुं मातुरन्तिकम् ।
टिक्क स देवसरस व्यसृजद् गर्गवल्लभाम् ॥११३६॥

स्वेन राज्ञश्च सैन्येन सहिता सा जिताहिता ।
अकस्मात् तत्र टिक्केन निपत्य निहता युधि ॥११३७॥

स स्त्रीवधं व्यधात् पापी द्वितीयमपि निर्घृणः ।
विशेषः कोऽथवा तिर्यङ्म्लेच्छतस्कररक्षसाम् ॥११३८॥

अबलां स्वामिनीं हन्यमानां त्यक्त्वा पलायिताः ।
चित्रं पशूपमाः शस्त्रं स्त्रीचकुर्लोहराः पुनः ॥११३९॥

ईषत् प्रागागतं शय्यां भूय एवोल्बणं नृपः ।
ज्ञात्वा मडवराज्य स प्रययौ विजयेश्वरम् ॥११४०॥

मल्लराजतनूजानां निजा जिह्वेव दुर्जना ।
बभूव प्रभविष्णुत्वे व्यापदापातदूतिका ॥११४१॥

प्रायश्चाऽद्यतने काले भृत्यास्तितउवृत्तयः ।
दर्शयन्ति समुत्सार्य सारं दोषतुषग्रहम् ॥११४२॥

आबाल्यात् संस्तुताश्लीलवचःपरुषभाषितैः ।
निर्गौरवैर्यशोराजो राज्ञि तस्मिन् व्यरज्यत ॥११४३॥

स दुर्जातिर्महासैन्ययुतोऽवन्तिपुरस्थितः ।
अभजत् तत उत्थाय प्रतिपक्षसमाश्रयम् ॥११४४॥

---

1136. b) St °रन्तकम् (for °रन्तिकम्, cf St. Tr. fn.).

1138 b) $P_{1-3}$ $I_3$ SA द्वितीयामपि (for द्वितीयमपि).

1139. b) $P_1$ $I_3$ SA °यितः (for °यिता·).

1140. a) $P_2$ °गता (for °गत). —c) C मडर° (for मडव°).

1143. a) C °त. शील° (for °ताश्लील°).

वैरिपक्षगते तस्मिन् बलैः सर्वोत्तमैः समम् ।
विह्वलो विजयक्षेत्रात् पलायिष्ट महीपतिः ॥११४५॥

धिग्राज्यं यत्कृते सोऽपि सेहे प्राणान् रिरक्षिषुः ।
मुष्णद्भिश्चौरचण्डालप्रायैः परिभवं पथि ॥११४६॥

माघे पलाय्य नगरं प्रविष्टः स वथाभिधे ।
भृत्ये द्रोग्धर्यशङ्किष्ट स्वेषामपि तनूरुहाम् ॥११४७॥

काश्मीरिके जनेऽशेषे निराशो नितरां ततः ।
अङ्कन्यस्तोत्तमाङ्गोऽभूत् प्रज्जिपक्षे क्षमापतिः ॥११४८।

मुद्रिता रुद्रपालादिपूर्वराजात्मजप्रथा ।
प्रज्जिना विक्रमत्यागनयाद्रोहादिभिर्गुणैः ॥११४९॥

तेनैव वर्धिताऽमुत्र देशे विशदकीर्तिना ।
कालदौरात्म्यलुठिता प्रतिष्ठा शस्त्रशास्त्रयोः ॥११५०॥

अमन्त्रयत संगम्य यशोराजस्तु भिक्षुणा ।
नेच्छन्ति डामरा राज्यं तव विक्रमशङ्किताः ॥११५१॥

उत्पाद्य पुनरुत्पिञ्जं साधिष्ठानबला वयम् ।
राज्यं स्वयं ग्रहीष्यामो यास्यामो वा दिगन्तरम् ॥११५२॥

इति तैर्मन्त्रिते छुड्डां हतां श्रुत्वा दरत्पुरात् ।
आगत्य मल्लकोष्ठोऽपि प्राविशत् स्वोपवेशनम् ॥११५३॥

---

1146 a) C S′ यद्गतः (for यत्कृते).
1147. b) $P_2$ सर्वथा (for स वथा°).
1148. a) St (before corr. in corrigenda) काश्मीरके (for काश्मीरिके).—b) All Mss. read निराशे (for निराशो suggested with St).
1153. a) $P_2$ $I_3$ SA °तैच्छुड्डां°; C S′ °ते च्छुड्डा, $P_3$ °तै· श्रुत्वा (for °ते छुड्डां). —b) $P_3$ च्छुड्डां हता (for हता श्रुत्वा).

वर्षोऽथ दुस्तरः ख्यात एकान्नशतसंख्यया।
सर्वभूतान्तकृल्लोके प्रावर्तत सुदारुणः ॥११५४॥

वसन्ते डामराः सर्वे प्राग्वन्मार्गैर्निजैर्निजैः।
आगत्य भूयो भूपालं नगरस्थमवेष्टयन् ॥११५५॥

धीरः सुस्सलदेवोऽपि पुनरासीद् दिवानिशम्।
निस्सीमसमरस्तोमारम्भसंरम्भभाजनम् ॥११५६॥

दाहलुण्ठनसंग्रामकर्मशौण्डैः स डामरैः।
प्राग्विप्लवेभ्योऽप्यधिको विप्लवः पर्यवर्धत ॥११५७॥

महासरित्पथे निर्निरोधे तस्थुर्विविक्षवः।
नगरं ते यशोराजभिक्षुपृथ्वीहरादयः ॥११५८॥

ततः कतिषुचिद् युद्धाहेषु यातेषु संगरे।
निजेनैव यशोराजः परकीयभ्रमाद्धतः ॥११५९॥

कथ्यात्मजेन हि समं विजयाख्येन सादिना।
सौस्सलेन तु संग्रामे परावृत्तीः प्रदर्शयन् ॥११६०॥

विप्रलब्धैः सवर्णाश्वकवचावेक्षणान्निजैः।
शूलायुधिभिरुद्दामैः शूलाघातैरहन्यत ॥११६१॥

भिक्षो राज्यं समर्थोऽयं दातुं हर्तुं ततश्च नः।
भीत्या तैर्डामरैरेव स घातित इति श्रुतिः ॥११६२॥

यथैव तेन विश्वस्तः स्वामी द्रोहेण वञ्चितः।
तथैव प्राप विश्वस्तः क्षिप्रमेव वधं मृधे ॥११६३॥

---

1154. b) $P_2$ एको° (for एका°).

1157. d) $SA_1$ (before corr.) ......भूत् (for पर्यवर्धत ).

1160 c) D °ले न (for °लेन).

1161. $P_3$ om. *ab* —a) C S′ सुवर्णा°; D स वर्णा° (for सवर्णा°).

1162. b) St C S′ $P_2$ हन्तुं (for हर्तुं).

1163 b) C स्वामि° (for स्वामी)

पृथ्वीहरस्तत्र तत्र योधयित्वाऽथ डामरान्।
क्षितिकारोधसा भूयोऽभ्येत्य संग्राममग्रहीत् ॥११६४॥

तत्राऽधिष्ठानयोधानां भिक्षुपक्षोपजीविनाम्।
पौरुषं स्वपरोत्कर्षपरिभावि व्यभाव्यत ॥११६५॥

वह्निदानमहायोधसंहाराद्यैरुपद्रवैः।
एकमेकमहस्तत्राऽनेहस्यासीद् भयावहम् ॥११६६॥

अतपत् तरणिस्तीक्ष्णमभीक्ष्णं भूरकम्पत।
ववुर्द्रुमादीन् भञ्जन्तो महोत्पातप्रभञ्जनाः ॥११६७॥

पवनोत्थापितैः पांसुकूटैर्दभ्रे महोद्धतैः।
व्योम्नि प्रोत्तम्भनस्तम्भभङ्गिर्निर्घातदारिते ॥११६८॥

ज्येष्ठस्य शुक्लैकादश्यां प्रवृत्तेऽथ महारणे।
काष्ठीले डामरा वह्निमेकस्मिन् प्रददुर्गृहे ॥११६९॥

सोऽग्निर्वा मारुतोद्धूतः प्रसरन् वैद्युतोऽथ वा।
जज्वालैकपदे कृत्स्नं नगरं निरवग्रहः ॥११७०॥

दृष्टस्तदानीमेतावद् गजव्यूह इवाऽपतन्।
माक्षिकस्वामिनो धूमो बृहत्सेतौ यदुत्थितः ॥११७१॥

अथेन्द्रदेवीभवनविहार सहसाऽगमत्।
ततो नगरमुज्ज्वालं क्षणात् सर्वमदृश्यत ॥११७२॥

---

1165 c) St. Tr SL सुपरो° (for स्वपरो°). C S′ °रोत्कर्ष (for °रोत्कर्ष°).

1168. b) C S′ मुदोद्धतै°, St SA SL मदोद्धतै. (for महोद्धतै also found in SL).

1169. a) St C S′ $P_{2,3}$ ज्यैष्ठस्य (for ज्येष्ठस्य).

1170. a) St C S′ SA SL $P_{2,3}$ मारुतोद्भूत° (for मारुतोद्धूत)

1171. b) $SA_1$ (before corr ) D C S′ $P_{1,3}$ $I_3$ °वापतत् (for °वाऽपतन्).

1172. a) C °देवो (for °देवी°).

न भूमिर्न दिशो न द्यौर्धूमध्वान्ते व्यभाव्यत ।
हुडुक्कामुखचर्माभो दृश्यादृश्योऽभवद् रविः ॥११७३॥

धूमान्धकारसंच्छन्नास्तत प्रज्वलताऽग्निना ।
अपुनर्दर्शनायेव मुहुराविष्कृता गृहाः ॥११७४॥

वितस्ताऽदृश्यतोज्ज्वालवेश्माश्लिष्टतटद्वया ।
रक्ताक्तोभयधारेव कृतान्तस्याऽसिवल्लरी ॥११७५॥

ब्रह्माण्डोर्ध्वकवाटान्तसंस्पर्शात् पतितोन्नतैः ।
ज्वालाकलापैः संवृद्धैर्हैमच्छत्रवनायितम् ॥११७६॥

उच्चावचैर्युतो ज्वालाशृङ्गैर्हेमाद्रिसंनिभः ।
वह्निर्धूमच्छलान्मूर्ध्नि बभाराऽम्बुधरावलिम् ॥११७७॥

आविर्भवन्तो ज्वालाभ्यो गृहाश्चक्रुर्मुहुर्मुहुः ।
अदग्धा एत इत्याशां विमुग्धगृहमेधिनाम् ॥११७८॥

ज्वलितैस्तापितजला वितस्ता पतितैर्गृहैः ।
औवोष्मवेदनाक्लेशं विवेद सरितां प्रभोः ॥११७९॥

दीप्तपक्षैः खगैः साकं ज्वलिता बालपल्लवाः ।
उद्यानद्रुमषण्डानां व्योमोड्डयनमादधुः ॥११८०॥

सुधासिताः सुरगृहा ज्वालासंवलिता व्यधुः ।
क्षयसंध्याम्बुदाश्लिष्टहिमाद्रिशिखरभ्रमम् ॥११८१॥

---

1174. b) C S′ $P_3$ °लिता° (for °लता°) —c) C S′ °यैव (for °येव)
1175 $P_2$ om *bc*
1177. a) C S′ °यँतो, $P_2$ °हॅतो (for °युंतो).
1178. a) $P_{1-3}$ $I_3$ SA °भवन्त्यो (for °भवन्तो). —c) St (before suggestion) D C S′ $P_{1,2}$ $I_3$ SA °यत (for एत found in $P_3$).
1180. d) C S′ °माययु (for °मादधु ).
1181. c) C S′ °समाश्लिष्ट° (for °म्बुदाश्लिष्ट°).

मज्जनावासनौसेतुकदम्बैः प्लोषशङ्कया ।
अपास्तैर्नगरस्याऽन्तर्ययुर्नद्योऽपि शून्यताम् ॥११८२॥

किमन्यन्मठदेवौकोगृहाट्टादिविवर्जितम् ।
नगरं क्षणमात्रेण दग्धारण्यमजायत ॥११८३॥

लोष्टावशेषे नगरे धूमश्यामो निरास्पदः ।
उच्चैरेको बृहद्बुद्धो दृष्टो दग्धद्रुमोपमः ॥११८४॥

सैन्येषु ज्वलितावासत्राणाय चलितेष्वथ ।
शतमात्रेण योधानां युतो भूभृदजायत ॥११८५॥

पारं गन्तुं वितस्तायाश्छिन्नसेतुं तमक्षमम् ।
लब्धरन्ध्रा द्विषोऽनन्ता निहन्तुं पर्यवारयन् ॥११८६॥

पुरं दग्धं स्वमुत्सन्नं प्रजा नष्टाश्च चिन्तयन् ।
आसन्नं मरणं राजा निर्विण्णो बह्वमन्यत ॥११८७॥

प्रस्थास्नुमथ तं प्रत्यङ्मुखमाशङ्क्य विद्रुतम् ।
संश्रितोऽन्यैः कमलिय क्व देवेत्यब्रवीद् वचः ॥११८८॥

संरम्भस्मितविद्योति चन्दनोल्लेखमाननम् ।
परिवर्त्य निरुद्धाश्वो धीरः स तमभाषत ॥११८९॥

तदद्य करवै भूमेः कृते हम्मीरसंगरे ।
चकार राजा भिज्जो यत् सोऽभिमानी पितामहः ॥११९०॥

---

1185. d) $P_2$ यतो (for युतो)

1187. a) D $P_2$ समुत्पन्न, $P_{1,3}$ $I_3$ SA स्वमुत्पन्न, C S′ स्वमत्यन्त (for स्वमुत्सन्न suggested with St)

1188 c) C S′ °मल° (for °मलि°). —d) C S′ द्रवे° (for देवे°).

1189. c) $P_3$ रुद्धाध्वो (for रुद्धाश्वो).

1190 a) C S′ तदन्य (for तदद्य) —c) C S′ भिज्ञो (for भिज्जो).

कुतस्त्योऽप्येष दायादो यद्भ्राताऽस्माकमस्मि वा।
स हर्षदेवोऽपश्यन्नः कार्यशेषं पलायितः ॥११९१॥

को नाम मानिनां पङ्क्तौ प्रविष्टोऽन्ते निजां भुवम्।
असिक्तां स्वाङ्गरक्तेन व्याघ्रः कृत्तिमिवोज्झति ॥११९२॥

इत्युक्त्वोदश्रयन् वल्गामुत्क्षिप्ताग्रमुखं हयम्।
संस्प्रष्टुमिच्छुः पाणिभ्यां कृपाणमुदनामयत् ॥११९३॥

ततो निगृह्य वल्गायां वाजिनं लवराजजः।
ऊचे भृत्येषु सत्स्वग्रे प्रवेशार्हो न भूभुजः ॥११९४॥

प्रहारविक्लवस्तिष्ठन् गृहादेकोऽभ्युपाययौ।
संकटे तत्र भूभर्तुः पृथ्वीपालोऽन्तिकं परम् ॥११९५॥

कौलपुत्र्यं स्तुवंस्तस्य वात्सल्यादेष भूपतिः।
स्वस्याऽऽत्तनिष्क्रियां मेने सेवाविष्कृत्युपक्रियाम् ॥११९६॥

अथ स्थितास्त्रिभिर्व्यूहैरहितास्तेऽकिरञ्शरान्।
हन्तुं वामन ते योधाः सर्वे वाहनदुर्मदाः ॥११९७॥

स प्रेरयंश्च तुरगं दैवात् तस्य च तादृशः।
सहस्राण्यपि भूरीणि व्यधीयन्त विरोधिनाम् ॥११९८॥

अल्पसैन्यो द्विषत्खड्गमण्डलप्रतिबिम्बितः।
नृपः साहायकायातविश्वरूप इवाऽऽबभौ ॥११९९॥

---

1191. [a]) $P_2$ $I_3$ SA कुतस्त्येप्येष (for कुतस्त्योऽप्येष).

1192. [c]) D $P_3$ °रक्ता ; $P_1$ SA °रक्ता, C S′ St °रक्तात्का, SL °रक्ता वा, $P_2$ °रक्ता च, $I_3$ °रक्ताग: (for °रक्तेन suggested with St. Tr ). —[d]) C S′ व्याल (for व्याघ्र )

1193. [c]) All Mss. read सप्रष्टु° (for सस्प्रष्टु° suggested with St)

1194 [a]) D $P_{1-3}$ $I_3$ SA निर्गृह्य (for निगृह्य)

1196. [a]) C S′ °पुत्र (for °पुत्र्य). —[c]) SA °स्यात्तन्नि° (for °स्याऽऽत्तनि°).

1197 [ab]) D °व्यूहैं राहि° (for °र्व्यूहैराहि°)

कलविङ्कानिव श्येनः कुरङ्गानिव केसरी ।
एको व्यद्रावयद् भूरीनरीन् सुस्सलभूपतिः ॥१२००॥

निपत्य पत्तीन् रुन्धानान् खुराग्राण्यपि वाजिनाम् ।
प्राहरंस्ते हयारोहा व्यूहव्याहतरंहसः ॥१२०१॥

बिम्बितज्वलनज्वालाः सर्वे एव महाभटाः ।
हन्तव्याश्च हताश्चाऽऽसन्नस्रस्रोतोरुणा इव ॥१२०२॥

स द्विषां कदनं कृत्वा दिनस्याऽन्ते न्यवर्तत ।
बाष्पायमाणस्स्तोकाशं हव्याशेनोज्झितं पुरम् ॥१२०३॥

तादृशेऽप्यजिते तस्मिञ्जयाशागौरवं द्विषः ।
स चौज्झीद् रमणीयस्य विनाशाज्जीवितादरम् ॥१२०४॥

जाग्रन् स्वपंश्चलंस्तिष्ठन् स्नानश्नन्नथ सोऽरिभिः ।
निर्गच्छन्नित्यमाहूतो न कैरुद्वाष्पमीक्षितः ॥१२०५॥

वह्निनिर्दग्धसर्वान्नसंभारे मण्डलेऽखिले ।
दुस्सहः सहसैवाऽथ घोरो दुर्भिक्ष आययौ ॥१२०६॥

दीर्घविप्लवसंक्षीणसंचया डामरैर्बहिः ।
उत्तब्धोत्पत्तयो रुद्धसंचारा दग्धमन्दिराः ॥१२०७॥

अनाप्नुवन्तो विधुरे राज्ञि राजकुलाद् धनम् ।
दुर्भिक्षे तत्र सामन्ता अपि क्षिप्रं विपेदिरे ॥१२०८॥

---

1203. [c]) D C S′ $P_2$ °माणस्तोकाश, $P_{1,3}$ $I_3$ °मानोस्तकाश, St SA °माणोस्तकाश (for °माणस्स्तोकाश suggested) —[d]) C S′ °नोर्जित (for °नोज्झित).

1205. [a]) D C S′ $P_{1-3}$ जाग्रत् (for जाग्रन्) —[b]) St $P_{1-3}$ $I_3$ C S′ स्नन्न° (for स्नान°) —[cd]) C S′ °तोऽनेकै° (for °तो न कै°).

1206. [d]) C घोर (for घोरो) C दुर्भिक्षम् (for दुर्भिक्ष)

1207. [c]) C तत्तुच्छो°; S′ तत्तोद्धो°, $P_1$ $I_3$ तत्तब्धो° (for उत्तब्धो°).

1208. [d]) All Mss read प्रपेदिरे (for विपेदिरे suggested with St).

बह्निनिष्ठ्यूतशेषाणि वेश्मान्यन्नाभिलाषिभिः ।
बुभुक्षार्तैर्जनैर्दत्तो ददाहाऽग्निर्दिने दिने ॥१२०९॥

सरितां सेतवो वारिसंसेकोच्छूनविग्रहैः ।
दुर्गन्धाः कुणपै रुद्धघ्राणैस्तीर्णास्तदा जनैः ॥१२१०॥

निर्मांसनरकङ्कालकपालशकलाकुला ।
उवाह सर्वतः श्वेता क्षितिः कापालिकव्रतम् ॥१२११॥

कृच्छ्रसंचारिणोऽर्कांशुश्यामक्षामोच्चविग्रहाः ।
व्यभाव्यन्त बुभुक्षार्ता दग्धस्थाणुनिभा जनाः ॥१२१२॥

अथ प्रबन्धयुद्धेन दिनैः क्वापीषुणा क्षतः ।
पृथ्वीहरो मृत इति श्रुतिर्मिथ्यैव पप्रथे ॥१२१३॥

गाढप्रहारविवशे तस्मिन् प्रच्छादिते जनैः ।
तां वार्तां श्रुतवान् राजा ननन्दाऽयुद्ध चोद्धतम् ॥१२१४॥

धीरेव पुंश्चली व्याजौत्सुक्यसंदर्शनेन तम् ।
जयश्रीर्लोभयन्त्यासीन्न तु भेजे समुत्सुकम् ॥१२१५॥

एकान्तवामहृदयो विधिरानुकूल्यं
मिथ्या प्रदर्श्य विशिनष्ट्यनुबन्धि दुःखम् ।
अन्धीकरोति भृशमभ्रमगं ज्वलन्तं
भास्वन्महौषधिभिदे प्रकटय्य वज्रम् ॥१२१६॥

दीर्घदुःखानुभूत्यन्ते यदीयागमनोत्सवम् ।
तपःफलमिव क्ष्माभृत् काङ्क्षन्नासीन्मनोरथैः ॥१२१७॥

---

1209. a) C °निष्ठूत° (for °निष्ठ्यूत°) $P_{1,3}$ °शेषेण (for °शेषाणि)

1211. b) $P_{2,3}$ $I_3$ SA °कुला· (for °कुला).

1212. c) $P_{1,3}$ $I_3$ °क्षान्ता (for °क्षार्ता).

वात्सल्येनाऽन्वित प्रेम गौरवेण प्रियं वचः ।
औचित्येन च दाक्षिण्यं साऽपत्यमिव या दधे ॥१२१८॥

तस्योपकरणीभूतविभूतिगृहिणी प्रिया ।
तस्मिन् काले महादेवी विपेदे मेघमञ्जरी ॥१२१९॥

विनोदशून्यनिर्विण्णलोकयात्रं जगद्विदन् ।
प्राणै राज्येन वा कृत्यं न स किंचिन्निरैक्षत ॥१२२०॥

सा भर्तुर्व्यसनोदन्तैः कृशा काश्मीरसंमुखी ।
औत्सुक्याद् दत्तयात्राऽऽसीच्छान्ता फुल्लपुरान्तिके ॥१२२१॥

पूर्वं तद्दर्शनाशाया दुर्वार्तायास्ततोऽतिथिः ।
भवन्नतोऽधिकं राजा दुःखावेगेन पस्पृशे ॥१२२२॥

राज्ञीमज्ञातपारुष्यतयाऽदूषितभक्तयः ।
अनुसस्रुश्चतस्रस्ताः परिवारवरस्त्रियः ॥१२२३॥

अप्रत्यक्षे क्षयेऽप्यस्या भक्त्युद्रिक्तत्वमत्यजन् ।
तेजो नामाऽभवत् सूदो वन्द्यो भृत्यान्तरेऽधिकम् ॥१२२४॥

स ह्यसंनिहितोऽन्यस्मिन्नह्न्यायातो निजं शिरः ।
तच्चितोपान्तरूढेन भङ्क्त्वा ग्राव्णाऽविशन्नदीम् ॥१२२५॥

आहवाह्वानसंरम्भैः शोकविस्मृतिकारिणः ।
राज्ञो द्विषः कार्यवशादुपकारित्वमाययुः ॥१२२६॥

---

1219. After this *v.* तिलकम्

1220 a) $A_1$ om. °ण्ण in निर्विण्ण.

1221. b) $P_3$ कश्मीर° (for काश्मीर°) —d) SA SL St C S′ $P_{1-3}$ °च्छ्रांता (for °च्छान्ता) C S′ फल° (for फुल्ल°)

1225. d) C S′ $P_1$ भक्त्या (for भङ्क्त्वा)

स राज्यमथ निक्षेप्तुकामो निर्विण्णमानसः।
व्युत्क्रान्तशैशवं पुत्रमानिन्ये लोहराचलात् ॥१२२७॥

मण्डलेश्वरतां प्रज्जेर्भ्रातृव्यं भागिकाभिधम्।
नीत्वा च गुप्तिमकरोल्लोहरे कोषदेशयोः ॥१२२८॥

वराहमूलं संप्राप्तमग्रायातः प्रियं सुतम्।
आश्लिष्य विषयो राजा बभूवाऽऽनन्दशोकयोः ॥१२२९॥

राजसूनुस्त्रिभिर्वर्षैः प्रत्यायातः स्वमण्डलम्।
स पश्यन् पितरं चाऽन्तरसुस्थितमतप्यत ॥१२३०॥

खेदनम्राननो लोष्टावशेषं सोऽविशत् पुरम्।
अम्बुलम्बोऽम्बुदो दावनिर्दग्धमिव काननम् ॥१२३१॥

राज्येऽभ्यषिञ्चदाषाढस्याऽऽद्येऽह्नि जनकोऽथ तम्।
अवादीद् राज्यतन्त्रं स कृत्स्नमुक्त्वास्रुगद्गदः ॥१२३२॥

श्रान्ताः पितृपितृव्यास्ते न यां वोढुमशक्नुवन्।
धुरमुद्वह तां वीर त्वयि भारोऽयमर्पितः ॥१२३३॥

साम्राज्यप्रक्रियामात्रपात्रं पुत्रं नृपो व्यधात्।
न त्वार्पिपदधीकारं तस्मिन् दैवविमोहितः ॥१२३४॥

अभिषेकविधावेव राजसूनोः शमं ययुः।
पुरोपरोधावग्राहव्याधिचौराद्युपद्रवाः ॥१२३५॥

संपन्नसस्या च तथा देवी संववृते मही।
दुर्भिक्षं श्रावणे मासि यथावत् प्रशमं ययौ ॥१२३६॥

---

1228 d) St $P_{2,3}$ कोश° (for कोष°)

1232. d) C °मुक्ता° (for °मुक्त्वा°) $P_3$ °गद्गदम् (for °गद्गद.).

1234. c) C नत्वा° (for न त्वा°)

1236. a) C S' °शस्या; $P_3$ °भस्या (for °सस्या).

अत्राऽन्तरे सिहदेवो रणे कुर्वन्नरिक्षयम् ।
कर्णेजपैर्जनयितुर्द्रोग्धाऽयमिति सूचितः ॥१२३७॥

कोपादविमृशंस्तत्त्वं स बन्द्धुं तं व्यसर्जयत् ।
कथ्यात्मजं राजसूनुस्तत्तु प्रागेव बुद्धवान् ॥१२३८॥

कोपस्मितोत्कटस्याऽग्रे स तस्याऽप्रतिभोऽभवत् ।
निनाय रक्षामात्रेण पार्थिवाज्ञाममोघताम् ॥१२३९॥

अभुक्तवान् मनस्तापात् प्रत्ययोत्पत्तये पितुः ।
साकं तेन सुतोऽन्येद्युर्गन्तुं प्रावर्तताऽन्तिकम् ॥१२४०॥

आक्षेप्तुं शङ्कितोऽशक्य इति मत्वा स मन्त्रिभिः ।
मार्गान्न्यवर्तयत तं पिता मिथ्या प्रसादयन् ॥१२४१॥

अन्तस्तु निश्चिकायेति प्रविश्याऽतर्कितागमः ।
बद्ध्वैनं स्थापयिष्यामि कारायामिति सोऽनिशम् ॥१२४२॥

धिग् राज्यं यत्कृते पुत्राः पितरश्चेतरेतरम् ।
शङ्कमाना न कुत्राऽपि सुखं रात्रिषु शेरते ॥१२४३॥

पुत्रपत्नीसुहृद्भृत्या येषां शङ्कानिकेतनम् ।
विस्रम्भभूर्भूपतीनां कस्तेषामिति वेत्ति कः ॥१२४४॥

साह्याभिधानप्रख्यातकुग्रामोपान्तवासिनः ।
खलपालस्य तनयः स्थानकाख्यस्य कस्यचित् ॥१२४५॥

शैशवे पाशुपाल्येन वर्धितो डामरोद्भवैः ।
गृहीतशास्त्रस्तन्नित्यं क्रमाट्टिक्कस्य लब्धवान् ॥१२४६॥

---

1238. [a]) All Mss. read °विमृष° (for °विमृश° suggested with St). —[d]) C °स्तत (for °स्तत्तु ).

1242. [b]) C S' प्रविश्य° (for प्रविश्या°).

1243. $P_1$ om. *cd*.

1246. [c]) D C S' °शस्त्र तन्नित्य, °स्सान्निध्य or °स्साहित्य is suggested (for °स्तन्नित्य)

प्रथमाब्दात् प्रभृत्यात्तदूत्यो भूभर्तुराततताम् ।
प्रययावुत्पलो नाम वैरिविच्छेदमिच्छतः ॥१२४७॥

स हि भिक्षाचरं टिक्कमथ व्यापादयेत्यमुम् ।
जगादाऽङ्गीकृतैश्वर्यदानष्टिक्कोपवेशने ॥१२४८॥

कृतप्रतिश्रवं तस्मिन्नर्थे तं च महर्द्धिभिः ।
दानैरुपाचरद् गञ्जपतिनाम्नाऽप्ययोजयत् ॥१२४९॥

भोगलोभप्रभुद्रोहचिन्तादोलायमानधीः ।
स कार्यं परिहार्यं वा न कृत्यं निश्चिकाय तत् ॥१२५०॥

प्रासोष्टाऽपत्यमत्रान्तस्तद्वधूः कार्यतो नृपः ।
ततश्च प्राहिणोत् तस्यै पितेव प्रसवोचितम् ॥१२५१॥

सा तस्याऽत्युपचारस्य कारणं परिशङ्किता ।
पतिं पप्रच्छ निर्बन्धात् सोऽपि तस्यै व्यवर्णयत् ॥१२५२॥

न कार्यः स्वामिनो द्रोहः कृते वाऽस्मिन् स सुस्सल ।
त्वामेव शनकैर्हन्याद् द्रोग्धायमिति चिन्तयन् ॥१२५३॥

वरं स एव विश्वास्य व्यापाद्यस्तत्र चेद्वधः ।
भवेत् ते स्वामिपुत्रादिकुटुम्बं स्याद् विभूतिभाक् ॥१२५४॥

भार्ययेति प्रेर्यमाणः स निश्चयविपर्यये ।
टिक्कं विदितवृत्तान्तं कृत्वा बद्धोद्यमः कृतः ॥१२५५॥

---

1247. After this *v.* $P_3$ adds तिलकम् .

1249. b) $I_3$ °हर्षि° (for °हर्द्धि°).

1251. c) St तत्तच (for ततश्च) $P_{1,2}$ SA प्रहिणो° (for प्राहिणो°)

1254 b) C S′ चेद्बुध ; D $I_3$ चेदध (for चेद्वध ).

1255 c) D C S′ विहित° (for विदित°).

गतागतानि कुर्वाणे दुर्भुक्षावथ पार्थिवः ।
स पुत्र इव विश्वासं ययौ दैवविमोहितः ॥१२५६॥

विपर्यस्ता मतिः पुत्रे विश्वासो वैरिसंश्रिते ।
जायते क्षीणभाग्यानां को नाम न विपर्ययः ॥१२५७॥

वैधेयैः स्वार्थलोभान्धैर्यद्वानर्थसमागमः ।
सरघोपद्रवः क्षौद्रलुब्धैरिव न चिन्त्यते ॥१२५८॥

तं पीडितं प्रजिना च राज्ञा चाऽवनतिं ततः ।
उत्पलोऽकारयट्टिक्कं नीविं चाऽदापयत् सुतम् ॥१२५९॥

राजाऽथ देवसरसं जितं संत्यज्य कार्तिके ।
वाष्ट्रकाख्यमगाद् ग्रामं खेरीविषयवर्तिनम् ॥१२६०॥

स कल्याणपुराभ्यर्णे रणैस्तैस्तैर्विलक्षताम् ।
भिक्षुकोष्ठेश्वरमुखानपि निन्ये महाभटान् ॥१२६१॥

मध्याद् भिक्षाचरादीनां सुज्जिः काककुलोद्भवम् ।
जीवग्राहं महावीरं युधि जग्राह शोभकम् ॥१२६२॥

भवकीयस्य कृत्वाऽऽदौ विजयस्य पराभवम् ।
भूभुजा तद्गृहा दग्धाः कल्याणपुरवर्त्तिनः ॥१२६३॥

दग्धे वडोसके भिक्षाचरो नष्टाश्रयो व्यधात् ।
त्यक्त्वा तां क्ष्मां शमालाया ग्रामे काकरुहे स्थितिम् ॥१२६४॥

---

1258. c) $SA_2$ gloss सरघा मधुमक्षिका (for सरघो°).
1259. b) C S′ °वनत (for °वनतिं). —d) D C S′ $P_{1,3}$ नौवी (for नीविं)
1260. c) C S′ वाष्ट्र°; $I_3$ राष्ट्र° (for वाष्ट्र°).
1262 b) All Mss read सुज्जि (for सुज्जि. suggested with St D)
1263 a) C S′ कृत्या° (for कृत्वा°).
1264. a) D C $P_{1,2}$ वडौसके, SA वळोसके, $P_3$ S′ वडौकसे, St suggests वडोत्सके cf. viii. 1306 (for वडोसके). —d) $P_{1,2}$ $I_3$ SA स्थितम् (for स्थितिम्)

नरः पौरुपनैष्ठुर्यशठत्वेन करोति किम् ।
विधातृवृत्तिवैचित्र्यपराधीनासु सिद्धिषु ॥१२७४॥

पुरोभूतं कंचित् परिहरति राशिं तम इव
व्यतीते कस्मिंश्चिद्धरिरिव विवृत्याऽऽस्यति दृशम् ।
समुल्लङ्घ्याऽऽसन्नं क्वचन नृपतिं दर्दुर इव
क्रमेत् स्रष्टुर्दृष्टः स्फुटमिति गतीनामनियमः ॥१२७५॥

विश्वासनिहतान् निन्दन्नुच्चलादीन् पुराऽवसत् ।
नित्यं विकोशशस्त्रो यः पुराविद्भ्यो निशम्य च ॥१२७६॥

विदूरथादिवृत्तान्तं नादात् केलिक्षणे ब्रुवन् ।
स्त्रीषु संभुज्यमानासु विश्वासविशदां दृशम् ॥१२७७॥

स बन्धाविव निर्बन्धाद् विशश्वास यदुत्पले ।
तत्र संभाव्यते केन दैवादन्यो विमोहकृत् ॥१२७८॥

टिक्कादयो भूमिपतेः सुज्जेर्वाऽन्यतरे हते ।
त्वां तुल्यकार्यकर्तारं विद्म इत्यूचुरुत्पलम् ॥१२७९॥

सुज्जिर्न व्यश्वसीत् तस्मिन् स जिघांसुस्तु भूभुजम् ।
तत्र तत्राऽभवत् सज्जः प्रसङ्गं नाऽऽसदत् पुनः ॥१२८०॥

प्रतिश्रुतविलम्बेन समन्योरथ भूपतेः ।
प्रत्ययोत्पत्तये देवसरसान्नीविमात्मजम् ॥१२८१॥

---

1274. c) SA °वैचित्य° (for °वैचित्र्य°).

1275. c) $P_2$ $I_3$ St SA स्वमु° (for समु°).

1276. c) C S′ °शस्त्रौघ (for शस्त्रो य ).

1277 a) $P_2$ SA विडूर° (for विदूर°). —c) C °मान स; SA °मानास्व° (for °मानासु suggested with St D)

1278 a) C सबन्धा° (for स बन्धा°) After this *v* $P_3$ adds तिलकम् .

1279. a) C ढिक्का° (for टिक्का°). —b) All Mss. read °न्यतमे (for °न्यतरे suggested with St D)

व्याघ्रप्रशस्तराजादींस्तीक्ष्णांश्चाऽऽत्मसमान् परान् ।
आदाय कार्यमेतैर्मे सिध्येदित्युक्तवान् नृपम् ॥१२८२॥

उच्चित्योच्चित्य सेनाभ्यो गृहीतैः साहसक्षमैः ।
शतैः समं त्रिचतुरैः पत्तीनामेकदाऽऽययौ ॥१२८३॥

समयान्वेषिणो हन्तुस्तस्याऽऽसन्नस्य सर्वदा ।
प्रियाहारादिदानेन हन्तान्तःप्रीतिकार्यभूत् ॥१२८४॥

तुरंगं मन्दुराचक्रवर्त्याख्यं नगरस्थितम् ।
अस्वस्थमुल्लाघयितुं तुरगव्यसनी नृपः ॥१२८५॥

स लक्ष्मकप्रतीहारकव्यात्मजमुखान् निजान् ।
पार्श्वाद् विसृष्टवानासीत् क्षणे तस्मिन् मितानुगः ॥१२८६॥

शृङ्गारो लक्ष्मकापत्यं निशम्याऽऽतैर्निवेदितम् ।
व्यधाच्छ्रुतिपथे राज्ञस्तदुत्पलचिकीर्षितम् ॥१२८७॥

विरुद्धे बन्धुधीर्दृष्टहिंसारम्भेऽपि संभवेत् ।
आसन्नजीवितान्तस्य जन्तोः सूनापशोरिव ॥१२८८॥

स शापो गान्धार्यास्तदपि सरुषो भाषितमृषे-
स्त उत्पाताश्चक्षुः स्वमपि तदभौमं प्रकटयत् ।
कुलान्तं तत्त्राणाक्षममकृत वैकुण्ठमपि त-
च्छिदन्नप्यन्यत्वं क इव भवितव्यस्य कुरुताम् ॥१२८९॥

---

1282 b) All Mss read °सरान्परान् (for °समान् परान् suggested with St)

1283. c) C स मत्रि° (for सम त्रि°) —d) St C ययौ (for ⌊आ⌋ययौ). After this v तिलकम्.

1284. d) C °त प्रति° (for °न्त प्रीति°)

1285. d) C S′ °सने (for °सनी)

1286 a) $SA_3$ पद्मक° (for लक्ष्मक°) —c) $SA_1$ om वा in विसृष्टवान्

1288 a) D C S′ $P_{1,3}$ °वीदृष्ट°, $P_2$ °धीर्दंष्ट° (for °धीर्दृष्ट°)

1289 a) C S′ सन्धा° (for गन्धा°) —b) C S′ °स्तदु° (for °स्त उ°). D C $P_{1-3}$ $I_3$ SA प्रकटयन् (for प्रकटयत्) —c) D $P_2$ $I_3$ कुलान्ते (for कुलान्त)

मिथ्यैतदित्यधिक्षिप्य क्षितिपालः प्रदर्शयन् ।
तमङ्गुल्योत्पलादींस्तानग्रस्थानेवमब्रवीत् ॥१२९०॥

द्रोग्धुः सुतोऽभवद्योगादनिच्छन् स्वास्थ्यमेष मे ।
त्वां दुष्टमुत्पलाऽऽचष्टे स्वेनाऽन्यैर्वाऽथ चोदितः ॥१२९१॥

ते छादयन्तः स्मेरास्या धार्ष्ट्येन भयवैकृतम् ।
वक्ति देवो यदस्माभिर्वाच्यमित्येवमूचिरे ॥१२९२॥

निर्यातेष्वथ तेष्वीषत्साशङ्क इव निश्चलान् ।
द्वास्स्थेनाऽकारयद् द्वित्राननन्तिके मुख्यशस्त्रिणः ॥१२९३॥

उन्मनाश्च किमप्यासीद् विनिश्श्वस्य स चिन्तयन् ।
सास्रुश्च न रतिं लेभे नृत्तगीतादिदर्शने ॥१२९४॥

मेने वैदेशिकप्रायानाप्तानपि धृतभ्रमः ।
पुण्यक्षये पिपतिषुर्वैमानिक इवाऽम्बरात् ॥१२९५॥

राजान्तरङ्गाः साशङ्काः प्रभौ शाठ्येन मोहिते ।
पूत्कारमैच्छन् दातारमन्यं कंचिदचेतनाः ॥१२९६॥

अयमेव स कालस्य बलात् कवलनग्रहः ।
विदन्तोऽपि यदाऽऽयान्ति जन्तवः कृत्यमूढताम् ॥१२९७॥

सर्वान्तरक्षणेष्वस्तचक्षुषो दिवसद्वयम् ।
उत्पलाद्याश्च साशङ्काः कथमप्यत्यवाहयन् ॥१२९८॥

---

1291 a) St. Tr. suggests सुतो भव° (for सुतोऽभव°) —c) C S′ तां (for त्वा)

1293 d) C S′ $P_1$ °नन्तिको (for °नन्तिके).

1294 d) C S′ नृत्य° (for नृत्त°)

1295 c) C S′ °क्षयेऽपि (for °क्षये पि°)

1296 d) All Mss. read केचि° (for कचि° found in SL)

रहःक्षणप्रार्थिनस्तांस्तृतीयेऽह्न्यब्रवीन्नृपः ।
स्नात्वा प्रत्यूषे तद्यूयं भोक्तुं यात मुहुर्गृहम् ॥१२९९॥

देवतार्चनपर्यन्तमवसायाह्निकं विधिम् ।
आजुहावोत्पल दूतैर्मध्याह्नेऽथ रहस्स्थितः ॥१३००॥

कार्यसिद्धिं श्रद्दधानो वैजन्याद् राजसद्मनः ।
राज्ञोऽभ्यर्णं स साशङ्कं द्वास्स्थरुद्धानुगोऽविशत् ॥१३०१॥

प्रावेशयद् द्वारि रुद्धं व्याघ्रं तदनुजं नृपः ।
शेषाणामपि भृत्यानामादिदेश बहिस्स्थितिम् ॥१३०२॥

विलम्बमानष्वातेषु केषुचित् सरुषो वचः ।
सत्यं तस्योद्ययावास्तां सोऽत्र द्रोग्धा य इत्यपि ॥१३०३॥

ताम्बूलदायकः प्रौढवयास्तेनाऽवशेषितः ।
सांधिविग्रहिको विद्वान् राहिलश्चाऽन्तिके परम् ॥१३०४॥

दूतौ टिक्कस्याऽर्धदेवतिष्यवैश्याभिधावुभौ ।
तत्र प्रसङ्गादासातामज्ञातोत्पलसंविदौ ॥१३०५॥

वाडौत्सः सुखराजाख्यो डामरो भिक्षुसंमतः ।
प्रयास्यति प्रभोर्दृष्ट्वा पादौ तत्कार्यसिद्धये ॥१३०६॥

इत्युक्तवांस्तेष्वहस्सु तं नृपं नातिदूरगम् ।
ससैन्यं डामरं चक्रे स्वस्य त्राणार्थमुत्पलः ॥१३०७॥

---

1299 a) St रह क्षण° (for रह क्षण°).

1301. c) D C S′ $P_1$ °शङ्क°, $P_3$ °शङ्कां (for °शङ्क). —d) All Mss. read द्वास्थ° (for द्वास्स्थ° suggested with St).

1303. c) C S′ °स्योत्प्रथावास्त (for °स्योद्ययावास्ता).

1304 a) C °यिक° (for °यक ) —d) D S′ °लाश्चा° (for लश्चा°).

1305. ab) D $P_{1,2}$ $I_3$ °घदेवतिष्टवैश्या°, C S′ °स्याघदेवनिष्टवैश्या°, SA St (before suggestion) °स्याघदेवतिष्ठवैश्य° (for °र्धदेवतिष्यवैश्या° found in $P_3$, also cf. v viii 1543).

1306. a) C वाड्डौत्स, SA वाळौत्स, S′ वाडवौत्स (for वाडौत्स ) $P_3$ दु:ख°: SA सु ख° (for सुख°)

1307 c) SA $I_3$ डमर, C S′ ढामर (for डामर)

तथा चैनं तस्थिवांसं कृत्यमस्त्यमुनेति च।
उक्त्वा प्रशस्तराजं तं पार्श्वं प्रावेशयद् द्रुतम् ॥१३०८॥

प्रविष्टो निर्जनं बाह्यमाकलय्य स मण्डपम्।
अलक्ष्यमाणव्यापारो द्वारमर्गलितं व्यधात् ॥१३०९॥

स्नानार्द्रकेशं शीतालुतया प्रावारवेष्टितम्।
कृत्वा कृत्स्नं वपुः कृष्टशस्त्रीकं विष्टरोपरि ॥१३१०॥

आसीनं वीक्ष्य नृपतिं प्रसङ्गो नेदृशो भवेत्।
विज्ञप्तिं कुरु भूभर्तुरित्यूचे व्याघ्र उत्पलम् ॥१३११॥

स तया संज्ञया व्यग्रः पादप्रणतिकैतवात्।
राज्ञोऽग्रमेत्य तच्छस्त्रीं विष्टरस्थामपाहरत् ॥१३१२॥

विकोशां चाऽकरोत् पश्यंस्तां तथोद्भ्रान्तलोचनः।
प्राह स्म हा धिक् किं द्रोह इति यावद् वचो नृपः ॥१३१३॥

प्राहरत् प्रथमं तावत् सव्ये पार्श्वे तथैव सः।
तस्य प्रशस्तराजेन मूर्धनि प्रहृतं ततः ॥१३१४॥

व्याघ्रेणाऽथ क्षतं वक्षस्ताभ्यामेवाऽसकृत् तदा।
प्रहृतं तत्र स पुनः प्राहरन्न द्विरुत्पल ॥१३१५॥

पूर्वयैव प्रहृत्या हि छिन्नपार्श्वास्थिमालया।
मेने कृष्टान्त्रतन्त्रीकं स तं प्रोषितजीवितम् ॥१३१६॥

---

1309 b) C S′ °लय्यास्य (for °लय्य स)

1312. a) C S′ व्याघ्र (for व्यग्र)

1313 a) $P_{2,3}$ SA विकोश, $I_3$ विशोक (for विकोशा).

1314 After this *v.* युग्मम्.

गत्वा तमोरिं पूत्कर्तुमिच्छन् व्याघ्रेण राहिल ।
पृष्ठे कृताहतिर्द्विस्त्रा नालिका नोज्झितोऽसुभिः ॥१३१७॥

ताम्बूलदायकस्त्यक्त्वा कङ्कोलाद्यजको व्रजन् ।
दीनो निजेभ्यः कारुण्यादुत्पलेनैव रक्षितः ॥१३१८॥

अन्तः समुत्थिते क्षोभे बाह्यमण्डपवर्तिभिः ।
टिक्काद्यैः कृता लुण्ठिर्द्रोहगृह्यैरुदायुधैः ॥१३१९॥

उत्पलो निहतो राजेत्यवेत्य कटकस्थितैः ।
बहिस्स्थान् हन्यमानान् स्वान् समाश्वासयितुं ततः ॥१३२०॥

रक्तार्द्रशस्त्रं संदर्श्य तमोरेर्वपुरुत्पलः ।
ऊचे मया हतो राजा न त्याज्या तच्चमूरिति ॥१३२१॥

तच्छ्रुत्वा दुश्श्रवं राजभृत्याः काऽपि भयाद् ययुः ।
द्रोहानुगास्त्वङ्गनान्तर्लब्धोल्लासा व्यधुः स्थितिम् ॥१३२२॥

निर्यान्तो मण्डपात् तीक्ष्णा निजघ्नुर्नागकाभिधम् ।
द्वारात् प्रविष्टं निष्कृष्टकृपाणीकं नृपानुगम् ॥१३२३॥

भूपालशय्यापालस्य त्रैलोक्याख्यस्य सेवकः ।
निन्दन् द्रोहं टिक्काद्यैर्द्वास्स्थश्चैको विपादितः ॥१३२४॥

उत्कृष्टं नष्टसत्त्वानां मध्ये राजानुजीविनाम् ।
सखेटकासिं धावन्त भावुकान्वयभूषणम् ॥१३२५॥

---

1317 a) C S′ °रिपुक° (for °रि पूत्क°).

1318. a) C S′ °दायि° (for °दाय°). —b) All Mss read कङ्काला°; D suggests करङ्का° (for कङ्काला° suggested with St).

1321. a) C रक्ताग्र° (for रक्तार्द्र°) —b) C S′ $P_3$ तोम° (for तमो°). —d) D C S′ $P_{1,2}$ $I_3$ °तश्च° (for तच्च°)

1323. a) $P_{2,3}$ निर्यातो (for निर्यान्तो). —b) C °तीक्ष्णान्नि° (for तीक्ष्णा नि°)

1324. a) D SA $P_{1-3}$ $I_3$ °शक्यापालस्य, C S′ °शाक्यपालस्य (for °शय्यापालस्य suggested with St) —d) $P_{1-3}$ $I_3$ D SA °द्वास्थ°. C S′ °द्वास्थे° (for °द्वास्स्थ° suggested with St). D C S′ $P_1$ SA व्यपादित (for विपादित)

दृष्ट्वा सहजपालाख्यं पार्श्वद्वारेण निर्ययुः ।
तीक्ष्णाः स त्वपतद् भूमौ तद्भृत्यप्रहृतिक्षतः ॥१३२६॥

जाते कुकीर्तिकालुष्यपात्रे राजात्मजव्रजे ।
वैलक्ष्यक्षालनं सिद्धं तस्य स्वक्षतजैः परम् ॥१३२७॥

हतो दैशिकसंवादिदेहो राजात्मजभ्रमात् ।
विद्वान् द्विजन्मा नोनाख्यस्तीक्ष्णपक्षैः पुरो गतः ॥१३२८॥

अक्षतान् व्रजतो वीक्ष्य तीक्ष्णान् ग्रामान्तरोन्मुखान् ।
चित्रार्पिता इव क्रोधान्नाऽधावन् केऽपि शस्त्रिणः ॥१३२९॥

राजवंश्या महीपालप्रीतिपात्रमथाऽऽययुः ।
स्थगयन्तोऽङ्गनं स्थूलकाया जनविवर्जितम् ॥१३३०॥

तांस्तान् कापुरुषान् हर्षदेवोदन्तात् प्रभृत्यलम् ।
स्मृत्वा च कीर्तयित्वा च कृतभारग्रहा इव ॥१३३१॥

जातदुष्कृतसंस्पर्शाः खेदात् कर्तुं न शक्नुमः ।
पापात् पापीयसां येषां नामग्रहणसाहसम् ॥१३३२॥

अङ्गनान्मण्डपारूढिं मन्वानाः पौरुषं महत् ।
पापिनः केऽपि तन्मुख्या ददृशुः स्वामिनं हतम् ॥१३३३॥

अधरेणाऽस्रसंस्कारलेशावेशप्रकम्पिना ।
वदन्तं दन्तदष्टेन स्वान्तस्याऽन्तेऽनुतप्तताम् ॥१३३४॥

---

1326 c) C तीक्ष्ण (for तीक्ष्णा).

1328. a) D (before suggestion) C $P_{1-3}$ $I_3$ SA हतदैशि°, S′ हृतदैशि° (for हतो दैशि° suggested with St D). —b) St (before corr) °जात्मभ्रज° (for °जात्मजभ्र°)

1330 b) C °प्रथा ययु, D $P_2$ °पथा ययु ; S′ $P_{1,3}$ $I_3$ °प्रथा ययु· (for °मथाऽऽययुः).

1331. d) $P_3$ $I_3$ च (for इव).

1332. a) St $P_{1,2}$ $I_3$ जाता (for जात°). C S′ St $P_{2,3}$ $I_3$ °स्पर्शात् (for °स्पर्शाः).

1333. b) $P_2$ $I_3$ सधाना (for मन्वाना). —d) S′ हत (for हतम्).

1334 b) C S′ °लेश (for °लेशा°). —c) D $P_3$ $I_3$ °दृष्टेन (for °दष्टेन).

वञ्चितः कथमेषोऽहमिति नामेति चिन्तया।
निस्स्पन्दे जीवितान्तेऽपि तथैव दधतं दृशौ ॥१३३५॥

श्यामायमानं वाष्पेण व्रणवक्त्रैरुदश्रुता।
अन्तःप्रशान्तामर्षाग्निशेषधूमलतात्विषा ॥१३३६॥

आननस्याऽस्फुटीभूतचन्दनोल्लेखकुङ्कुमम्।
सक्तया लिखितस्येव घनक्षतजलाक्षया ॥१३३७॥

आश्यानास्रजटीभूतकेशं नग्नं भुवि च्युतम्।
पर्यस्तपाणिचरणं स्कन्धाग्रालम्बिकंधरम् ॥१३३८॥

तं वीक्ष्य नोचितं किंचिदाचेरुस्ते नराधमाः।
वैजन्यस्य फलं भुङ्क्ष्वेत्यावेगादधिचिक्षिपुः ॥१३३९॥

वद्ध्वा तुरङ्गे युग्ये वा न तैर्नीतश्चिताग्निसात्।
कर्तुं न वा पारितः स प्राणत्राणाय धावितैः ॥१३४०॥

आस्तां विलम्बसाध्यं वा कर्मैतद् भ्राष्ट्रदारुसात्।
सज्जाग्निश्चाऽग्निसाद्देहमपि कश्चन नाऽकरोत् ॥१३४१॥

राजवाजिनमेकैकं तेऽध्यारुह्य पलायिताः।
निर्लुण्ठितस्तु कटको व्रजन् ग्रामेषु डामरैः ॥१३४२॥

न पुत्रः पितरं पुत्रं पिता वा प्रत्यपालयत्।
मृतं हतं लुण्ठितं वा प्रचलन् सहिमेऽध्वनि ॥१३४३॥

---

1335. a) C S′ वचिना (for वञ्चितः) — c) C S′ St $P_2$ निस्पन्दे (for निस्स्पन्दे). — d) C S′ ददत (for दधत).

1337 a) C S′ आननस्य (for आननस्या°).

1338 d) C S′ $P_{1,3}$ SA °कदरम् (for °कधरम्). After this *v.* $P_{2,3}$ add कुलकम्.

1340 a) C वद्धा (for वद्ध्वा)

1341. c) All Mss. read सज्जाग्नि चा° (for सज्जाग्निश्चा° suggested). D St $P_{1-3}$ $I_3$ °साद्गेह° (for °साद्देह°). —d) $P_{1,3}$ कश्चिच; St $I_3$ SA SL कश्चिन्न; $P_2$ कश्चन्न (for कश्चन).

1343. d) C स (for स°).

न कोऽपि शस्त्रभृत्सोऽभूत् स्मृत्वा मानोन्नतिं पथि ।
परैराक्षिप्यमाणो यः शास्त्रं वस्त्रं च नाऽत्यजत् ॥१३४४॥

लवराजयशोराजद्विजौ व्यायामवेदिनौ ।
कान्दश्च राजा निहता वीरवृत्त्या त्रयः परम् ॥१३४५॥

अदूरादुत्पलाद्यास्तु कटकं वीक्ष्य विद्रुतम् ।
प्रविष्टा वाष्टुकं छित्त्वा शिरो निन्युर्महीपतेः ॥१३४६॥

गतेषु देवसरसं तेषु छिन्नशिरा नृपः ।
हतश्चौर इव प्राप ग्राम्याणां प्रेक्षणीयताम् ॥१३४७॥

एवं द्रोहैस्तृतीयाब्दामावास्यायां स फाल्गुने ।
पञ्चपञ्चाशतं वर्षानायुषोऽतीतवान् हतः ॥१३४८॥

विलासशयनस्थस्य सिंहदेवस्य सा श्रुतौ ।
प्रेमाख्येनैत्य दुर्वार्ता धात्रेयेण व्यधीयत ॥१३४९॥

संभाव्यते योऽनुभावः सशास्त्रस्याऽप्रियश्रुतौ ।
हतशस्त्रोऽपि तं प्राप स तदा पितृवत्सलः ॥१३५०॥

मोहलुप्तस्मृतिः स्मृत्वा चिरादुद्गतचेतनः ।
तत्तद्दुःखाहतधृतिर्विललाप स्फुटास्फुटम् ॥१३५१॥

मदर्थं कुर्वता राज्यं प्रयत्नादपकण्टकम् ।
अधमे किं महाराज त्वयाऽऽत्मा परिभावितः ॥१३५२॥

---

1346. c) C S′ °वाष्टुकां, D St $P_{1-3}$ $I_3$ °वाष्टुव (for वाष्टुक found in SL, cf. *v.* viii. 1459).

1348. b) C S′ $P_1$ $I_3$ फाल्गुणे, $P_2$ हाल्गुने (for फाल्गुने).

1349 c) C S′ °नैव (for °नैत्य). —d) S′ SA धात्रीयेन; D C $P_{1-3}$ $I_3$ धात्रीयेण (for धात्रेयेण suggested with St).

1350. a) $SA_1$ om. नुभाव with a space

अहेतेः पश्यतः शत्रूनन्ते वैरविशुद्धये ।
अपि तेऽमानिनोऽगच्छंस्तात संभावनाभुवम् ॥१३५३॥

त्वया निषेधिते वैरे पिता भ्राता च ते दिवि ।
निर्मन्युः संप्रति त्वं तु वर्तसे मन्युदुस्स्थितः ॥१३५४॥

अनरण्यकृपद्रोणजमदग्न्यादिषु स्पृहाम् ।
कुल्यक्षालितवैरेषु मा कार्षीः कांचन क्षणम् ॥१३५५॥

शोच्यस्त्वदाश्रयो मन्युरहं शोधयिता नृप ।
दूये न तत्र यातं यत् त्रैलोक्यमभियोज्यताम् ॥१३५६॥

वात्सल्योत्पुलकस्मेरं स्निग्धोक्तिमधुरं मुखम् ।
मद्दर्शने यदासीत् ते तन्मे पुर इवाऽधुना ॥१३५७॥

इति चाऽन्यच्च विलपन् गाम्भीर्यालक्ष्यवैकृतः ।
ह्रीशोकभयमूकान् स ददर्शाऽऽतान् पितुः पुरः ॥१३५८॥

अशिक्षयत यन्मन्युर्दाक्षिण्यं निरुरोध तत् ।
तथाऽप्येवं स तानूचे किंचिदाक्षेपकर्कशम् ॥१३५९॥

कोशैः सद्वंशतां वीक्ष्य कुर्वतः सत्क्रियां गताः ।
धिग् भवन्तश्च शस्त्रं च तातस्याऽन्ते विपर्ययम् ॥१३६०॥

यन्मतिपतृव्ये निहते कृतमुच्छिष्टजीविभिः ।
मान्यानां भवतां सिद्धं हा धिक् तदपि नाऽधुना ॥१३६१॥

---

1353. a) SL अहेत , $P_2$ अहतै. (for अहेतेः)

1355. b) All Mss read °जामदग्न्या° (for °जमदग्न्या° suggested with St. Tr)

1358. a) $P_{1-3}$ चान्यश्च (for चाऽन्यच्च).

1360. b) D $P_{1-3}$ $I_3$ SA कुरुत , C S′ कुरुता (for कुर्वत. suggested with St).

1361. a) $P_{1-3}$ $I_3$ SA न हते (for निहते).

इत्युपालम्भमानस्तान् द्वित्रैरन्तिकमागतैः ।
स्वकैरमात्यैः कर्तव्यश्रुतयेऽवहितः कृतः ॥१३६२॥

प्रस्थानं लोहरे केचिदूचुः संत्यज्य मण्डलम् ।
त्वरां च तत्र रात्र्यन्ते वदन्तो भैक्षवं भयम् ॥१३६३॥

गर्गात्मजं पञ्चचन्द्रमालम्ब्य लहरस्थितम् ।
द्वैराज्याचरणायाऽन्ये धीरप्राया बभाषिरे ॥१३६४॥

नहि स्वगृहवद् भिक्षोर्विविक्षोर्नगरान्तरम् ।
अज्ञायि प्रत्यवस्थानं केनाऽप्यसति सुस्सले ॥१३६५॥

आत्मन्यसंभावनया तादृशां मन्त्रिणां नृपः ।
सान्तःखेदं श्वो विधेयं द्रक्ष्यथेत्यब्रवीद् वचः ॥१३६६॥

कालापेक्षापरिव्यक्तपितृव्यापत्तिदुस्स्थितः ।
स कोशादिष्वथाऽदिक्षद् रक्षिणस्त्राणदीक्षितान् ॥१३६७॥

इतश्चेतश्च बम्भ्रम्यमाणैः प्रोद्यत्प्लुतस्वरम् ।
अन्योन्याख्यायिभिर्लोकैः पुरं मुखरतामगात् ॥१३६८॥

मत्तवेतालमालेव कालरात्र्याकुलेव च ।
बभूव सा यामवती सर्वभूतभयावहा ॥१३६९॥

दीपैर्निर्वातनिष्कम्पैश्चिन्तास्पन्दैश्च मन्त्रिभिः ।
तिष्ठन् परिवृतो राजा त्वन्तरेवमचिन्तयत् ॥१३७०॥

---

1362. c) C S′ $P_{1,2}$ $I_3$ St द्वित्रै° (for स्वकै°). C S′ कर्तव्ये (for कर्तव्य°). —d) C S′ एव हित (for °येऽवहितः).

1364. b) C S′ $P_2$ $I_3$ SA °लम्भ्य (for °लम्ब्य). —c) $P_1$ वैराज्या° (for द्वैराज्या°).

1366. b) $SA_1$ om. तादृशा with a space.

1367. a) D °त्यक्त°, $P_3$ °व्यक्त (for °व्यक्त°).

1368. b) $P_{1-3}$ $I_3$ °मानै (for °माणै.). C S′ पाशूत्प्लुताम्बरम् ; $P_1$ प्रोद्यत्प्लुताम्बरम् (for प्रोद्यत्प्लुतस्वरम् )

निर्द्वारे सतमस्युग्रमारुते शून्यवेश्मनि ।
तातोऽपि निहतः शून्ये मयि जीवत्यनाथवत् ॥१३७१॥

कष्टमेतादृशासह्यवैशसक्षालनावधि ।
कथं गोष्ठीषु शक्ष्यामि द्रष्टुं मानवतां मुखम् ॥१३७२॥

विरोधिवशवर्तिभ्यो देशेभ्यः सैन्यनायकाः ।
सहिमैरेव दुर्लङ्घ्यैः कथमेष्यन्ति वर्त्मभिः ॥१३७३॥

इत्थं विमृशतस्तस्य तत्तत्तीव्राभिषङ्गिणः ।
ययौ भीतिमतो भीमा कथंचित् सा निशीथिनी ॥१३७४॥

प्रातश्चतुष्किकां पौरसमाश्वासाय निर्गतः ।
नष्टं कटकमन्वेष्टुं सोऽश्वारूढान् व्यसर्जयत् ॥१३७५॥

मार्गानसूचीसंचारैस्तुषारैर्विवरोज्झितान् ।
आश्लिष्टवसुधामेघाः कर्तुं प्रारेभिरे ततः ॥१३७६॥

नामाऽप्यलब्ध्वा सैन्यस्य मोघसैन्येषु दूरतः ।
निवृत्तेषु नियुक्तेषु विमृश्य नृपतिः क्षणम् ॥१३७७॥

यद्यद्येनाऽऽहृतं तत्तत्परित्यक्तं मयाऽधुना ।
दत्तं चाऽरीञ्छ्रितवतामभयं सागसामपि ॥१३७८॥

इत्याज्ञां भ्रमयामास पटहोद्घोषणैः पुरे ।
साशीर्घोषास्ततः पौरास्तत्राऽरज्यन्त सर्वतः ॥१३७९॥

---

1371. a) C स (for स°)

1373. b) D C S′ $P_{1,2}$ $I_3$ SA °नायक (for °नायका·). —d) D S′ °ष्यति (for °ष्यन्ति).

1374. a) All Mss read विमृषत° (for विमृशत° suggested with St). —b) C S′ St $P_{1,2}$ $I_3$ °षङ्गिन (for °षङ्गिण). —d) $P_{1,2}$ $I_3$ SA निषीथिनी; $P_3$ निधीथिनी (for निशीथिनी)

1376. c) St °धा मेघा· (for धामेघा).

1377. b) मोघदैन्येषु is suggested with St (for मोघसैन्येषु found in all Mss. cf. St. Tr fn) —d) SA D $P_{1-3}$ S′ विमृष्य नृ°; C विमृश्यन्नृ° (for विमृश्य नृ°).

1379. After this *v* तिलकम्

अनन्तरनृपाचारवैधर्म्यौकारकल्पया ।
तया सोऽनघया वृत्त्या फलं सद्योऽनुभावितः ॥१३८०॥

शतादप्यूनसंख्यैर्यः स्थितवाननुगैः समम् ।
अनुरागहृतैर्लोकैस्तत्कालं पर्यवार्यत ॥१३८१॥

प्रियोक्त्यावेदनं प्रीतिदायोपायं प्रभोः पुरः ।
भजंल्लोकस्याऽग्र्यमन्त्रिपदवीं लक्ष्मकोऽग्रहीत् ॥१३८२॥

राज्यं शय्यां नयत्येवं प्राज्ञे राज्ञि नयक्रमैः ।
याति मध्यन्दिने भिक्षुर्विविक्षुः पुरमाययौ ॥१३८३॥

तस्य डामरपौराश्ववारलुण्ठाकसंकुलः ।
अदृष्टपूर्वो ददृशे सैन्यव्यतिकरस्तदा ॥१३८४॥

हतं श्रुत्वा रिपुं राज्योत्सुकः स नगरं व्रजन् ।
राजा काकात्मजेनेति तिलकेनाऽभ्यधीयत ॥१३८५॥

हतः समस्तविद्वेष्यः स दैवाद् यदि सुस्सलः ।
कथं प्रकृतयो जह्युर्गुणवन्तं तदात्मजम् ॥१३८६॥

पुरप्रवेशे का राजंस्तस्मादेकमहस्त्वरा ।
एहि पद्मपुरं यामो मार्गं रोद्धुं विरोधिनाम् ॥१३८७॥

आगच्छन्तो नष्टसैन्याः सुज्जिमुख्या महाभटाः ।
निहता यदि वा रुद्धास्तत्र सायुधवाहनाः ॥१३८८॥

---

1380. b) C S′ °वैधम्मौं° (for °वैधर्म्यौं°).

1382 b) All Mss read °योपाय (for °योपायं suggested)

1383. a) C नयत्वेव (for नयत्येव). —c) St मध्य दिने (for मध्यन्दिने).

1387. a) C °प्रवेशका (for °प्रवेशे का).

1388. a) $P_{2,3}$ °सैन्य. (for °सैन्याः).

प्रविष्टोऽसि ततो न्यस्तशस्त्रो द्वित्रैर्दिनैर्ध्रुवम् ।
नगरं नगरौकोभिः स्वयमभ्यर्थितागमः ॥१३८९॥

अलमेतैर्जरन्मन्त्रैर्वदन्त इति चक्रिरे ।
स च कोष्ठेश्वराद्याश्च सेरास्तस्याऽवधीरणाम् ॥१३९०॥

राज्यं विदद्भिः संप्राप्तं तांस्ताञ्शासनपट्टकान् ।
द्रुतमर्थयमानैश्च विलम्बं कारितो निजैः ॥१३९१॥

अतो बहुहिमापातविवशाशेषसैनिकः ।
आसदन्नगरोपान्तं समयेन स तावता ॥१३९२॥

एतस्मिन्नन्तरे लब्धे निस्सैन्यस्य ससैनिकः ।
गर्गात्मजः पञ्चचन्द्रो नृपतेः पार्श्वमाययौ ॥१३९३॥

हतस्वामिपरित्यागमन्युक्षालनकाङ्क्षिभिः ।
राजपुत्रैः समं सोऽथ वीरो योद्धुं विनिर्ययौ ॥१३९४॥

असंभावितसंग्रामान् वीक्ष्य तान् भिक्षुसैनिकाः ।
यावत् प्रारेभिरे योद्धुं तावत् किमपि सर्वतः ॥१३९५॥

क्षणेनैव ययुर्भङ्गं तांस्तान् वीक्ष्य हतान् निजान् ।
न संस्तम्भयितुं शेकुः स्वचमूश्च पलायिनीः ॥१३९६॥

सेनानाथाश्च ये मुख्या भिक्षुपृथ्वीहरादयः ।
अदृष्टपूर्वं संत्रासं तेऽप्यशस्त्रिवदाययुः ॥१३९७॥

---

1389 After this *v* D adds युग्मम् .

1391. [a]) $P_1$ $I_3$ विद्वद्भि (for विदद्भि ) —[ab]) D (before suggestion) C S′ $P_{1-3}$ $I_3$ SA सप्राप्तास्ता° (for सप्राप्त ता° suggested with St D).

1395. [a]) All Mss read असभावन° (for असभावित° suggested)

1396. $P_3$ om *b-d*.

1397. $P_3$ om *a* and adds युग्मम् after this *v* —[d]) C तेऽपि श° (for ( तेऽप्यश° ).

विद्रवन्तोऽनुयाताः स्युस्ते चेद् दूरं नृपानुगैः।
तन्नूनमवशिष्येत क्षणादेव न किंचन ॥१३९८॥

वैमुख्यं तेषु यातेषु चिरात् सांमुख्यमाययौ।
नवभूभृत्प्रभावेण नगरे विधुरे विधिः ॥१३९९॥

अन्यथा कलितो लोकैरन्यथा दैवयोगतः।
इत्थं राज्ञोर्द्वयोरासीद् विजयावजयक्रमः ॥१४००॥

कंचिन्निपातयति बद्धपदं क्षणेन
कंचित् परं पिपतिषुं नयति प्ररूढिम्।
संकल्पनिर्विषयचित्रतरानुभाव
ओघोऽम्भसामिव तटं पुरुषं विधाता ॥१४०१॥

अथ तत्तद्भयस्थानशान्तः सुज्जिर्दिनात्यये।
दावव्याताद्रिनिष्क्रान्तो निस्सहोऽहिरिवाऽऽययौ ॥१४०२॥

मेधाचक्रपुरग्रामस्थितः श्रुत्वा हतं नृपम्।
स हि संमन्त्र्य राज्यन्तर्नोत्तस्थाववसत् परम् ॥१४०३॥

रिल्हणादीन् स्थिताञ्शूरपुरादौ सैन्यनायकान्।
प्रतीक्षमाणस्तैः सार्कं निर्बाधं नगरेऽविशत् ॥१४०४॥

तमिस्रायां प्रत्यभिज्ञाकृते तेषामनश्वरान्।
स्वावासपृष्ठे ज्वलतो दीपानास्थापयत् ततः ॥१४०५॥

वैमत्यात् ते तु पत्तीनां विद्रुतानां पृथक् पृथक्।
निशि क्वाऽपि परिभ्रष्टा न तत्कटकमाययुः ॥१४०६॥

---

1398 c) $P_{1-3}$ SA तान्नू° (for तन्नू°).

1399 c) $P_{1-3}$ °वेन (for °वेण)

1402. a) C S′ °द्भटस्था° (for °द्भयस्था°)

1403. a) C S′ $I_3$ SA मेधाचक्र पुर° (for मेधाचक्रपुर°).

1404. c) C °तीक्ष्य° (for °तीक्ष°).

प्रत्यूषे प्रचलंस्तैस्तैः पृष्ठलग्नैः स डामरैः ।
न मुहूर्तमपि त्यक्तः प्रहरद्भिरितस्ततः ॥१४०७॥

वृद्धस्त्रीबालभूयिष्ठान् सहप्रस्थायिनो जनान् ।
ययौ रक्षन् पुरः कृत्वा पशुपालः पशूनिव ॥१४०८॥

पञ्चशत्या हयारोहैः सह व्यावृत्य तिष्ठता ।
कंचित् क्षणं तेन रक्षा तेषां कर्तुमशक्यत ॥१४०९॥

द्राक्षाषण्डद्रुमव्यूहसंबाधेऽध्वन्यसाध्वसैः ।
बाध्यमानोऽरिभिर्लोकं सोऽत्याक्षीत् तु पदे पदे ॥१४१०॥

हतस्य स्वामिनः स्वामिसूनोश्च व्यसनस्थितेः ।
आनृण्यकाङ्क्षिणा तेन तत्र ह्यात्मैव रक्षितः ॥१४११॥

येषां प्राणपरित्यागे निश्चयं बध्नतामपि ।
न योग्यकालापेक्षाऽस्ति किं तैर्हिंस्रपशूपमैः ॥१४१२॥

हन्तुं तं नष्टमायान्तं रुद्ध्वा पद्मपुरान्तिकम् ।
अवसण्डामराः क्रूराः खड्वीविषयौकसः ॥१४१३॥

खेरीतलालशाग्रामादुत्थाय पृथुसैनिकः ।
व्रजंस्तेनाऽऽययौ तत्र प्रसङ्गे श्रीवक पथा ॥१४१४॥

तमनष्टानुगं सुज्जिरसाविति विशङ्किताः ।
निपत्य ते विदधिरे हतलुण्ठितसैनिकम् ॥१४१५॥

---

1408 c) C S′ पुरस्कृत्य (for पुर कृत्वा)

1409. a) St $P_2$ $I_3$ पञ्चाशत्या (for पञ्चशत्या)

1411. c) St °नृण्या°; $P_3$ °नृण्य (for °नृण्य°).

1413 d) C S′ $P_3$ खण्डूवी° (for खड्वी°)

1414 c) C S′ व्रजन्नन्वा° (for व्रजस्तेना°)

1415. a) C S′ °नुष्ठा° (for °नष्टा°)

मेरुश्च सज्जनश्चाऽश्ववारौ तत्राऽऽहवे हतौ ।
क्षतो वट्टात्मजो मल्लो दिवसैर्यो व्यपद्यत ॥१४१६॥

उदीपविहितश्वभ्रवहत्सलिलसंकटम् ।
उदीपपूरबालाख्यं स्थानं तत्र क्षणेऽभवत् ॥१४१७॥

युद्ध्वा युद्ध्वा प्रचलतस्तत्र पद्मपुराद् बहिः ।
रुद्धसैन्यस्य विशिखः श्रीवकस्याऽविशद् गलम् ॥१४१८॥

प्रहारविवशो नाऽसौ सुज्जिर्ज्ञात्वेति डामरैः ।
स निर्लुण्ठ्य परित्यक्तः पूर्वमैत्र्यनुरोधतः ॥१४१९॥

लुण्ठितश्रीवकानीककोशभारग्रहानतैः ।
तैः कैश्चिच्चलितैरासीत् सुज्जेर्मार्गोऽनुपद्रवः ॥१४२०॥

प्रस्थिते पथिकेऽकस्माद् यन्त्रेषूत्सादयन् वने ।
आयुश्शेषो मृगेन्द्रस्य विदध्यादध्वशोधनम् ॥१४२१॥

निश्शब्दसैन्यो निर्यातः सुज्जि पद्मपुरान्तरे ।
उदीपश्वभ्रसविधं संप्राप्तोऽज्ञायि डामरैः ॥१४२२॥

पदातिकोशशस्त्रादि मुष्णतः सोऽनवेक्ष्य तान् ।
तीर्त्वा श्वभ्रं वाजिगम्यां साश्ववारो भुवं ययौ ॥१४२३॥

ततः पुरं प्रशान्तारिभयं दूराद् विरोधिनः ।
भ्रूभङ्गतर्जनीकम्परूक्षालापैरतर्जयत् ॥१४२४॥

---

1417. a) D C S' $I_3$ °विहत° (for °विहित°) —c) C S' °पुर°, $P_1$ °भूर° (for °पूर°).

1419 c) C S' निर्लुण्ठि (for निर्लुण्ठ्य).

1420 a) $P_{2,3}$ $I_3$ SA लुण्ठित श्री° (for लुण्ठितश्री°) C °बको° (for °वका°). —b) C S' °शोक° (for °कोश°).

1423. a) $P_2$ $I_3$ SA °कोष° (for °कोश°) —b) $P_1$ $I_3$ SA सोनवीक्ष्य; $P_2$ सोनवीक्षि [sic] (for सोऽनवेक्ष्य)

1424 a) St $P_2$ तत पर (for ततः पुर)

संत्रस्तैश्छत्रमात्रं तैस्त्यक्तमादाय च द्रुतम् ।
प्रविश्य नगरं सास्रुर्नृपतेः पार्श्वमाययौ ॥१४२५॥

ज्यायसि भ्रातरीवाऽग्रं तस्मिन् प्राप्ते जहौ नृपः ।
दुःखोष्णैरस्रुभिः सार्धं वैरिव्यापातसाध्वसम् ॥१४२६॥

महत्तमोऽनन्तसूनुरानन्दस्तत्र वासरे ।
लोचनोड्डारकग्रामे डामरैः प्रचलन् हतः ॥१४२७॥

तत्तन्मङ्गल्यदण्डादिदुस्सहायासकारणात् ।
स विपत्पतितो नाऽभूत् कस्याऽपि करुणावहः ॥१४२८॥

भासाभिधः सुज्जिभृत्यो लोकपुण्यात् पलायितः ।
श्रान्तोऽवन्तिपुरेऽविक्षदवन्तिस्वामिनोऽङ्गनम् ॥१४२९॥

कम्पनोद्ग्राहकः क्षेमानन्दः स च तदन्तरे ।
अमर्षणैरवेष्ट्येतां डामरैर्होलडोद्भवैः ॥१४३०॥

इन्दुराजोऽपि सेनानीः कुलराजकुलोद्भवः ।
टिक्कं तद्वेष्टितो ध्यानोड्डारे व्याजादशिश्रियत् ॥१४३१॥

पिञ्चदेवादयोऽन्येऽपि बहवः सैन्यनायकाः ।
अतिष्ठन् क्रमराज्यान्तर्डामरैः कृतवेष्टनाः ॥१४३२॥

पाते वनस्पतेः शावा इव तन्नीडविच्युताः ।
इत्थं हताः क्षताश्चासंस्तत्र तत्र नृपानुगाः ॥१४३३॥

---

1428. [a]) C S′ तत्तु म° (for तत्तन्म°).

1430. [a]) C S′ °द्द्रोहक, $P_1$ SA °द्ग्रौहकः (for °द्ग्राहक°). —[c]) St (before suggestion) SA D $P_{1,2}$ °वेष्ट्येत, C वेष्टेतां; $P_3$ °वेष्ट्यता; $I_3$ °वेष्ट्यैता (for °वेष्ट्येता found in S′).

1431. [cd]) All Mss read °नोड्डार (for °नोड्डारे suggested with St).

1432. [c]) D C S′ अत्यजन्; $P_1$ $I_3$ अतिष्ठत् (for अतिष्ठन्). —[cd]) C °राज्य तड्डा° (for °राज्यान्तर्डा°).

1433. [a]) S′ $P_2$ दावा. (for शावा). —[c]) SA (with diplography) °श्वाश्वा° (for °श्वा°).

निष्पादत्रा हिमप्लुष्टचरणा नग्नविग्रहाः ।
क्षुत्क्षामा बहवोऽभूवन् मार्गेषु गलितासवः ॥१४३४॥

न व्यलोक्यत मार्गेषु तदा नगरगामिषु ।
पलालच्छन्नदेहेभ्यो मानुषेभ्यः परः क्वचित् ॥१४३५॥

ग्रासं विलासवासस्त्वं तेऽपि चित्ररथादयः ।
निन्युर्यैरचिरेणैव महामात्यैर्भविष्यते ॥१४३६॥

द्वितीयेऽपि दिने रुद्धसंचाराः पत्रिणामपि ।
तुषारवर्षिणो मेघा न मुहूर्तं व्यरंसिषुः ॥१४३७॥

वनपूर्वाभिधग्रामस्थितस्य कटकान् निजान् ।
भिक्षोर्निक्षिप्य धन्योऽथ सिंहदेवमशिश्रियत् ॥१४३८॥

निशम्य कृतसत्कारं नृपं तदनुयायिनाम् ।
सर्वेऽपि भैक्षवास्तस्थुः सैनिका नगरोन्मुखाः ॥१४३९॥

मन्दप्रतापे दायादे संप्राप्तावसरास्ततः ।
राज्यश्चतस्रो राजानमनुमर्तुं विनिर्ययुः ॥१४४०॥

परापातभयाच्छीतापाताच्च विवशैर्जनैः ।
न ता नेतुमशक्यन्त दूरस्थं पितृकाननम् ॥१४४१॥

चक्रिरे स्कन्दभवनोपान्ते देहांश्चिताग्निसात् ।
ते सत्वरं ततस्तासामदूरे राजसद्मनः ॥१४४२॥

---

1435 $P_1$ om. from मार्गेषु to देहेभ्यो.

1436 a) D $P_3$ °वासत्व, $P_{1,2}$ °वासात्व, C °वासार्थं; S′ °वासार्थें (for °वासस्त्व).

1438. b) St $I_3$ °काद् भटान्; $P_2$ °कान् भटान् (for °कान् निजान्). —d) $P_2$ SA °श्रयत् (for °श्रियत्).

1439. b) D C S′ $P_2$ °यायिनम् (for °यायिनाम्).

1441. a) C S′ °भयच्छिन्ना° (for °भयाच्छीता°) —b) C S′ °याताश्च; $P_1$ °पाताश्च; $P_3$ °पातश्च (for °पाताच्च). —d) $SA_1$ (after correction) तान्नेतु°; $I_3$ ..ग्नेतु (for ता नेतु°).

राज्ञी चम्पोद्भवा देवलेखा तरललेखया ।
स्वस्रा सहाऽविशद् वह्निं रूपोल्लेखावधिर्विधेः ॥१४४३॥

गुणोज्ज्वला जज्जला सा मृता वल्लापुरोद्भवा ।
गग्गात्मजा राजलक्ष्मीरपि वह्नौ व्यलीयत ॥१४४४॥

मत्वा हिमव्यपायान्तं राज्यरोधं निजप्रभोः ।
डामरा नवभूभर्तुर्हिमराजाभिधां व्यधुः ॥१४४५॥

ददर्श सौस्सलं मुण्डमथ भिक्षुरुपागतम् ।
गाढामर्षाग्निसंदीप्तैर्दृक्पातैर्निर्दहन्निव ॥१४४६॥

कोष्ठेश्वरज्येष्ठपालाद्यस्तत्सत्क्रियोद्यताः ।
अमहासन्नतां वैराद् भजता तेन वारिताः ॥१४४७॥

नगरं हिमवृष्ट्यन्ते स यियासुर्युयुत्सया ।
ताटस्थ्येनाऽहिताक्रुष्टान्भृत्याञ्ज्ञात्वाऽब्रवीद् वचः ॥१४४८॥

प्रसह्य प्राप्नुयां राज्यमिति पृथ्वीहरे सति ।
हते तु तस्मिन् दायादे विपन्ने स्यां पतिर्भुवः ॥१४४९॥

इत्यचिन्तयमेतत्तु दैवात् संजातमन्यथा ।
राज्यस्याऽऽशाऽपि विरता हते प्रत्युत यद्रिपौ ॥१४५०॥

किं राज्येनाऽथ वा कृत्यं भोगमात्रोपयोगिना ।
जिगीषोरुचितं कस्य ममेवाऽन्यस्य सेत्स्यति ॥१४५१॥

---

1444. a) St SA om. सा —c) C गग्गी° (for गग्गा°).

1445. b) C S′ राज्यं तस्य (for राज्यरोध) St (before corr in corrigenda) °प्रभा (for प्रभो).

1447. c) All Mss. except SL read असहासन्नता (for अमहासन्नता found in SL)

1449. cd) St °विपन्न , SA D $P_{1,2}$ $I_3$ विपन्ना; C S′ $P_3$ विपन्न॰ (for विपन्ने suggested with St Tr.) —d) C S′ स्यात् (for स्या).

1450. a) C S′ इति (for इत्य°)

1451. d) C S′ मम वा॰ (for ममेवा°).

मुण्डं न्यपातयद् भूमौ यः पूर्वेषां पुरा मम।
सिंहद्वारे मदीयेऽद्य तन्मुण्डं वर्तते लुठत् ॥१४५२॥

दशमासान्मदाद्यानां सुखच्छेदं व्यधत्त यः।
तत्तद्दुःखं स तु मया दशाब्दाननुभावितः ॥१४५३॥

एवं निर्व्यूढकर्तव्यतया नेष्यास्यवन्ध्यताम्।
उपशान्तमनस्तापः सुस्थित्या शेषमायुषः ॥१४५४॥

इत्याद्युक्त्वा गतष्टिक्काभ्यर्णं तं प्रणतं व्यधात्।
प्रीत्या स हेमघटिकश्वेतच्छत्रादिभाजनम् ॥१४५५॥

तद्विस्रम्भेण राज्याशापिशाच्योदितया पुनः।
गृहीतोऽभ्येत्य शीतार्तस्तस्यावन्तर्विचिन्तयन् ॥१४५६॥

अत्यन्तानुचितं चाऽन्यल्लवन्यै संविधित्सुभिः।
रक्षितं रक्षिणो न्यस्य हतक्ष्माभृत्कलेवरम् ॥१४५७॥

विपक्षाश्रयणेऽप्यस्मिन् स्वामिनोऽन्ते किमीदृशी।
दशा शरीरस्येत्यन्तः कृतज्ञत्वेन चिन्तयन् ॥१४५८॥

दिदृक्षाव्याजतः सज्जकाख्यो नगरशस्त्रभृत्।
आयातो वाष्टुकं गोप्तॄन्युद्धैर्जित्वाऽग्निसाद् व्यधात् ॥१४५९॥

स चतुर्नवताद् वर्षादारभ्याऽऽसादितच्छलैः।
भूतैरधिष्ठितस्तिष्ठन् प्रजासंहारकार्यकृत् ॥१४६०॥

---

1453. b) $P_{2,3}$ मुख° (for सुख°) —d) $P_2$ °जान्वित (for °भावित).
1454. d) C S′ सुस्थित, $P_2$ स्वस्थित्या (for सुस्थित्या)
1455. S′ om. *ab*. —c) D C सहेम° (for स हेम°). C S′ घटिका° (for घटिक°)
1456. c) SA शीर्तार्त° [sic]; $P_1$ शीतातु° [sic] (for शीतार्त°).
1457 c) C S′ रक्षिणा (for रक्षिणो).
1458 a) $P_3$ °श्रयिणो° (for °श्रयणे°)
1459 c). C S′ D $P_{1,3}$ $I_3$ वाष्टुका (for वाष्टुक) After this *v*. तिलकम्.
1460. d) St C S′ $I_3$ $P_2$ °कार्यभूत् (for °कार्यकृत्).

देवताधिष्ठिताविष्टदेहिवाक्यादिति श्रुतिः ।
भावितद्व्यसंवादजनितप्रत्ययोद्ययौ ॥१४६१॥

तदीयानन्यथात्वेन छेत्ता भ्रामयिता च यः ।
तन्मुण्डस्याऽस्य स पुमांल्लब्धः सुतो मृतस्तथा ॥१४६२॥

भिक्षुः कापुरुषाचारहतौचित्यो व्यसर्जयत् ।
प्राचण्ड्याख्यातये मुण्डमथ राजपुरीं रिपोः ॥१४६३॥

उच्चलात्मजया तत्र देव्या सौभाग्यलेखया ।
नेतॄन् पितृव्यमुण्डस्य जिघांसन्त्या निजानुगैः ॥१४६४॥

राजपुर्यामाकुलत्वं नीतायामाससाद तत् ।
तद्भर्तुः सोमपालस्य दूरस्थस्याऽन्तिकं चिरात् ॥१४६५॥

अधीनस्य मधुक्षैव्यग्राम्यधर्मादिकर्मसु ।
तिरश्च इव शोच्यस्य नेयबुद्धेः खशप्रभोः ॥१४६६॥

सभ्यैरुच्चावचं तत्र कर्तव्यं परिचिन्तितम् ।
स्वोचितं व्यञ्जितौचित्यानौचित्यं निरवग्रहैः ॥१४६७॥

नागपालस्तु सौभ्रात्रं लब्ध्वा भ्रातुः स्थितोऽन्तिके ।
सेहे मुण्डावशेषस्य नोपकर्तुर्विमाननाम् ॥१४६८॥

सुदीर्घदर्शिनोऽप्यन्ते कश्मीरेभ्यः पराभवम् ।
विशङ्क्योचुः सर्वथेदं सत्कार्यं वः शिरः प्रभोः ॥१४६९॥

---

1461. b) $P_{2,3}$ °देह° (for °देहि°). —d) C S′ °यो ययौ (for °योद्ययौ).

1462. b) C $P_2$ St भ्रमयिता (for भ्रामयिता). After this *v.* तिलकम्.

1463. c) St प्राचण्ड्य°, S′ प्राचण्डा° (for प्राचण्ड्या°).

1465. c) $P_2$ मद्भर्तुः (for तद्भर्तुः) After this *v.* युग्मम्.

1466. a) All Mss. read आदीनास्य; St suggests आदीनस्य (for अधीनस्य suggested).

1469. a) S′ °र्थं ते° (for °प्यन्ते). —b) C काश्मी° (for कश्मी°). —d) $I_3$ न॰ (for वः).

क्रियते येन नियतेरन्यथात्वं सनाथताम् ।
विनिहस्य हरेर्दंष्ट्राः कुर्वन्तो यत्र जम्बुकाः ॥१४७०॥

तद्गोपालपुरे कालागुरुचन्दनदारुभिः ।
काष्ठैर्निष्ठां शिरो निन्ये वीतिहोत्रेऽथ शत्रुभिः ॥१४७१॥

यथा प्राप्तिभ्रंशा धरणिपतिभावस्य विविधा
यथा ह्रासोल्लासा अपि समरसीमासु बहुशः ।
यथा तत्तद्दीर्घव्यसनविनिपातानुभवनं
तथा दृष्टस्तस्य प्रमयसमयोऽप्यद्भुततरः ॥१४७२॥

कस्याऽपरस्य तस्यैव लेभिरे वह्निसत्क्रियाम् ।
एकत्रेतरगात्राणि मुण्डमन्यत्र मण्डले ॥१४७३॥

टिक्कादयोऽथ नगरं यान्तोऽवन्तिपुराध्वना ।
तत्र हन्तुं व्यलम्बन्त भासादीन् पूर्ववेष्टितान् ॥१४७४॥

युद्धाग्न्युद्दीपनग्रावप्रहारच्छेदकारिभिः ।
न ते जेतुमशक्यन्त तैः प्रयत्नपरैरपि ॥१४७५॥

स्थितैर्महाश्मप्राकारगुप्ते सुरगृहाङ्गने ।
तैर्हन्यमानास्ते स्थातुं गन्तुं वा नाऽभवन् क्षमाः ॥१४७६॥

एवं प्राप्तविलम्बेषु तेषु लब्धान्तरः सुधीः ।
स्वीचकार प्रदानेन खड्वीडामरान्नृपः ॥१४७७॥

गृहीतनीविना तेषां सुज्जिः प्रायोजि सत्वरम् ।
तेन भासादिमोक्षाय पञ्चचन्द्रादिभिः समम् ॥१४७८॥

---

1470. a) D $P_{1,3}$ ये तु, $P_2$ यो, SA ये; SL योन्य° (for येन). —c) निहतस्य or निवहस्य is suggested (for विनिहस्य found in all Mss.). The whole verse does not give any clear sense.

1472. c) $P_2$ °भवने (for °भवन).

1473. c) $I_3$ SA om. र in एकत्रेतर without indicating a *lacuna*.

1475. d) C S' °यत्नै (for °यत्न°).

प्रापाऽवन्तिपुरं यावन्न स तावत् तदग्रगान् ।
कय्यात्मजादीनालोक्य भङ्क्तं टिक्कादयो ययुः ॥१४७९॥

देवागाराद् विनिर्याता भासाद्यास्ते च विद्विषाम् ।
भग्नानामनुगान् हत्वा सुज्जेरन्तिकमाययुः ॥१४८०॥

लब्धप्रतापे नगरं प्रविष्टे कम्पनापतौ ।
आययाविन्दुराजोऽपि टिक्कं संत्यज्य सानुगः ॥१४८१॥

चक्रे चित्ररथश्रीवभासादीनपि भूपतिः ।
पादाग्रद्वारखेर्यादिकर्मस्थानाधिकारिणः ॥१४८२॥

यथापूर्वमधीकारानजहत् सुज्जिरप्यभूत् ।
प्रतीहारमुखप्रेक्षी का कथेतरमन्त्रिणाम् ॥१४८३॥

प्रतीहारोऽपि निस्सीमडामरग्रामसंमतः ।
तद्भेदचक्रिकां कुर्वन्नगाद् राज्ञः प्रतीक्ष्यताम् ॥१४८४॥

स नासीदसुहृद्व्यूहे कोऽपि तत्प्रेरणेन यः ।
नाऽशिश्रियन्नृपं नो वा बभूवाऽऽश्रयणोन्मुखः ॥१४८५॥

निह्नुतेशित्वसद्दशस्फूर्तिर्धूर्तो महीपतिः ।
आहारमप्यनासाद्य तन्मतं न न्यषेवत ॥१४८६॥

इत्थं नगरमात्रान्तर्लब्धपादप्रसारिकः ।
सोऽवर्तिष्ट समासन्नफलं कन्दलयन्नयम् ॥१४८७॥

---

1482. d) C S′ °कार्य° (for °कर्म°)
1483 ab) C S′ °रान् न ज° (for °रानज°).
1485. c) SA °श्रय° (for °श्रिय°).

संघटय्याऽखिलान् भिक्षुर्डामरान् विजयेश्वरे ।
अथाऽतिष्ठदधिष्ठानं जिघृक्षुः शिशिरात्यये ॥१४८८॥

अदृष्टपूर्वं स्वचमूचक्रैक्यं वीक्ष्य डामराः ।
भिक्षोर्हस्तगतं राज्यं मत्वाऽशङ्किषताऽथ ते ॥१४८९॥

एकैकस्यैष धीशौर्यमित्रामित्रादि दृष्टवान् ।
नोत्तिष्ठेत् प्राप्तराज्यः किमास्कन्देषु गृहान्तरात् ॥१४९०॥

इति संमन्त्र्य ते राज्यं सोमपालाय दित्सवः ।
दूतान्निगूढं प्राहिण्वन् सोऽपि दूतं व्यसर्जयत् ॥१४९१॥

आकाराचारवैक्लव्यैः पशुतुल्यस्य तस्य तैः ।
राज्यभोगा अभङ्गा नो भविष्यन्तीत्यचिन्त्यत ॥१४९२॥

भोगलोभोज्झितौचित्यदस्युसंघचिकीर्षितम् ।
देशेऽत्र पापात् पापीयो दैवान्न समपादि तत् ॥१४९३॥

दास्येऽप्ययोग्यो यो राज्ये स इत्यास्तां त्रपान्यतः ।
शक्येत पातुं देशोऽयं किमीषदपि तादृशा ॥१४९४॥

शालीन् पलालपुरुषोऽवति यः कृशानु-
दग्धाननश्चटकपेटकभीतिदानैः ।
त्रातुं स काननतरून् विहितो विदध्यात्
किं तत्र भञ्जनकृतां वनकुञ्जराणाम् ॥१४९५॥

---

1488. ab) SA C S′ $P_{1,2}$ $I_3$ भिक्षून्डा° (for भिक्षुर्डा°). —c) $P_{1,2}$ SA $I_3$ अथाधिष्ठ°, St अथाध्यष्ठा° (for अथाऽतिष्ठ°)
1490. a) C S′ $P_{1-3}$ $I_3$ SA °कस्यौषधी°, D कस्यंष धी° (for °कस्यैष धी° suggested with St)
1492. a) D C S′ $P_1$ $I_3$ °कारचा° (for °काराचा°) —b) $P_3$ तेस्य (for तस्य) —c) C S′ °भोगाश्च (for °भोगा अ°)
1493. a) D $P_1$ °भोजि°, C S′ °भोर्जि° (for °भोज्झि°) —c) All Mss. read पापीये (for पापीयो suggested with St)
1494 b) C S′ सदभ्यासे त्रपान्वित (for स इत्यास्ता त्रपान्यत).
1495. c) C S′ निहितो (for विहितो)

भिक्षोर्नैदिष्ठतां दिष्टवृद्धिव्याजात् ततो भजन् ।
तद्दूतो डामरान् गूढं नीविदानोद्यतान् व्यधात् ॥१४९६॥

वैशाखेऽथ कृतारम्भस्तदा संभावितत्वरः ।
निर्गत्य नगरात् सुज्जिर्गम्भीरातीरमाययौ ॥१४९७॥

तस्याऽभियोगः श्लाघ्योऽभूद् योद्धुं यत्समवायिनः ।
एकाकी तावतो वीरानूरीकृत्य स निर्ययौ ॥१४९८॥

अन्तःपाते साहसानां नाऽद्भुतं तद्विधेर्वशात् ।
जीयते लक्षमेकेन लक्षेणैकोऽथवा युधि ॥१४९९॥

पारं तरीतुं निस्सेतोः सरितोऽपारयन्नसौ ।
पारे परस्मिन्नहितानपश्यच्छरवर्षिणः ॥१५००॥

द्वित्रा निशाः स ते चाऽऽसंस्तस्याः सिन्धोस्तटद्वये ।
रुद्धाः संनाहिनोऽन्योन्यरन्ध्रावेक्षणदीक्षिताः ॥१५०१॥

अथाऽवन्तिपुरान्नौभिरानीताभिरबन्धयत् ।
सेतुं साश्वोऽतरत् सुज्जिरारुह्य तरणीं स्वयम् ॥१५०२॥

तरन्तमेव तं दृष्ट्वा योधैः कतिपयैः समम् ।
द्विषच्चमूर्मरुल्लोला द्रुमालीवाऽभवच्चला ॥१५०३॥

दृष्टं मुहूर्तादेतावदारूढः स च यत्तटम् ।
बद्धश्च सेतुस्तीर्णाश्च योधा भग्नाश्च विद्विषः ॥१५०४॥

---

1496 a) C S' °र्नौनिष्टता, $P_1$ °र्नौसिष्टता, $P_3$ $I_3$ °र्नौमिष्टतां (for °र्नैदिष्ठतां).

1498 a) C S' °स्यापि योग. (for °स्याऽभियोग). —b) C S' बोद्धु [sic] (for योद्धुम्)

1501. d) $P_{1,3}$ $I_3$ SA °वीक्षण° (for °वेक्षण°)

1503. c) $P_{1,2}$ $I_3$ द्विषश्चमू° (for द्विषच्चमू°)

न खड्गी न हयारोहो नाऽपि शूली न चापभृत् ।
व्यावृत्य प्रेक्षितुं कश्चिदशकद् विद्रुताद् बलात् ॥१५०५॥

निबद्धवध्रशैथिल्याल्लोलपल्ययने हये ।
कोष्ठेश्वरस्याऽश्ववारा व्यलम्बन्ताऽन्तरे क्षणम् ॥१५०६॥

निर्यन्त्र्य तेऽपि पर्याणं सुज्जौ पश्चात् प्रधाविते ।
वातोद्धूतं रजश्चक्रमिव क्षिप्रं तिरोदधुः ॥१५०७॥

हतलुण्ठितविध्वस्तध्वजिनीका विरोधिनः ।
ध्यानोड्डारादिषु ग्रामेष्वमिलन्खण्डशो गताः ॥१५०८॥

विजयेशाग्रगं तीर्त्वा वितस्तासेतुमागतः ।
भासोऽपि दस्यून् विदधे पलायनपरायणान् ॥१५०९॥

उषित्वा विजयक्षेत्रे तदाऽन्येद्युरुपागते ।
कम्पनेशे ययुस्त्यक्त्वा ध्यानोड्डारं विरोधिनः ॥१५१०॥

तत्र स्थित्वा दिनैः कैश्चित् स देवसरसोन्मुखः ।
शिश्रिये भेदनिर्यातैरेत्य टिक्कस्य गोत्रिभिः ॥१५११॥

जयराजयशोराजौ तन्मुख्यौ भोजकात्मजौ ।
प्रविश्य देवसरसं व्यधाट्टिक्कोपवेशने ॥१५१२॥

ययुर्विनष्टसंघातास्तस्मिन् पश्चात् प्रधाविते ।
भिक्ष्वादयः शूरपुरं स्वोर्वीं कोष्ठेश्वरादयः ॥१५१३॥

---

1505. c) $P_1$ प्रेक्षित॰, $I_3$ SA प्रेक्षितु॰ (for प्रेक्षितु)
1507. a) $P_{1,2}$ $I_3$ SA निर्यन्त्य; C S′ निर्यत्य (for निर्यन्त्र्य). —c) St $P_2$ $I_3$ वात्यो° (for वातो°).
1508. S′ om this *v.*
1509. a) $SA_1$ (after corr.) C S′ St $P_{1,3}$ °मग्रग, $SA_1$ (before corr.) °मग्रत॰ (for °मागत). —c) $P_3$ transposes दस्यून् विदधे.
1510. c) C S′ $I_3$ $P_{1,3}$ SA कम्पनेश (for कम्पनेशे).

गर्हा महाभये सोमपालदूतः पलायितः ।
दास्याः सुतेन प्रहितः कुत्राऽस्मीति प्रभोर्व्यधात् ॥१५१४॥

स हि तादृङ्महारम्भक्षोभसाध्योन्नतीच्छुताम् ।
तस्य सिंहीस्पृहाक्रान्तगोमायुवदमन्यत ॥१५१५॥

प्रमादात् स्वामिनो राज्यं चिरं नष्टं मितैर्दिनैः ।
सुजि. प्रसाध्य प्रददावेवं स स्वामिसूनवे ॥१५१६॥

शमालादीनपि व्यूढान् दानोपायेन डामरान् ।
पौरांश्च भिक्षाश्रयिणो राजा भेत्तुं प्रचक्रमे ॥१५१७॥

राज्ञः परीक्ष्य सामर्थ्यमथ कुर्मो यथोचितम् ।
इति सर्वाभिसारेण ते संमन्त्र्य रणं ददुः ॥१५१८॥

रजोजवनिकालक्ष्यभटौघनटताण्डवः ।
दामोदरेऽभूत् संग्रामः स वीरग्रामघस्मरः ॥१५१९॥

कोष्ठेश्वरवशं यातं रक्षता पितरं क्षतम् ।
लब्धाः सहजपालेन श्लाघाः प्रकृतिभिः समम् ॥१५२०॥

श्रमस्तत्राऽविशेषोऽभूद् राज्ञो भिक्षाचरस्य च ।
भिक्षुस्त्वहन्यसंवेद्यं विवेदाऽऽत्मपराजयम् ॥१५२१॥

ततः प्रभृति यः प्रातः स न सायमदृश्यत ।
योऽद्य वा न परेद्युः स सैनिको भैक्षवे बले ॥१५२२॥

---

1516. a) C S′ $P_{1-3}$ प्रसादात् (for प्रमादात्) —c) St C $P_{1-3}$ $I_3$ प्रसाद्य, S′ प्रसादा (for प्रसाध्य)

1517. d) C S′ $P_3$ $I_3$ °भ्येत्तु, $P_1$ °व्येत्तु, St °भ्येतु (for भेत्तु)

1518. d) St C S′ SA $P_{1-3}$ $I_3$ त (for ते). C S′ St $P_{1,2}$ $I_3$ दद्रु, $P_3$ व्यद्रुः (for ददु).

1519. a) $P_{1-3}$ $I_3$ SA °जवनिका (for °जवनिका°).

1521. c) D $P_1$ $I_3$ °स्त्वनन्य°, $P_3$ °स्तदन्य°, $P_2$ °स्त्वदन्य° (for °स्त्वहन्य°).

एवं त्यक्त्वा परान् पौरडामरेषु नृपान्तिकम् ।
प्रयात्सु लाभसत्कारानुचितान् प्राप्नुवत्सु च ॥१५२३॥

काप्यहंपूर्विकोत्तस्थौ मनुजेश्वरकोष्ठयो ।
प्रयातुं पार्थिवाभ्यर्णं लाभसौख्याभिलाषिणोः ॥१५२४॥

ज्ञात्वाऽथ तत् काकरुहाद् गृहीतस्वपरिच्छदः ।
देशान्तरोन्मुखो भिक्षुराषाढे मास्यवाचलत् ॥१५२५॥

अनुयाद्भिः स दाक्षिण्यशेषाद् विहितसान्त्वनैः ।
तदाद्यैर्डामरैः क्रुध्यन् न निरोद्धुमपार्यत ॥१५२६॥

अकरोत् स्वैरिणीसूनुतया शीलबहिष्कृतः ।
अतिरूपेषु दारेषु तस्य कोष्ठेश्वरः स्पृहाम् ॥१५२७॥

सटां हरेः फणारत्नमहेर्ज्वालां हविर्भुजः ।
बालां च तस्य संस्प्रष्टुं कोऽप्रशान्तस्य शक्नुयात् ॥१५२८॥

समं सौस्सलिना बद्धसंधिराश्रयकाङ्क्षिणः ।
सोमपालः स्वविषये नाऽदात् तस्य प्रतिश्रयम् ॥१५२९॥

उद्वेजितः प्राणहरैः प्रयत्नैस्तस्य सर्वतः ।
तद्देशादुर्गममहीसीमान्तं सुल्हरीं ययौ ॥१५३०॥

त्रिगर्तेषु दया शीलं चम्पायां मद्रमण्डले ।
त्यागो दार्वाभिसारेषु मैत्री नाऽमर्त्यधर्मिणाम् ॥१५३१॥

---

1524 d) S′ $P_2$ °षिणौ, $P_3$ $I_3$ °षिणे (for °षिणो).
1525 a) For काकरुह cf *v* VIII. 1264. —b) C S′ °तस्य° (for °तस्व°).
1527. c) $I_3$ हारेषु (for दारेषु)
1528 a) $P_3$ सता (for सटा) —c) $P_{1-3}$ $I_3$ SA सम्प्रष्टुं (for संस्प्रष्टुं)
1530 a) D उद्विजेत, C S′ तद्विजेतु, $I_3$ तत्वेजित (for उद्वेजित) —c) $P_1$ $I_3$ SA तदेश° (for तद्देश°). —d) $P_1$ सुल्यरीं, $P_3$ सुल्हरी, $I_3$ स्वल्हरी (for सुल्हरीं).
1531 b) $P_2$ °रुद्रम°, $I_3$ मश्रम° (for मद्रम°) —c) $I_3$ दार्वाडि° (for दार्वाभि°).

पीडयेत् त्यक्तभीर्भूभृद् दूरस्थे त्वयि डामरान् ।
त्वामेवाऽभ्यर्थ्य राजानं ततः कुर्युः क्रमेण ते ॥१५३२॥

क्ष्मां तद्व्रजामोऽर्थयितुं साम्प्रतं नरवर्मण ।
मन्त्रिभिर्युक्तमित्युक्तमपि मन्त्रं न चाऽग्रहीत् ॥१५३३॥

वसाल्पपरिवारोऽसद्गृह इत्यथ गृह्णतः ।
श्वशुरप्रार्थनां तस्य भृत्याः पार्श्वादवाचलन् ॥१५३४॥

प्रावर्तताऽथ नगरे विशद्भिर्विभवोज्ज्वलैः ।
सुलग्नसुलभे काले वरयात्रेव डामरैः ॥१५३५॥

वीक्ष्याऽश्वच्छत्रतुरगैरेकैकं पार्थिवाधिकम् ।
सुस्सलक्ष्मापतेर्धैर्यनैष्ठुर्यं तुष्टुवुर्जनाः ॥१५३६॥

औदार्याकारतारुण्यवेषसौन्दर्यमन्दिरम् ।
कोष्ठेश्वरोऽधिकं स्त्रीणां प्रययौ प्रेक्षणीयताम् ॥१५३७॥

प्रशान्तविप्लवे देशे ययावुत्सववाद्यताम् ।
विशद्भूरिलवन्यौघतूर्यघोषो दिवानिशम् ॥१५३८॥

क्षीराद्या लक्ष्मकेणाऽपि सर्वे मडवराज्यत· ।
आनीताः पार्थिवाभ्यर्णं सैन्यार्णवभयंकराः ॥१५३९॥

---

1533. a) C S′ $I_3$ तत्प्रजा सोऽर्थं° (for तद्व्रजामोऽथ°).
1534. a) C S′ वात्सल्य° (for वसाल्प°). —b) D $P_1$* इत्यप°, S′ इत्यर्थं° (for इत्यथ).
1536. b) C S′ $P_{1-3}$ $I_3$ °कैकपा° (for °कैक पा°) —cd) St C $P_{2,3}$ $I_3$ °धैर्ये नै° (for °धैर्यनै°).
1537. b) C S′ $P_3$ °वेश° (for °वेष°)
1538. a) SG °प्लवो देशो; (for °प्लवे देशे) —b) C S′ $P_3$ °वश्यताम् ; $P_2$ °वाच्यताम् (for °वाद्यताम् ) —d) C S′ $P_{1-3}$ SG °घोषा°, SA °घोषा (for °घोषो) C S′ °दिकोऽनि° (for दिवानि°)
1539 c) $P_1$ अनीता (for आनीता ).

अपि भूपालवाल्लभ्यादभूद् राजोपजीविनाम् ।
प्रतीहारगृहद्वारप्रवेशो बहुमानकृत् ॥१५४०॥

लवन्यलुण्ठितग्रामतया दुर्भिक्षदुस्सहः ।
व्ययोत्तरङ्गः कालोऽभूत् स राज्ञो धनदश्रियः ॥१५४१॥

डामरेभ्यो नृपः पारात् संगृह्णन् कृतवेतनः ।
निनायाऽभ्यन्तरं वृद्धिं बाह्यं चाऽपचयं जनम् ॥१५४२॥

तिष्यवैश्यार्घदेवाद्या ज्ञातयो जनकद्रुहाम् ।
राजद्रोहोचितां राज्ञा विपत्तिमनुभाविताः ॥१५४३॥

मासैश्चतुर्भिः स पितृप्रमयाहादनन्तरम् ।
अनन्यशासनं राष्ट्रं स्वमेव समपादयत् ॥१५४४॥

निर्धाम नगरं पौराः सर्वसामर्थ्यवर्जिताः ।
अनन्तैं राष्ट्रमाकीर्णं डामरैः पार्थिवोपमैः ॥१५४५॥

बद्धमूलो नातिदूरे सर्वभारसहो रिपुः ।
सबाह्याभ्यन्तरा मन्त्रिसामन्ता वैरिसंश्रिताः ॥१५४६॥

मन्त्रोपदेशो वृद्धस्य नैकस्याऽपि नृपास्पदे ।
अधर्मबहुलाः सर्वे भृत्या द्रोहैकवृत्तयः ॥१५४७॥

---

1542. a) C S′ पौरान् , St. Tr suggests सारान् (for पारात ).

1543. a) For तिष्यवैश्यार्घदेवा cf v viii. 1305 —c) $P_{1,3}$ $I_3$ °होचिता (for °होचिता).

1545 a) D C S′ $P_{1-3}$ $I_3$ SR निवासन° (for निर्धाम न° found in $SA_1$ ).

1547 a) D सत्तो°, C S′ $P_{1,3}$ $I_3$ SA मत्तो° (for मन्त्रो°). All Mss. read °देश° (for °देशो suggested with St) —c) St $P_{1,3}$ $I_3$ °बहल (for °बहुला ).

राज्यारम्भे बभूवेयं या सामग्र्यस्य भूपतेः ।
सा स्मर्तव्याऽन्तरा ज्ञातुं प्रत्युदन्तं विवेक्तृभिः ॥१५४८॥

प्राप्तप्रसङ्गात् तदिदं गुणग्रामोपवर्णनम् ।
वक्ष्यमाणं सुबहुशोऽप्यत्र लेशात् प्रदर्श्यते ॥१५४९॥

पूर्वापरानुसंधानवन्ध्यैर्दृष्टान्तवत्कथाः ।
नाऽबुद्ध्वाऽतिगभीराणां शक्या रसयितुं गुणाः ॥१५५०॥

प्रत्यक्षस्य गुणान् राज्ञो विचिन्वन्तो यथास्थितान्।
अनीर्ष्यस्य भविष्यामो विवेकस्याऽनृणा वयम् ॥१५५१॥

स्थितस्य तत्त्वविज्ञाने नाऽन्यस्य हि पटुर्जनः ।
अमानुष्यानुभावस्य राज्ञः किं पुनरीदृशः ॥१५५२॥

हितानां दाराणां सदृशसुखदुःखस्य सुहृदः
कवेः सोल्लेखस्य प्रियसकललोकस्य नृपतेः ।
स्थितानां कोऽप्यत्र व्यवहितविवेकः स्वकुकृतै-
रसामान्यं ज्ञातुं सुभगमनुभावं न कुशलः ॥१५५३॥

भवेत् प्राप्तप्रसरणा परिणामेऽथवा मतिः ।
कथं सर्वस्याऽद्भुतायां निष्ठायां गुणदोषयोः ॥१५५४॥

सन्त्येवाऽस्याऽपि विषमाः स्वभावा दोषतां जनः ।
येषां विपाकभव्यत्वमजानन् गणयत्ययम् ॥१५५५॥

---

1548. [c]) St C °न्तराज्ञातु (for °न्तरा ज्ञातु). —[d]) C °दन्तविवे° (for °दन्त विवे°)

1550 [b]) C °बन्धै°, D °बन्ध्यै° (for °वन्ध्यै°) $SA_1$ om. दृष्टान्त with a space. —[c]) C °बुद्धा°, $I_3$ °बुध्या° (for °बुद्ध्वा°)

1552. [b]) $P_2$ °जना (for °जन) —[c]) St $P_{1-3}$ $I_3$ °नुषा° (for °नुष्या°).

1553. [a]) S′ सुहृद (for सुहृद) —[d]) $P_1$ स्वभ° (for सुभ°)

1554. [c]) C S′ °र्वस्य भूता° (for °र्वस्याऽद्भुता°)

1555. [b]) $P_3$ दोषता (for दोषतां) —[c]) $P_3$ °जन्यत्व° (for °भव्यत्व°).

विकासः केषांचिन्नयनविषमैर्विद्युदुदयैः
परेषामुद्भूतिः श्रवणकटुभिर्दीर्घरसितैः ।
न चेष्टा काऽप्यन्योपकृतिपरिहीना जलमुचो
जडो वर्षादन्यं गणयति गुणं नाऽस्य तु जनः ॥१५५६॥

गुणांल्लोकोत्तराञ्शृण्वन्नस्याऽनुभवगोचरान् ।
भविता पूर्वभूपालकृत्ये सप्रत्ययो जनः ॥१५५७॥

अनुच्चलन्नपि स्थानाद् भ्रूभङ्गेन चकार सः ।
विलोलांल्लोमकम्पेन दिङ्नाग इव भूधरान् ॥१५५८॥

विरुद्धग्राहिनीवृन्दा गूढं यद्भयसंभवम् ।
वहन्ति तापं भूपाला और्वाग्निमिव सिन्धवः ॥१५५९॥

भूमिभृद्भास्वतस्तस्य तेजसाऽऽप्यायितो गतः ।
पूर्वराजयशश्चन्द्रो भुवनेष्वप्रकाशताम् ॥१५६०॥

यो यस्तं पश्यति स्वात्मसंमुखं स स सर्वतः ।
जानात्यवक्रोल्लिखितं देवबिम्बमिवेश्वरम् ॥१५६१॥

स्थिरप्रसादो दत्ते यत् तदादत्ते न स क्वचित् ।
भयं पुनः प्रणमतां दत्तं हरति विद्विषाम् ॥१५६२॥

कृष्टासेः प्रतिबिम्बं स्वं हित्वा नाऽन्योऽस्य संमुखः ।
नाऽपरः प्रतिशब्दाच्च गर्जतः प्रतिगर्जति ॥१५६३॥

---

1556. a) $P_1$ विकास (for विकास) $P_1$ °विशसै°; $P_2$ °विषदै°; $I_3$ °विषशै° (for °विषमै°) S′ $P_3$ °दय° (for °दयै°) —b) $P_{1,3}$ °द्भूति (for °द्भूति). —c) S′ °हीना (for °हीना)
1557. d) C S′ °कृते (for °कृत्ये)
1558 b) SA भूभङ्गेन; $P_2$ भ्रूभृङ्गेन (for भ्रूभङ्गेन).
1559. a) C S′ °रुध° (for °रुद°)
1560. d) D भुवनेषु (for भुवनेष्व°).
1561. c) C S′ जानाति वक्त्रो° (for जानात्यवक्रो°).
1562 b) $I_3$ कश्चित् (for क्वचित्).
1563. c) C S′ $P_1$ °शब्दश्च, $P_{2,3}$ $I_3$ °शब्दाश्च (for °शब्दाच्च).

तस्य नाऽतिशितं कोपे प्रसादे निशितं पुनः ।
धत्ते तीक्ष्णैकधारस्य तरवारेस्तुलां वचः ॥१५६४॥

तस्याऽकुजन्मनो नित्याम्लानलक्ष्मीविकासिनः ।
प्रभवन्त्याश्रिताः कल्पशाखिनः पल्लवा इव ॥१५६५॥

राज्ञि गाम्भीर्यदुर्लक्ष्यमाहात्म्यप्रभविष्णुताम् ।
विवेद मन्त्रिणां लोकः सिषेवे तांश्च सर्वतः ॥१५६६॥

प्ररूढस्तु प्रतीहारो न विषेहेऽन्यमन्त्रिणाम् ।
पार्श्वद्रुमाणामेषाख्यौषधिस्तम्भ इवोद्गतिम् ॥१५६७॥

तस्योत्पाटयतः सर्वांस्तृणानीवाऽवहेलया ।
स्फूर्जज्जनकसिंहोऽभूदशक्योन्मूलनः परम् ॥१५६८॥

आबाल्यात् संस्तुतो राज्ञः स कृत्स्नव्यवहारवित् ।
अधृष्यस्तरुणीभूततनयो ह्यास्त सर्वतः ॥१५६९॥

अद्वैधं यौनसंबन्धादिच्छतस्तत्सुतो मदात् ।
छुड्डाभिधस्तस्य ततः कृतावज्ञोऽतनोत् त्रपाम् ॥१५७०॥

रन्ध्रान्वेषी स तद्रोषादुपजापैः क्षणे क्षणे ।
ससूनौ जनके यत्नान्नृपं द्वेषमजिग्रहत् ॥१५७१॥

राज्ञस्तुल्यवयस्थौ हि जननीगाढसंस्तवात् ।
राज्यकाले हि सोत्सेकावास्तां तदवकाशदौ ॥१५७२॥

---

1564. c) $I_3$ दत्ते (for धत्ते). —d) C S′ °वाले° (for °वारे°)

1566. a) $I_3$ विवेश (for विवेद)

1567. b) C S′ नो (for न) —c) $P_1$ °ख्योषधि° (for °ख्यौषधि°).

1569. c) C S′ °स्तरणी° (for °स्तरुणी°). —d) C S′ °हस्त° (for °ह्यास्त°).

1571. d) D SA C S′ $I_3$ $P_{2,3}$ °न्नृपो, $P_1$ °न्नृप (for °न्नृपं suggested with St).

1572 a) $P_1$ राज्ञा तु° (for राज्ञस्तु°)

तुरङ्गयुग्योपस्काराध्मानाहारादि राजवत् ।
अकालज्ञावकुरुतां राजधान्यन्तरेव तौ ॥१५७३॥

सह स्ववृद्धैः समशीर्षिका प्रभो-
र्न युज्यते प्राप्तसमुन्नतेः क्वचित् ।
श्रितोन्नतेर्दर्दुरवृन्दलङ्घनं
सरोजषण्डस्य महाविडम्बना ॥१५७४॥

तद्भित्तिलाभसंरूढपैशुनालेख्यकल्पनाः ।
तद्वर्गेऽप्यखिले चक्रुस्तद्द्विषः कलुषं नृपम् ॥१५७५॥

अथ राजा विजयिनं सत्कर्तुं कम्पनापतिम् ।
कृतज्ञः श्रावणे मासि जगाम विजयेश्वरम् ॥१५७६॥

अत्राऽन्तरे पिञ्चदेवादागच्छन् गिरिगह्वरे ।
प्राप शूरपुरद्रङ्गाधीश्वरादुत्पलो वधम् ॥१५७७॥

पुष्याणनाडादुत्पिञ्जकृतये पुनरागतः ।
द्रङ्गाधिपेन गुटिकान्वेषिणा स ह्यवाप्यत ॥१५७८॥

क्षितौ निपतितः पार्श्वप्राप्तमेकं द्विषद्भटम् ।
मुमूर्षुर्विशिखाविद्धजानुमर्मापि सोऽवधीत् ॥१५७९॥

प्रत्यावृत्तस्य सत्कृत्य कम्पनेशं महीपतेः ।
द्वार्यवन्तिपुरस्थस्य द्रङ्गेशोऽरिशिरो व्यधात् ॥१५८०॥

---

1573. a) All Mss. read °योग्यो° (for °युग्यो° suggested with St Tr.).

1575. b) $P_2$ C S′ °कम्पना° (for °कल्पना°). —d) C °स्ताद्वि° (for °स्तद्द्वि°).

1577 c) St पिञ्ज°, S′ पञ्च°, $P_2$ पिच्छ° (for पिञ्च°).

1578. a) C S′ D $P_{1,2}$ $I_3$ पुष्पाण° (for पुष्याण°). —c) C S′ °नागुद्दि°; D °नागुटि°, $P_2$ $I_3$ नातटि° (for °न गुटि°).

1580 c) SA °पुरस्स्थस्य (for °पुरस्थस्य) —d) C S′ °शूर° (for °शोरि°).

स दृढद्राढिकामुष्टिरसुहृन्मुण्डमुद्गरः ।
चक्रे तस्य दृढामर्षशोकशङ्कुविपाटनम् ॥१५८१॥

आद्यायामेव यात्रायां जातारातिक्षयो जनैः ।
स निश्शेषयिताशेषकण्टकानामगण्यत ॥१५८२॥

तस्मिन् प्रविष्टे नगरं विद्रुताः केऽपि सागसः ।
प्रापुर्जनकसिंहाद्याः केऽपि कारागृहस्थितिम् ॥१५८३॥

कैश्चित् पालायितैः शङ्कां ग्राहिताः पृथिवीपतेः ।
ततः कोष्ठेश्वरमुखाः प्रातिलोम्यं प्रपेदिरे ॥१५८४॥

शमाला निर्गतः श्रीमान् कार्तिकेऽथ कृती नृपः ।
तत्र तत्राऽसुहृद्ग्रामं संग्रामोग्रमबाधत ॥१५८५॥

यत्र सुस्सलभूपाद्याः प्रापुर्भग्नप्रतापताम् ।
तं हाडिग्राममदहत् मुज्जिरूर्जितविक्रमः ॥१५८६॥

महीभुजा पीड्यमानैराहूतः कोष्ठकादिभिः ।
अथ भिक्षाचरो राज्यगृध्नुर्भूयोऽप्युपाययौ ॥१५८७॥

एकेनाऽह्ना योजनानि प्रोल्लङ्घ्य दश पञ्च च ।
शिलिकाकोट्टनामानं गिरिग्राममवाप सः ॥१५८८॥

क्षुत्पिपासाक्रमारातिभीतिमार्गभ्रमोद्भवम् ।
क्लेशं नाऽजीगणन्मानी धावितः स जिगीषया ॥१५८९॥

---

1581. d) C S′ $P_{1-3}$ $I_3$ SA °पाद° (for °पाट°)

1582. d) C S′ $P_{1-3}$ $I_3$ °कण्ठ° (for °कण्ट°).

1584. a) $P_1$ SA कैचित् [sic]; $P_2$ $I_3$ केचित् (for कैश्चित्).

1588. c) D C S′ $P_{1,3}$ °कोष्ट° (for °कोट्ट°).

कार्यमायाति वैमुख्यं जिगीषोर्विधुरे विधौ।
प्रस्थितस्य पुरोवाते रथस्येव ध्वजांशुकम् ॥१५९०॥

आरम्भमात्रमपि कस्यचिदेव सिद्ध्यै
कश्चित् प्रयत्नपरमोऽप्यफलप्रयासः।
मन्थाद्रिणाऽमृतमवाप्युदधेर्मुहूर्तात्
सक्तिं चिराद् विदधता न हिमाद्रिजेन ॥१५९१॥

भ्रष्टा सरित्स्ववसतेर्जलधिप्रवेशे
वेलोर्मिवेल्लनवशेन विवर्तमाना।
मिथ्यैव यच्छति धियं पुनरुद्गतेति
नोत्थानमस्ति तु विधिव्यपरोपितानाम् ॥१५९२॥

तस्य तावन्महायत्नकठोरस्योदयक्षणे।
सिद्धेर्विबन्धो विधिना विधुरेण व्यधीयत ॥१५९३॥

आयातं तमबुद्ध्वा तु तस्मिन्नेव क्षणेऽश्रयत्।
पृथ्वीहरानुजः प्रातभङ्गः कृत्ताङ्गुलिर्नृपम् ॥१५९४॥

कोष्ठेश्वरः स चाऽवेत्य संप्राप्तं तमतिष्ठताम्।
कृत्याक्षमौ ततः सर्पाविव मन्त्रनियन्त्रितौ ॥१५९५॥

ताभ्यां स्थानेऽथ सोऽन्यस्मिंस्त्याजितोऽध्वपरिश्रमम्।
कार्कोटद्रङ्गमार्गेण निर्गतः सुल्हरीं ययौ ॥१५९६॥

आसीच्च तत्र प्रोच्चण्डदर्पकण्डूलदोर्द्रुमः।
ऊष्मायमाणः कश्मीराक्रान्तिसंततचिन्तया ॥१५९७॥

---

1591. c) D $P_1$ °र्मुहूर्ता° (for °र्मुहूर्तात्).

1593 c) $P_{2,3}$ $I_3$ °बद्धो, C S′ °बुद्धो (for °बन्धो)

1594. b) SA om. तु

1595 c) D $P_{1-3}$ हत, C S′ हतौ, $I_3$ हित (for तन॰).

आयत्यां च तदात्वे च हितकृत्यं विचारयन् ।
राज्ञः श्रीगुणलेखाया जातमेकं सुतं शिशुम् ॥१६०७॥

पञ्चाब्ददेश्यं पर्माण्डि सुज्जिर्भूमिपतिं तदा ।
चिकीर्षुर्मन्त्रयामास मातुलेनाऽस्य गार्गिणा ॥१६०८॥

इत्थं भूतस्य दुध्रुक्षुः ससूनुः सुज्जिरद्य ते ।
पञ्चचन्द्रादिभिः सार्धं युक्त्या मन्त्रयतेऽनिशम् ॥१६०९॥

लब्धरन्ध्रः प्रतीहारो धन्याद्याश्च तदीरिताः ।
इत्यवोचंस्ततो भूपं स तथेत्यग्रहीच्च तत् ॥१६१०॥

पूर्वप्रजासृज इवाऽद्भुतवस्तुतत्त्व-
व्यावर्णनेन कुतुकं जनयन्ति तज्ज्ञाः ।
बाला इवाऽल्पमतिहार्यधियश्च सन्ति
प्रायो नृपा नियमशून्यमनोऽनुभावाः ॥१६११॥

शौचस्थाने कृतवसतिभिः स्त्रीव्यवायालये वा
निश्शस्त्रो यश्छलनकुशलैर्मानसं संप्रविश्य ।
नीतो भूतैरिव विवशतां निर्भरं गर्भचेटै-
र्भद्रं भूपात् कथमिव ततः स्यादवष्टब्धचेष्टात् ॥१६१२॥

निर्हेतु प्रहसन् विटः प्रविशति क्षोणीपतेरन्तिकं
प्रीत्युत्फुल्लदृगेष किं किमिति तं पृच्छत्यनच्छाशयम् ।
ब्रूते किंचिदसौ कचानथ कषन्सर्वंकषं मानिनां
मानप्राणगुणेषु यत्सरभसं दम्भोलिपातायते ॥१६१३॥

---

1607. c) S′ $P_1$ राज्ञा, C राज्या (for राज्ञ). —d) St $P_2$ $I_3$ °मेक° (for °मेकं).

1608 d) C S′ SA गर्गिणा (for गार्गिणा)

1610 b) $P_{1,2}$ धान्या° (for धन्या°) C S′ $P_{1,2}$ उदीरिता (for तदीरिता°).

1611. a) D C S′ $P_{1,2}$ $I_3$ SA °सृज (for °सृज). $P_{1-3}$ $I_3$ SA °तत्त्वं (for °तत्त्व°)

1612 a) C S′ शोच° (for शौच°). —b) D C S′ $P_{1-3}$ $I_3$ यच्छ° (for यश्छ°) —d) C S′ °मितरत (for °मिव तत )

1613. c) C कदाप्यथ, S′ कदापथ, $P_1$ कदानथ (for कचानथ).

सविभ्रमगतागतः किमपि भाषमाणः श्रुतौ
प्रभोर्वलितलोचनं जगदवज्ञयाऽऽलोकयन् ।
निजस्य मुखविक्रयाप्रणयताडनाद्यैर्विद-
न्ननुग्रहमिवाऽहितं नृपतिवल्लभो दुस्सहः ॥१६१४॥

अपि जातु स दृश्येत निस्संक्षोभमतिर्नृपः ।
यो यन्त्रपुत्रक इव व्यक्तं धूर्तैर्न नर्त्यते ॥१६१५॥

यतो भृत्यान्तराज्ञानाज्जातः सर्वस्वसंक्षयः ।
तत् प्रजादुष्कृते राज्ञां हा धिङ्नाऽद्याऽपि शाम्यति ॥१६१६॥

सुजिरारोग्यमन्वेष्टुमागच्छन् पूर्ववत्प्रभोः ।
विन्यस्तरक्षिणः पश्यन्नविश्वासमखिद्यत ॥१६१७॥

दाक्षिण्यं वामतां यातमाशये प्रतिबिम्बितम् ।
दर्पणस्येव राज्ञः स विभाव्याऽभूत् पराङ्मुखः ॥१६१८॥

तस्मिन् राजगृहे खेदान्मन्दीकृतगतागते ।
नृपतेस्तद्गतां प्रीतिं निश्शेषां जह्रिरे खलाः ॥१६१९॥

भृत्यः सुज्जेश्चित्ररथोऽप्यास्थानद्विजभूः शठः ।
प्रातिलोम्यावहैर्भर्तुर्मन्त्रैरासीच्छ्रियोऽन्तकृत् ॥१६२०॥

नीरोगे राज्ञि दृष्टः स दिष्टवृद्ध्यै नृपास्पदे ।
वसुवर्षी विनिर्याय प्रार्थनार्थी गृहान् ययौ ॥१६२१॥

---

1619. d) C S′ जघ्निरेऽखिला., $P_{2,3}$ $I_3$ SA जह्रिरेखिला (for जह्रिरे खला॰).

1621. b) C S′ $P_{1,3}$ शिष्ट° (for दिष्ट°)

न तं प्रासादयद् राजा विशालबलवाहनः ।
आक्रम्योऽसौ कथं नः स्यादित्युपायं त्वचिन्तयत् ॥१६२२॥

त्यज्येत हृतकार्योऽसौ निराशैरनुजीविभिः ।
मत्वेति तदधीकारानन्येभ्यस्तूर्णमार्पयत् ॥१६२३॥

राजस्थानात् स्रजं धन्यमुदयं कम्पनादपि ।
अजिग्रहन्नरपतिः खेरीकार्यं च रिल्हणम् ॥१६२४॥

हृताधिकारे प्रव्यक्तवैकृते नृपतौ ततः ।
अल्पावशेषानुचरः सुज्जिरासीद् विशङ्कितः ॥१६२५॥

विमानितः पुराद् गङ्गायात्रामुद्दिश्य मानवान् ।
सोऽथ सुस्सलभूभर्तुरस्थीन्यादाय निर्ययौ ॥१६२६॥

औत्सुक्यात् प्रार्थनाकाङ्क्षी राजधान्यन्तिके न सः ।
निर्गच्छन् राजपुरुषैर्न राज्ञा वाऽन्वरुध्यत ॥१६२७॥

तन्निर्वासनगर्वस्य स्थापनायाऽनुयात्रिके ।
प्रतीहारस्तस्य गुप्त्यै कोशादेः स्वात्मजं व्यधात् ॥१६२८॥

निग्रहानुग्रहावस्मदायत्ताविति रक्षिणम् ।
पुत्रं प्रादाल्लक्ष्मको म इति ध्यायन् स विव्यथे ॥१६२९॥

निवृत्तो लक्ष्मको द्वारात् पर्णोत्सं शनकैर्गतः ।
अवारोपयदद्रोहो भागिकं लोहराचलात् ॥१६३०॥

---

1622. c) D C S′ $P_{1-3}$ $I_3$ SA आक्रम्यासौ (for आक्रम्योऽसौ suggested with St). SA (before corr) S′ न (for न) —d) C $P_3$ विचिन्तयन्, S′ विचिन्तयत् (for त्वचिन्तयत्).

1624. a) $P_{1,2}$ $I_3$ S′ SA धान्य° (for धन्य°).

1625. a) C S′ $P_{1,2}$ $I_3$ SA हिता° (for हृता° suggested with St).

1628 cd) $P_1$ om after प्रतीहा

1629. a) $P_1$ om निग्राहनुग्र —c) C S′ SR °कोथ, D $P_{1-3}$ $I_3$ SA °कोष (for °को म suggested with St)

1630 a) St. Tr suggests लाक्ष्मको (for लक्ष्मको).

प्रतीहारविसृष्टाय धात्रेयाय महीभुजः ।
प्रेमाभिधाय तत्कोट्टाधीकारं च समार्पयत् ॥१६३१॥

उत्खाय लोहरत्यागाच्छङ्काशङ्कुं महीपतेः ।
स ग्रीष्मविषमं कालं राजपुर्यामलङ्घयत् ॥१६३२॥

अमात्यकन्दुकव्रातपातनोत्पातनक्षमः ।
आयत्तडामरः प्राप प्रथां कामपि लक्ष्मक ॥१६३३॥

द्वारेऽथाऽकारयत् सुज्जिप्रतिमल्लविधित्सया ।
कृष्यमाणो राजवंशपौरुषं राजमङ्गलम् ॥१६३४॥

अनन्यदेशजः सुज्जे शूरो मत्कोशपोषितः ।
कीर्तिमेष हरेद्द्ध्याविर्तीर्ष्याकलुषो हि सः ॥१६३५॥

खड्गग्राहिसहायः स क्षुण्ण पर्यटितुं पथि ।
निस्सुखश्चोपहास्यश्च तेन कार्यार्पणात् कृतः ॥१६३६॥

कर्तुं पदव्यां योग्यानामयोग्यान् प्रभवेन्न कः ।
तेषां गुणैस्तान् संयोक्तु न शक्यं कारणैरपि ॥१६३७॥

पदे श्रीखण्डस्याऽनुचितमुचिते वर्ष्मणि निजे
वृषाङ्कः प्रक्षेप्तुं प्रभवति चिताभस्म रभसात् ।
न तत्स्वेच्छायत्तत्रिजगदुदयापायघटनोऽ-
प्यसौ तद्गन्धेन स्फुटमिह पटुः सङ्घटयितुम् ॥१६३८॥

---

1631. [b]) C S′ धात्री° (for धात्रे°) —[d]) $P_{2,3}$ SA सम° (for समा°).
1632. [d]) C राजा (for राज°).
1633. [b]) $P_3$ $I_3$ $SA_2$ °नोत्थापन°; $P_1$ °नोर्थापन° (for °नोत्पातन°).
1635 [a]) D C S′ $P_{1,3}$ $I_3$ $SA_3$ सुज्जि (for सुज्जे). —[b]) $SA_1$ मत्केश° (for मत्कोश°). —[cd]) $SA_1$ स्पर्धामेष वहे · विती° (for कीर्तिमेष हरेद्द्ध्याविती°)
1637. [b]) C S′ $P_{2,3}$ $I_3$ °ग्यात् (°ग्यान्)
1638. [d]) $SA_1$ om पटु with a space.

तस्मिन् सुज्जिप्रतिस्पर्धामप्रौढे वोढुमक्षमे ।
दूतानसृजदानेतुं सज्जपालं दिगन्तरात् ॥१६३९॥

निर्वीरे मण्डले द्वेष्योऽप्यवापत्कार्यगौरवात् ।
कोष्ठेश्वरो नरपतेर्नितरामन्तरङ्गताम् ॥१६४०॥

प्रीतिदायैस्तोष्यमाणस्तैस्तैस्तुष्टेन भूभुजा ।
विस्रब्धो नगरे तस्थौ सोऽपि लूतामयातुरः ॥१६४१॥

एवं दमकदम्बैक्यं राज्ञि कुर्वति कार्यतः ।
चालकैः सोमपालाद्यैः सुज्जिर्निन्येऽथ वैकृतम् ॥१६४२॥

प्रतिज्ञाय लतामात्रसाध्यं कश्मीरनिर्जयम् ।
सोमपालाय तद्राज्यं सोऽङ्गीचक्रेऽवमानितः ॥१६४३॥

प्रतिशुश्राव तस्मै च भागिनेयीं स कन्यकाम् ।
धीमानत्राऽन्तरे सामदाने प्रयुयुजे नृपः ॥१६४४॥

द्वौ तावल्पाशयौ राजकन्ययोः स्वीक्रियां तदा ।
रभसाद् यावकुर्वाणावदत्तामन्तर द्विषाम् ॥१६४५॥

उपायैर्जयसिंहस्य शकुनैश्च निरीक्षितैः ।
प्रेरित सोमपालोऽथ सुज्जेर्मन्दादरोऽभवत् ॥१६४६॥

स्वयमेत्य प्रतीहारस्तत्र राजपुरीपतिम् ।
सीमान्तर्भुवमानिन्ये कन्यकोद्वाहसिद्धये ॥१६४७॥

जातां कल्हनिकाख्यायां महादेव्यां महीपतेः ।
उपयेमे नृपसुतां सोमोऽम्बापुत्रिकाभिधाम् ॥१६४८॥

---

1639 b) C S′ °प्रौढा (for °प्रौढे)
1642. c) $I_3$ °पालाद्य ; $P_3$ °पालान्यै· (for °पालाद्यै.).
1643. cd) $P_1$ om. after सोमपालाय.
1644. a) $P_1$ om. प्रतिशुश्राव
1647. c) D C S′ $P_{1-3}$ $I_3$ °न्तुभुव° (for °न्तर्भुव°).
1648. a) C S′ $P_1$ $I_3$ कल्प° (for कल्ह°)

याते तस्मिन् कृतोद्वाहे नागलेखाभिधां सुधीः ।
तत्स्वस्रेयीं प्रतीहारो भूभुजे प्रत्यपादयत् ॥१६४९॥

इत्थं राष्ट्रद्वये बद्धसन्धौ निरवकाशताम् ।
प्राप्तः प्रतस्थे हेमन्ते सुजिस्त्रिपथगोन्मुखः ॥१६५०॥

जालन्धरे संघटितो ज्येष्ठपालो निनाय तम् ।
गाढावमाननिर्नष्टसौष्ठवं भिक्षुपक्षताम् ॥१६५१॥

त्वयि भिक्षाचरे चैकसैन्यनायकतां गते ।
नोपेन्द्रो वा महेन्द्रो वा समर्थौ प्रत्यवस्थितौ ॥१६५२॥

राज्यप्रदस्य ते यश्च चक्रे राजा विमाननाम् ।
तस्थुषो यश्च विषये प्रतिकुर्मस्तयोर्द्वयोः ॥१६५३॥

इति संप्रेरितस्तेन देङ्गपालान्तिकस्थितेः ।
यियासुः सोऽन्तिकं भिक्षोर्भागिकेन न्यषिध्यत ॥१६५४॥

अनिक्षिप्तवतोऽस्थीनि स्वामिनो जाह्नवीजले ।
न युक्तमेतत् ते कृत्यमित्यावेगादशासि च ॥१६५५॥

ज्ञात्वा पुनर्यामेष्यामि पार्श्वं व इति निश्चयम् ।
स पीतकोशः कृत्वाऽस्य ययौ प्रस्तुतसिद्धये ॥१६५६॥

प्रतीहारकरन्यस्तसर्वभारस्तु भूपतिः ।
मन्दाक्रान्तितया राज्यमसुस्थितममन्यत ॥१६५७॥

---

1649. a) C S' जाते ( for याते ) —c) $I_3$ SA °स्वस्रेयी ( for °स्वस्रेयीं).

1655. d) D $P_{1-3}$ $I_3$ SA °शाधि (for °शासि).

यो यो हि व्यग्रहीत् तं तं संधाय सविधस्थितः ।
तमन्वहं प्रतीहारः सानुग्रहमिवैक्षत ॥१६५८॥

प्रगल्भमाने शास्त्येवमुदयः कम्पनापतिः ।
अवधीच्छद्मना दृप्तं प्रकटं कालियात्मजम् ॥१६५९॥

अविश्वासोल्बणान् सर्वलावन्यानथ लक्ष्मकः ।
निर्मर्यादान् कम्पनेशमीषत्सान्त्वमजिग्रहत् ॥१६६०॥

स्नात्वाऽभ्येष्यति गङ्गाया यावत् सुज्जिर्विसूत्रताम् ।
यावत् कथं मया नेयाः कश्मीरा इति चिन्तयन् ॥१६६१॥

तावन्मात्रान्तरव्याप्त्या राज्ञो विज्ञाय डामरान् ।
भिन्नान् भिक्षाचरोऽविक्षद् विषलाटा हिमागमे ॥१६६२॥

मण्डलस्याऽन्तरे तस्य विविक्षो रुद्धडामरः ।
प्रतीहारो हिमर्तुश्च निषेद्धा समपद्यत ॥१६६३॥

स टिक्केन पितृद्रोहादेकान्तद्वेषिणा रिपोः ।
आनीतः संमतैर्दत्ताप्यायः सर्वैश्च डामरैः ॥१६६४॥

प्रतीक्षमाणो राज्याप्तिहेतुं सुज्जिसमागमम् ।
निर्भयष्टिक्कजामातुर्भागिकस्य खशप्रभोः ॥१६६५॥

बाणशालाभिधे दुर्गे वसन्नल्पोच्छ्रितावपि ।
दूतैर्विभेदमनयत् सर्वडामरमण्डलम् ॥१६६६॥

प्रमोदं सुहृदां त्रासं द्विषां च विसृजन् पुरः ।
व्यावर्तताऽथ गङ्गाया. सुज्जिर्विहितमज्जनः ॥१६६७॥

---

1659. a) St suggests शास्त्यैव° (for शास्त्येव° found in all Mss.).

1661. b) S′ $P_{1-3}$ यावत् (for तावत्). —d) C S′ काश्मीर; $P_1$ कश्मीर (for कश्मीरा) C S′ °येत् (for °यन्)

1663 c) C S′ $P_1$ $I_3$ हि मन्तु° (for हिमर्तु°)

पूर्वविप्रकृते भिक्षावस्मिंश्चाऽभेदमागते ।
यथाऽमुष्य महीभर्तुस्तथाऽस्माकं भयं भवेत् ॥१६६८॥

ध्यात्वेति सिंहदेवेन प्रार्थितो व्याजमाददे ।
सुज्जिस्वीकरणोद्योगे सोमपालो भयाकुलः ॥१६६९॥

सुज्जिर्जालन्धर प्राप्तः प्रातर्भिक्षाचरान्तिकम् ।
यावद्यास्यति तं सायं तद्दूतस्तावदासदत् ॥१६७०॥

प्रेरितो ज्येष्ठपालेन निषिद्धो भागिकेन च ।
विरराम स तस्योक्त्या विपक्षाश्रयणग्रहात् ॥१६७१॥

ऋणं देशान्तरोपात्तं तव भूपोऽपनेष्यति ।
स्वं च दास्यत्यधीकारं मन्मुखप्रहितार्थनः ॥१६७२॥

इति दूतमुखेनोक्तः सोमपालेन चाऽन्वहम् ।
विपक्षौत्सुक्यमुत्सार्य तद्देशाभिमुखो ययौ ॥१६७३॥

उदयः कम्पनाधीशो वैशाखे तीर्णसंकटः ।
खशान्वितेन संग्रामं प्रत्यपद्यत भिक्षुणा ॥१६७४॥

प्राक्तस्थुष्यल्पपृतने जाते पृथुबले ततः ।
तस्मिन् कोट्टान्तरं भिक्षु प्राविशत् प्राप्तवेष्टनः ॥१६७५॥

राजाऽथ विजयक्षेत्रं निर्यातः प्रत्यपूरयत् ।
कम्पनेशस्य कटकं तास्ताः संप्रेषयंश्चमूः ॥१६७६॥

यन्त्रोपलशरासारविविधायुधवर्षिणी ।
दुर्गस्थितैर्नृपचमूः प्रत्ययोध्यश्मवर्षिभिः ॥१६७७॥

---

1669. b) St C S′ P2 I3 °दधे (for °ददे).

1676. d) C S′ P2 SA सप्रैषयच्चमू ; P1,3 I3 सप्रैषयञ्चमू (for सप्रेषयश्चमू°).

1677. d) C S′ प्रतियो° (for प्रत्ययो°).

पतत्स्वश्मसु भिक्षोश्च नामलक्ष्मसु पत्रिषु ।
ग्रहीतुं दुर्गगान् राजसेना दीर्घाऽपि नाऽशकत् ॥१६७८॥

दिनैरभ्यधिके मासमात्रे यातेऽग्रहीत् ततः ।
विदार्य मूलं दुर्गस्य धन्य खाताम्बु संभृतम् ॥१६७९॥

दुर्गभाजो बलासाध्या राज्ञ्युपायपरे धियम् ।
जाततद्वैरिबाधेच्छा धनलुब्धामदर्शयन् ॥१६८०॥

विससर्ज प्रतीहारमथ तद्वस्तुसिद्धये ।
राजा डामरसामन्तमन्त्रिराजात्मजैः समम् ॥१६८१॥

कोष्ठेश्वरत्रिल्लकाद्याः कृच्छ्रस्थस्य विमोक्षणम् ।
करिष्यामो वयं भिक्षोरिति बुद्ध्या तमन्वयुः ॥१६८२॥

पश्यन् संकटशैलाग्रादधः कोट्टं मितोन्नति ।
जितं मेने प्रतीहारो वीक्ष्याऽनन्ताः स्ववाहिनीः ॥१६८३॥

पूर्वस्थितैः प्रतीहारानुगैश्चाऽन्यत्र वासरे ।
अयोधि सर्वसैन्यस्य बलात् कोट्टं जिघृक्षुभिः ॥१६८४॥

ते तावन्तोऽप्यश्मवृष्ट्या तथा तैः प्रतिचक्रिरे ।
नास्तीदं विक्रमेणेति यथाऽगृह्णन् विनिश्चयम् ॥१६८५॥

---

1678. b) C पात्ति° (for पत्रि°) —c) All Mss read दुर्गजान् (for दुर्गगान् suggested).

1679. c) C विहार्य [sic] (for विदार्य). —d) C S′ धान्य°, SA धान्य.; SL धा ·; $P_{1,3}$ धान्या, $P_2$ धान्या·, D suggests धान्यं (for धन्य: suggested with St, cf. VIII. 1624).

1680. a) C S′ $P_1$ °ऽबलासख्या (for बलासाध्या). —c) C °धेच्छा (for °धेच्छा).

1681 c) C S′ $P_{1,2}$ $I_3$ SA राज्ञा (for राजा).

1682 b) $SA_1$ कृच्छ्रात्तस्य; $P_{2,3}$ कृच्छ्रास्थस्य (for कृच्छ्रस्थस्य).

वीरदेहद्रुमाग्रेभ्यो न्यपतन्नश्मभिर्हताः ।
निर्यदस्रौघसरघाः शीर्षभ्रमरगोलकाः ॥१६८६॥

कोष्ठेश्वरस्य मूढत्वं निर्व्यूढं तत्र किंचन ।
स्वस्य भिक्षोर्लवन्यानामन्येषां च विनाशकृत् ॥१६८७॥

नास्त्यत्र मत्समो वीर इत्येतावत्प्रसिद्धये ।
स ह्ययुद्धोद्धतं भिक्षोर्यत्प्राणक्षयकार्यभूत् ॥१६८८॥

दुभ्रुक्षूणां खशाना स संकटे धैर्यमादधे ।
कोष्ठेश्वरोऽस्मि चाऽभिन्नौ तद्वश्या डामराः परे ॥१६८९॥

यदेतद् दृश्यते भूरि सैन्यमस्मद्धिताय तत् ।
पर्यवस्येदिति वदन् समभाव्यन्यथा च तत् ॥१६९०॥

विस्रम्भभूरमुष्यारिर्यत्र कोष्ठेश्वरोऽप्यसौ ।
अन्येषु तत्र कैवास्थेत्यथ ते निश्चयं दधुः ॥१६९१॥

भूभृत् पितृद्रुहः कार्यवशेन स्वोपवेशने ।
अङ्गीकृताधिकारस्तु धीमांष्टिक्कस्य लक्ष्मक ॥१६९२॥

खशाधीशं महाग्रामस्वर्णादित्यागसंश्रयात् ।
स्वीकृत्य भिक्षुदुभ्रुक्षाबद्धकक्ष्यमकारयत् ॥१६९३॥

आनन्दाख्यः खशाधीशस्यालः कृतगतागतः ।
नीत्वा टिक्कं प्रतीहाराभ्यर्णं भूयोऽप्यरोपयत् ॥१६९४॥

---

1686. b) $P_3$ °श्मसन्निभा (for °श्मभिर्हता).

1688. c) C °द्धते (for °द्धत)

1689. a) D च (for स). —c) C °भिन्न (for °भिन्नौ).

1693 a) C यशा° (for खशा°). —c) D (before suggestion) C S′ $P_{1-3}$ $I_3$ SA °दुभ्रुक्षु° (for °दुभ्रुक्षा° suggested with St D).

प्रतीहारस्य टिक्केन सहैक्यं वीक्ष्य डामरैः ।
निस्संशयं हतोऽज्ञायि भिक्षु कोष्ठेश्वरादिभिः ॥१६९५॥

संरब्धास्तद्विमोक्षाय प्राहिण्वंस्ते खशान्तिकम् ।
दूतानूरीकृतस्वर्णदाना भूरिधनैः समम् ॥१६९६॥

खशास्तु दध्यावुत्कोचं गृहीत्वाऽस्माभिरुज्झितः ।
जानाति रक्षितान् प्राणान् भिक्षु कोष्ठेश्वरादिभिः ॥१६९७॥

समन्युः प्राप्तराज्योऽथ देङ्गपालोऽथ दुरगः ।
हन्यान्मां जयसिंहस्तद्रक्ष्यः पक्ष्यः प्रयत्नतः ॥१६९८॥

मत्वेति तेन प्रत्युक्ता भिक्षुं शौचस्थितं गृहात् ।
विपाट्याऽन्तः फलहकं निर्गच्छेत्यूचिरेऽपि ते ॥१६९९॥

स त्वमेध्योपलिप्ताङ्गः श्वेवाऽवस्करवर्त्मना ।
यात इत्ययशो लोके ध्यायन्मानी न निर्ययौ ॥१७००॥

कोष्ठेश्वरोऽव्यक्तकृत्यः सैन्यक्षोभेच्छया क्षिपन् ।
रूक्षं कालविदा प्राह्णे प्रतीहारेण सान्त्वितः ॥१७०१॥

नीवौ खशाद्यैर्दत्तायामाप्रत्यूषादगृह्यत ।
व्यवसायः प्रतीहारमुख्यैर्भिक्षुप्रमापणे ॥१७०२॥

---

1695. c) C हृतो° (for हतो°)

1697. a) C $I_3$ SA दद्यादु° (for दध्यावु°).

1698. d) D C S′ $P_1$ पक्ष (for पक्ष्य)

1699. b) C $P_{2,3}$ SA भिक्षुशौ° (for भिक्षु शौ°) —c) St C S′ $P_{1-3}$ $I_3$ विपाट्यात (for विपाट्याऽन्त)

1701 b) St °च्छयाक्षिपन् (for °च्छया क्षिपन्). —c) C S′ $I_3$ प्राक्णोत् (for प्राह्णे).

गच्छद्भिरानयद्भिश्च राजा दूतैः प्रतिक्षणम् ।
अन्विष्यन् विजयक्षेत्रे वार्ता पर्याकुलोऽभवत् ॥१७०३॥

तावद्भिराहवैस्तैस्तैः साहसे दश वत्सरान् ।
कृतयत्नस्य साध्योऽभून्न यो वृद्धमहीभुजः ॥१७०४॥

डिम्बो राजानुगा डिम्बास्तस्य भिक्षो प्रमापणम् ।
साध्यमेते हि मन्यन्ते हन्त किं केन संगतम् ॥१७०५॥

विहस्य नीयते वित्तं खशैरेत्य क्षणादमी ।
भग्ना नूनं प्रयास्यन्ति मुषिताश्चाऽखिलाः परैः ॥१७०६॥

पृथग्भूतः कोष्ठकोऽयं त्रिल्लकोऽस्यैव बान्धवः ।
एते भिक्षाचरोच्छिष्टपुष्टा आभ्यन्तरा अपि ॥१७०७॥

को नूतनोऽत्र संप्राप्तो यो राज्ञः साधयेद्धितम् ।
सामग्री नूनमायाता सेयमस्यैव सिद्धये ॥१७०८॥

इत्यूचुः शिबिरे यावज्जनास्तावदवेष्टयत ।
कटकैर्मन्त्रिणां दुर्गं विकोशायुधवाहिभिः ॥१७०९॥

एकाकी चिरसंक्लिष्टो हन्तव्यस्तत्कृतोऽखिलैः ।
हा धिक् परिकरो बद्धो निर्लज्जैः सर्वशस्त्रिभिः ॥१७१०॥

त एवेत्यूचुरासीच्च कचच्छस्त्रोर्मिनिर्मलः ।
स्फुरद्योधाक्षिशफरो निश्शब्दः सैन्यसागरः ॥१७११॥

---

1703. a) All Mss read °रागच्छद्भि° (for °रानयद्भि° suggested)

1704. c) C S′ $P_{1-3}$ $I_3$ SA °यन्त्रस्य (for °यत्नस्य)

1707. b) D C S′ $P_{1-3}$ त्रिल्लकस्यैव (for त्रिल्लकोऽस्यैव) $P_2$ बाधवा (for बान्धव)

1710. a) $P_1$ °लिष्टो (for °क्लिष्टो). —c) $P_{1,2}$ परिकरे (for परिकरो).

व्योम्नोड्डीयेत वा सैन्यं लङ्घयेद् वा मृगप्लुतैः ।
दुष्टाभ्रवृष्टिरिव वा निखिलांस्ताडयेत् समम् ॥१७१२॥

साश्चर्यशौर्यः पर्यन्ते स्वीकुर्वन् भिक्षुरायुधम् ।
संभ्रान्तश्चकितश्चाऽऽसीदित्यन्तश्चिन्तयञ्जनः ॥१७१३॥

एतावन्मन्त्रिणां सिद्धमथ प्रत्यूहसंभवः ।
तच्छान्तिः कार्यसिद्धिश्च प्रतापैर्नृपतेरभूत् ॥१७१४॥

सैन्ये भिक्षाचरापातं पश्यत्यूर्ध्वार्पितेक्षणे ।
कोट्टान्निष्कृष्टशस्त्रीकः पुमानेको विनिर्ययौ ॥१७१५॥

रुदतीभिः परीतस्य नारीभिस्तस्य चिक्षिपुः ।
पृष्ठे केऽपि वपुर्लोलकौसुम्भाधरवाससः ॥१७१६॥

बद्धः पलायमानोऽत्र सोऽयं भिक्षुरिति ब्रुवन् ।
उन्मुखः स जनोऽश्रौषीट्टिक्कं तमथ निर्गतम् ॥१७१७॥

स हि भिक्षो कृतद्रोहः तुमुले प्रस्तुते वधम् ।
तस्माद् राजानुगेभ्यो वा स्वस्याऽऽशङ्क्य विनिर्ययौ ॥१७१८॥

अद्रोहोऽस्मीति लोकस्य प्रत्ययाय चकर्ष च ।
कृपाणीमुदरं हन्तुं रक्ष्यमाणो निजानुगैः ॥१७१९॥

सानुगस्त्यक्तमार्गां स विलङ्घ्य नृपवाहिनीम् ।
अद्रिप्रस्रवणोपान्ते नातिदूरेऽभ्युपाविशत् ॥१७२०॥

---

1712. b) St $P_{1-3}$ $I_3$ °प्लुतेः, C S′ °प्लुते (for °प्लुतै ).

1715. a) C S′ °रायात (for °रापात).

1717. c) C S′ तन्मुखात् (for उन्मुख ).

1718. a) C S′ $P_2$ $I_3$ SA सह (for स हि ) All Mss. read °द्रोह° (for °द्रोह suggested with St). —b) All Mss. read प्रस्तुतो (for प्रस्तुते suggested with St)

उच्छ्वसंश्चिरसंप्राप्तैरम्भोभिर्दुर्गनिर्गतः ।
मायां प्रयोक्तुं प्रारेभे प्रेरितः सोऽन्यडामरैः ॥१७२१॥

संजातं लम्बमानार्कमहस्तद्रक्ष्यतां क्षणम् ।
भिक्षु॰ क्षपायामास्कन्दमपनेष्यन्ति डामराः ॥१७२२॥

इति तद्वाचिकात् तीक्ष्णान्नीविभिर्मन्त्रिणां समम् ।
खशैस्त्यजद्भिर्दृषदो न्यरुध्यन्तारुरुक्षवः ॥१७२३॥

ततः किलकिलारावमुखरैः करतालिकाः ।
योधैर्ददद्भिः सचिवा व्यगृह्यन्ताऽऽकुलाशयाः ॥१७२४॥

मुक्ताः स्वामिद्रुहः कृच्छ्रगता राज्यं प्रसाधितुम् ।
द्विषतो मन्त्रिभिः स्वार्थौ दत्त्वाऽर्थान् को नु साधितः ॥१७२५॥

राजकार्ये च भानौ च लम्बमानेऽथ लक्ष्मक॰ ।
किमेतदिति तं नीविं खशस्यालमभाषत ॥१७२६॥

सोऽभ्यधात् कुम्भदास्याऽपि रोद्धुं शक्यं चिकीर्षितम् ।
खशाना प्रत्यवस्थाता कथं तत्राऽस्म्यसंनिधिः ॥१७२७॥

स हन्तुं वैपरीत्यं तं खशाना त्वं व्रजेत्यथ ।
उक्त्वा व्यसृजदानन्दं जहसे चाऽन्यमन्त्रिभिः ॥१७२८॥

सुदूरदर्शिना राज्ञा विषलाटाध्वपाततः ।
देङ्गपालगृहाद्स्मादारम्भः समभाव्यत ॥१७२९॥

---

1721 d) C सैन्य॰, $P_3$ पौर॰ (for सोऽन्य॰).

1723 ab) St $I_3$ तीक्ष्णा नी॰ (for तीक्ष्णान्नी॰) —d) SA $P_{2,3}$ $I_3$ न्यरुधन्ता॰ (for न्यरुध्यन्ता॰).

1725. c) C S′ $P_{1-3}$ $I_3$ SA स्वार्था (for स्वार्थौ).

1727 d) D C S′ $P_1$ तत्रास्य॰ (for तत्राऽस्म्य॰).

1728. a) SL हर्तुं (for हन्तु).

1729. c) D St $P_{1-3}$ $I_3$ $SA_1$ om, St suggests ॰भ्यर्णा॰ (for ॰दस्मा॰ found in C S′)

अतः प्रधानकोट्टेशस्यालः स समगृह्यत ।
प्रागेवाऽर्थैरेतदर्थं ग्रथ्नता दीर्घवागुराम् ॥१७३०॥

संक्षोभावसरे क्षत्ता ततो निस्संभ्रमोऽभवत् ।
शिक्षितं पक्षिणमिव त्यक्तं प्राप्यं विवेद तम् ॥१७३१॥

स तानूचे न हास्यं मे नष्टे कार्येऽत्र साहसम् ।
सर्वनाशो हतेऽमुष्मिन् खशस्यालेऽपि किं भवेत् ॥१७३२॥

अकुण्ठया भाग्यशक्त्या राज्ञः स्यालः खशस्य सः ।
सर्वान् नियन्त्र्य दुर्गाग्रात् तीक्ष्णादीनाजुहाव तान् ॥१७३३॥

दस्यूनामसवः कण्ठे संदेहं मन्त्रिणां धियः ।
स्वःस्त्रीणां प्रीतयः काष्ठां तीक्ष्णाश्चाऽऽरुरुहुर्गिरिम् ॥१७३४॥

स चर्मकौपीनपटीबन्धस्तत्स्वाभिधाङ्कितैः ।
इषुभिः स्वामिवत्स्वस्य ख्यापनं सर्वतो युधि ॥१७३५॥

स ताम्बूलाधरः सक्तिः सा केशश्मश्रुयोजने ।
याऽभूदनुमुमूर्षूणां भिक्षुराजोपजीविनाम् ॥१७३६॥

निश्चितान्ते ततस्तस्मिन् स तेषामन्ववर्तत ।
कोष्ठेश्वरादिशिबिरं तूर्णं शरणमीयुषाम् ॥१७३७॥

एकैकशो लक्ष्मकेण युक्त्या स्वैः प्रेरितैर्भटैः ।
टिक्क स्वं वीक्ष्य वलितं निचकर्ताङ्गुलिं भयात् ॥१७३८॥

---

1730 b) St $P_{1-3}$ $I_3$ समम° ( for स सम°)

1733 c) C S′ °ग्रान् (for °ग्रात्).

1734. b) $P_3$ सन्देहे (for सदेह). —c) D C S′ $P_{1-3}$ $I_3$ स्वस्त्री° (for स्वःस्त्री°).

1735 b) D (before suggestion) °बद्ध° (for °बन्ध°).

1736. a) D °लादर ( for °लाधर ). —d) $P_2$ $I_3$ SA °राज्ञोप° (for °राजोप° )

1737. b) St सन्य°, $P_2$ $I_3$ SA सन्य° ( for °मन्व°). After this *v.* तिलकम्.

खशैरस्मिन्नवसरे स पलायनशङ्किभिः ।
रक्ष्यमाणस्तेष्वहस्सु मनस्तापादभुक्तवान् ॥१७३९॥

वीरस्ताम्यन्विलम्बेन तीक्ष्णानामाहवोत्सुकः ।
तस्थौ भिक्षाचर स्वान्तमक्षवत्या विनोदयन् ॥१७४०॥

हर्म्यप्राङ्गनमायाते तीक्ष्णलोके युयुत्सया ।
उत्तिष्ठता तेन दायः स्तोकशेषः समाप्यत ॥१७४१॥

दीव्यतः कान्तया सार्कं कामिनः सुहृदागमे ।
प्रत्युत्थास्नोरिव क्षोभो नाऽन्तस्तस्य व्यजृम्भत ॥१७४२॥

किमद्यापि वधेन स्याद् बहूनामिति चिन्तयन् ।
स विहाय शरावापं सासिधेनुर्विनिर्ययौ ॥१७४३॥

सुदीर्घचिन्तागलितायामश्यामलिभिः कचैः ।
चञ्चच्चित्रपताकाङ्कमिव वीरपटाञ्चलैः ॥१७४४॥

गण्डताण्डविताच्छिद्रशङ्खताडङ्करोचिषा ।
चन्दनोल्लेखकान्त्या च द्योतिताहंक्रियास्मितम् ॥१७४५॥

वितीर्णं चित्रचार्यन्ते विपर्यस्ताङ्घ्रिताडनम् ।
द्योतयन्तमिवालातैः स्वःस्त्रीनेत्राधरांशुकैः ॥१७४६॥

कौसुम्भाधरवासोऽग्रबद्धधौताधराञ्चलैः ।
लोलैर्वीरहरिं बद्धसटाटोपमिवांसयोः ॥१७४७॥

---

1742 a) $P_{1-3}$ $I_3$ SA दाव्यन्त (for दीव्यतः).

1743. c) C S′ शर चाप ( for शरावाप).

1744. a) C S′ $P_2$ स्वदी° ( for सुदी° )

1746. d) D St $P_{1-3}$ $I_3$ शस्त्री°, C S′ स्वस्त्री° (for स्व स्त्री°).

1747. b) C S′ °म्बरा° (for °धरा°).

दृङ्मनःपाणिपादैक्यचारुप्रचुरचारिभिः ।
चरन्तं मण्डलैश्चित्रैर्लघुचित्रस्थिरक्रमैः ॥१७४८॥

औचित्यस्योचितां चर्यामलंकारमहंकृतेः ।
अभिमानविभूतीनां नित्योत्सेकमनत्ययम् ॥१७४९॥

अलक्षितक्षिप्रपातं स सर्वोऽप्युन्मुखो जनः ।
विचरन्तं तमैक्षिष्ट भिक्षुमग्रे विरोधिनाम् ॥१७५०॥

राजबीजी मधोर्नप्ता तं प्रवीरः कुमारियः ।
भ्राताऽपि ज्येष्ठपालस्य निर्यातो रक्तिकोऽन्वगात् ॥१७५१॥

हर्म्यैर्निम्नोन्नतैस्तैस्तैर्विशतः परिपन्थिनः ।
रुरोधैकः शरासारैर्गार्गिको भिक्षुसंश्रितः ॥१७५२॥

ते धावन्तो व्यभाव्यन्त शरैस्तच्चापनिर्गतैः ।
वर्षोपलैः पुरोवातप्रेरितैरिव दन्तिनः ॥१७५३॥

स रोद्धा प्रतियोधानां पापैः क्षिप्ताश्मभिः खशैः ।
क्षताङ्गो भग्नचापश्च चिरेण विमुखीकृतः ॥१७५४॥

तस्मिन् प्रचलिते मार्गैः प्रविश्योच्चावचैर्भटाः ।
ते च भिक्षाचरादीनां सर्वे गोचरमाययुः ॥१७५५॥

भिक्षोरेकं क्षणालक्ष्यधैर्यं पार्श्वधृतायुधम् ।
अधावत् तूर्णमादाय शूलमेको बृहद्भटः ॥१७५६॥

---

1748 b) C S′ $P_{2,3}$ °वारिभि (for °चारिभि)

1750 a) C °यात ( for °पात)

1753 a) C S′ $P_{1,2}$ $I_3$ SA न्यभा° (for व्यभा°).

तस्य प्रहरतः शूलं भिक्षुराश्रितवत्सलः ।
क्षिप्त्वाऽपहस्तेनाऽऽवेगात् केशाग्रग्राह धावितः ॥१७५७॥

प्रजहार कृपाण्या च निर्यत्प्राणे पतिष्यति ।
तस्मिन् प्राहरतां भूयस्तौ कुमारियरक्तिकौ ॥१७५८॥

निर्विभागैर्हते तस्मिन् विविधायुधवाहिभिः ।
विरोधियोधैः संनद्धैस्त्रयो युयुधिरेऽथ ते ॥१७५९॥

अजायन्त विविक्ताश्च शस्त्रसंत्रासिताहिताः ।
कोटराजगरापास्तसरघौघा इव द्रुमाः ॥१७६०॥

अशक्नुवन्तस्तान् हन्तुं खड्गशूलादिभिर्द्विषः ।
अपसृत्य शरासारैस्ततो दूरादवाकिरन् ॥१७६१॥

भिक्षाचरमृगेन्द्रस्य भञ्जतः शरपञ्जरान् ।
ततो हर्म्यात् खशैर्मुक्ताः पुष्टाः पाषाणवृष्टयः ॥१७६२॥

धावतस्तस्य घोराश्मवृष्टिकुण्ठितवर्ष्मणः ।
निममज्ज यकृत्पिण्डं भञ्जन् पार्श्वे शिलीमुखः ॥१७६३॥

क्रान्त्वा त्रीणि पदान्याशु स पपात दिशन् क्षितेः ।
ततश्चिरप्ररूढं तु कम्पं विद्विषतां हरन् ॥१७६४॥

कुमारियोऽपि बाणेन विद्धवङ्क्षणवर्त्मना ।
व्रणितोऽप्यपतद् भर्तुः पादोपान्तेऽपजीवितः ॥१७६५॥

---

1757. c) C S′ क्षिप्रा° (for क्षिप्त्वा°)

1758. c) D प्रहरतो, C S′ $P_{1-3}$ $I_3$ SA प्रहरता (for प्राहरता suggested with St).

1760. cd) $P_1$ om.

1763. b) St C $P_{1,2}$ $I_3$ °कुट्टिता° (for °कुण्ठित°).

1765. d) All Mss. read °पान्तौ° (for °पान्ते° suggested with St).

रक्तिकस्तु शरेणैव विद्धो मर्मणि विह्वलः।
सजीवितोऽपि निर्जीव इव भूमावुपाविशत् ॥१७६६॥

महाकुलीनैः सहितो हतो भिक्षुरशोभत।
वज्रावभुग्नः शिखरी पुष्पितैरिव पादपैः ॥१७६७॥

इयतो राजचक्रस्य मध्ये हर्षनृपात्परम्।
नाऽवमानस्य मानस्य त्वभूद् भिक्षो· परं पदम् ॥१७६८॥

विधाता नित्यविधुरस्तेनान्तेऽप्यपमानितः।
अकुण्ठेन ध्रुवं चक्रे गृहीतात्मपराजयः ॥१७६९॥

को वराको महर्द्धीनां सोऽग्रे पूर्वमहीभृताम्।
उदात्तेन तु कृत्येन ते त्वस्याऽग्रे न किंचन ॥१७७०॥

आहोपुरुषिकाग्रस्तैरारोहद्भिर्द्विषद्भटैः ।
तदवस्थस्तदार्तोऽपि शस्त्र्यायुद्ध कुमारिय· ॥१७७१॥

स्फुरन् योद्धव्यमित्येव स प्रहारावशस्तथा।
विज्ञाततत्त्वैररिभिर्वितत्य बहुशो हतः ॥१७७२॥

विपन्नेऽस्मिन्नलं मूढाः प्रहारैरतिनिन्दिताः।
खशैः प्रजह्रुर्बहुशो हते भिक्षौ द्विषद्भटाः ॥१७७३॥

अविधेयायुधस्तीव्रव्रणवेदनयाऽधमैः ।
कैश्चिन्निर्जीवितप्रायो रक्तिकः शस्त्रिभिर्हतः ॥१७७४॥

---

1766 a) $P_1$ $I_3$ SA भक्ति° (for रक्ति°).

1768 b) C °त्मज, D (before suggestion) St S′ $P_{1-3}$ $I_3$ SA °त्मन°; D suggests °पात्परः ( for °पात्परम् suggested) —d) St fn. suggests भिक्षु ( for भिक्षो )

1769. b) D C S′ °स्तेजोधैर्याभिमा° (for °स्तेनान्तेऽप्यपमा°).

1770. a) C S′ वर. (for वरा°). —c) D (before suggestion) SR C S′ $P_{1-3}$ °नात्त°; St SA °नान्त° (for °न तु found in $I_3$)

1771. a) St $P_2$ अहो° (for आहो°). —c) D C S′ $P_{1-3}$ $I_3$ °स्तदात्तो° (for °स्तदार्तो°).

1773. b) All Mss read °रिति नि° (for °रतिनि° suggested with D)

वयसस्त्रिंशतिं वर्षांन्नव मासांश्च भुक्तवान्
स षष्ठाब्दासितज्यैष्ठदशम्यां नृपतिर्हतः ॥१७७५॥

निदानं विप्लवे दीर्घे सर्वनाशेऽपि कारणम् ।
येषां बभूव तेऽप्येवं तुष्टुवुः सत्त्वविस्मिताः ॥१७७६॥

नेत्रस्पन्दं भ्रुवोः कम्पं स्मेरास्यत्वं च नाऽमुचत् ।
सजीवमिव तन्मुण्डं कियतीरपि नालिकाः ॥१७७७॥

एकं व्योम्न्यविशच्चित्रभानुं भूमौ पुनः परम् ।
तद्देहमप्सरस्सङ्गं धराम्बु च विदज्जडम् ॥१७७८॥

सचिवा विजयक्षेत्रस्थितस्याऽग्रे महीपतेः ।
तेषां त्रयाणां मुण्डानि ततोऽन्येद्युरुपाहरन् ॥१७७९॥

श्रीसुधारत्नदन्त्यश्वशशाङ्कादिप्रकाशने ।
दृष्टचित्रस्वभावोऽब्धिर्यथाऽयं पार्थिवस्तथा ॥१७८०॥

तत्र तत्राऽद्भुतं भावं दर्शयन् भुवनाद्भुतम् ।
परिच्छेद्याऽनुभावत्वं न केषामपि गच्छति ॥१७८१॥

नाहृष्यन्निहतोऽसाध्यः पितुर्मे योऽप्यभूदिति ।
न जहर्ष विनष्टोऽयं राजकण्टक इत्यपि ॥१७८२॥

नाऽकुप्यन्मतिपितुर्मुण्डमेष भ्रमितवानिति ।
वीक्ष्य भिक्षोः शिरोव्याजभावादार्यस्त्वचिन्तयत् ॥१७८३॥

---

1775 c) $P_{1-3}$ $I_3$ °ज्येष्ठ° (for °ज्यैष्ठ°)

1776 d) SA $P_1$ $I_3$ °विस्मित: ( for °विस्मिता ).

1778 d) All Mss. read धाराम्बु (for धराम्बु suggested with St). C S′ चिरा° (for विद°).

1781. a) After this v युग्मम् .

1783. a) $SA_1$ (before corr.) D $I_3$ नाकुप्यत्स पितु°, $SA_1$ (after corr.) नाकुप्यत्मतिपितु°; C S′ नाक्रुध्यत्स पितु° (for नाऽकुप्यन्मतिपितु°). —d) D SR SG C S′ $P_{1-3}$ °भावादायस्त्व°; $SA_1$ $I_3$ °भावो . स्त्वचि°; $SA_1$ in marg. °भावादायस्त्व°; St (after suggestion) °भावौदार्यस्त्व° cf III. 308, VIII. 2217 (for °भावादायस्त्व° suggested) After this v युग्मम् .

आकारस्याऽस्य संभाव्यं सत्त्वं न द्वेषवैकृतम् ।
वैशद्यं स्फटिकस्येव नाऽर्कोऽऽलोकोपतप्तता ॥१७८४॥

उत्कर्षात् प्रभृति व्यक्तममुं यावन्महीभुजम् ।
हा धिक् सुमृत्युना दृष्टं नेह देहविसर्जनम् ॥१७८५॥

प्रसादवित्ता येऽप्यासन् पूर्वमस्योर्वराभुजः ।
तटस्था इव वीक्षन्ते तेऽद्य मुण्डावशेषताम् ॥१७८६॥

इति क्षितीशोऽसामान्यसौजन्योऽन्तर्विचारयन् ।
आदिदेश रिपोः शीघ्रं तादृशस्यान्तसत्क्रियाम् ॥१७८७॥

निद्राच्छेदे च निशि स ध्यायंस्तस्योदयात्ययौ ।
भवस्वभाववैचित्र्यं मुहुर्मुहुरचिन्तयत् ॥१७८८॥

अपि वर्षसहस्रेण देशे दायाददुस्स्थितिः ।
नूनं न भविता भूय इति लोकोऽप्यमन्यत ॥१७८९॥

दग्ध्वा तृणं तनु घनं प्रतनोति शष्पं
वृष्टिं सृजत्युपचितोष्म दिनं प्रदर्श्य ।
वैचित्र्यसंस्पृशि विधेर्नियमेन कृत्ये
न प्रत्ययः क्वचन चञ्चलनिश्चयस्य ॥१७९०॥

---

1784 d) All Mss. read °तप्तताम् (for °तप्तता suggested with St)

1785. c) St $P_{2,3}$ स्वमृत्युना, C S′ च मृत्युना (for सुमृत्युना).

1786 c) C S′ वीक्ष्यन्ते (for वीक्षन्ते).

1787. b) C S′ °न्यान्त° (for °न्योन्त°).

1788 a) SA D $P_{1-3}$ $I_3$ om स St C S′ च (for स suggested). —b) $P_{2,3}$ SA °यान्ययौ (for °यात्ययौ).

1790 a) C S′ शस्य (for शष्प). —b) $SA_1$ (before corr.) चिर (for दिन). —c) C तेन (for कृत्ये) —d) C S′ क (for न).

कृत्यं निर्वर्त्य विश्रान्त्यै धीरस्याऽबध्नतो मनः ।
विधिर्विधत्ते दीर्घान्यकार्यभारसमर्पणम् ॥१७९१॥

आरोढुः प्रथमस्य दीर्घदमनप्रत्तक्रमस्याऽङ्घ्रिणा
नो संत्यज्यत एव पादकटको यावद् द्वितीयोऽखिलः ।
वाहस्याऽऽसनरक्षिणः कलयतो भारावतारात् सुखा-
न्यारोहेण परेण तावदसहाऽधिष्ठीयते पृष्ठभूः ॥१७९२॥

एवमेव क्षपामात्रं राज्ये निश्शत्रुतां गते ।
शोकमूको नृपस्याऽग्रं प्राविशल्लेखहारकः ॥१२९३॥

पृष्टः सभ्यैः स संभ्रान्तैर्यस्मिन्नेवाऽह्नि भूपतेः ।
यातो भिक्षाचर शान्तिमरातिर्दत्तदुःस्थितिः ॥१७९४॥

भ्रातरौ लोहरगिरौ बद्धौ द्वैमातुरौ पुरा ।
न्यस्तौ सुस्सलभूपेन यौ तौ सल्हणलोठनौ ॥१७९५॥

ज्येष्ठे मृते कोट्टभृत्यैः कनिष्ठं लोठनं हठात् ।
तमिहाऽद्य त्रियामायामभिषिक्तमभाषत ॥१७९६॥

सुतभ्रातृसुतैर्दृप्तै राज्यार्हैः सह पञ्चभिः ।
निर्यातं बन्धनादूचे कोशेषु स तमीश्वरम् ॥१७९७॥

दूयेत मुह्येदाक्रन्देत् प्रसारितभुजः पतेत् ।
स्वप्याद् विसूत्रो निस्स्पन्दहक्त्वं गच्छेदथ ध्रुवम् ॥१७९८॥

---

1792. a) All Mss. read आरोढ्ढ (for आरोढ्ढ suggested with D). All Mss read °मदन° (for °दमन° suggested with St D) —d) C S′ $I_3$ °त्यारो° (for °न्यारो°).

1795 d) S A $P_2$ सुल्ह° (for सल्ह°).

दीर्घदौःस्थ्यशमक्षिप्रमृदूकृतमना नृपः ।
असौ तत्कालनिपतद्दुर्वार्तावज्रचूर्णितः ॥१७९९॥

इति संभाव्य दिक्पालैरपि साकूतमीक्षितः ।
नाऽऽकाराचारचेष्टाभि प्रागवस्थां जहौ नृपः ॥१८००॥

नह्यनन्याभिभूतेन सर्वतोऽसह्यवर्तिना ।
तादृशा वैशसेनान्यः स्पृष्टपूर्वो हि भूपतिः ॥१८०१॥

पित्राऽस्य यद्बलान्नष्टं राज्यं भूयः प्रसाधितम् ।
अनेनाऽपि हताराति विहितं पैतृकं पदम् ॥१८०२॥

हारितौ दुर्गकोशौ तौ नष्टनामापि दारकः ।
दायादशेषो यत्रैको निर्धनो वीतबान्धवः ॥१८०३॥

धनमानान्तकृद् भूरिवर्षान् व्यसनमादधे ।
उपप्लवप्रिये देशे तत्रैकस्मिन् हतेऽहिते ॥१८०४॥

मित्रदुर्गार्थसंपन्नाः प्रोद्भूताः षड्विरोधिनः ।
भिन्नप्रकृतिकं कोशशून्यमेतच्च मण्डलम् ॥१८०५॥

तादृङ्निकषनिस्तीर्णमाहात्म्यस्य महीपतेः ।
धैर्येण स्पर्धितुं जाने राघवोऽपि सलाघवः ॥१८०६॥

प्राक्पोषितं हि साम्राज्यदाने निर्वासने च तम् ।
तुल्यानुभावमस्मार्षीत् पितैवं गणयन् गुणान् ॥१८०७॥

---

1803. a) SA °कोषौ; $P_3$ °कोशा (for °कोशौ).

1804 c) C S′ $P_{1,3}$ °प्लवा° (for °प्लव°). —d) C S′ हिते (for [अ]हिते).

1805. d) $P_{1-3}$ $I_3$ SA ° मेत च (for °मेतच्च).

1807 cd) $P_1$ om.

आहूतस्याऽभिषेकाय विसृष्टस्य वनाय वा ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविप्लवः ॥१८०८॥

कान्तेषु काननान्तेषु सकान्तं सानुजं च तम् ।
भूयः श्रियं प्रतिश्रुत्य स्थातुं सावधि सोऽभ्यधात् ॥१८०९॥

एकक्षणानुभूतेऽस्मिन् संघट्टे सुखदुःखयोः ।
ईदृक्तद्दृशाभेदादनयोरन्तरं महत् ॥१८१०॥

नियतं निरुपादानां शक्तिं दर्शयितुं जने ।
नानोपकरणग्रामं संनद्धोऽस्याऽच्छिनद् विधिः ॥१८११॥

अत्यद्भुतानि कृत्यानि वक्ष्यमाणानि भूपतेः ।
कोऽमुष्य बहु मन्येत सामग्र्ये सति संपदाम् ॥१८१२॥

धैर्याब्धिना कार्यशेषं ज्ञातुं राज्ञा सविस्तरम् ।
पृष्टोऽथ कोट्टवृत्तान्तमाचख्यौ लेखहारकः ॥१८१३॥

उत्सृज्य भागिके कोट्टं प्रयाते मण्डलेश्वरः ।
लुप्तोद्योगोऽभवद् गुप्तौ प्रेमा संपत्प्रमत्तधीः ॥१८१४॥

मण्डनाभ्यवहारस्त्रीभोगैकाग्रो मदोग्रया ।
स वृत्त्या भृत्यवैमुख्याधाव्याभव्यं व्यवाहरत् ॥१८१५॥

कुल्यानुकम्पिना दृष्ट्युत्पाटनादेः स वारितः ।
देवेन नाऽऽदाद् बद्धानां कांचिद् रक्षाक्षमां क्रियाम् ॥१८१६॥

---

1808. $P_1$ om.

1809. [ab]) $P_1$ om

1813. [c]) SA $I_3$ कोट° (for कोट्ट°)

1815. [c]) D C भय° (for भृत्य°). —[d]) C भव्य (for °भव्य)

1816. [c]) C S′ दैवेन (for देवेन).

मायाव्युदयनो नाम कायस्थः स्थूलवाञ्छितः ।
माञ्जिकश्च प्रतीहारो बद्धमूलस्य मन्त्रिणः ॥१८१७॥

पुत्रो भीमाकरस्येन्द्राकरश्चाऽत्रान्तरे समम् ।
दुर्भुक्षवस्तत्र तत्र वधं प्रेम्णो व्यचिन्तयन् ॥१८१८॥

अलब्धो हन्तुमप्राप्तावसरैस्तैः कदाचन ।
कोट्टाद्ट्टालिका कार्यवशादवरुरोह सः ॥१८१९॥

कश्मीरेभ्यो नृपेणाऽल्पावशेषप्राणवृत्तिना ।
प्रैषि शासनमेतादृगिति प्रत्ययसिद्धये ॥१८२०॥

कोट्टौकसामशेषाणां गूढलेखान् विधाय ते ।
निबद्धसंविदः पूर्वमभिषेच्यस्य भार्यया ॥१८२१॥

दृष्ट्वा दुर्गान्निर्निगडं कृत्वा च निशि लोठनम् ।
सिहराजस्वामिविष्णुप्रासादाग्रेऽभ्यषेचयन् ॥१८२२॥

शारदाख्या वधूरेका कापि सुस्सलभूपतेः ।
तत्र स्थिताऽभवत् क्षुद्रा तेषामनुमतप्रदा ॥१८२३॥

तदर्पितैरयोयन्त्रभञ्जनैरर्गलानि ते ।
कोशान्निवार्य पर्याप्तं कोशरत्नादि जह्रिरे ॥१८२४॥

सभृत्यैः सप्तभिस्तत् तत् साहसं सुमहत् कृतम् ।
दानेन त्याजिताऽऽयासा चण्डालैः प्रतिकूलता ॥१८२५॥

---

1817. a) C S′ मायाभ्यु (for मायाव्यु°).

1818. a) St $I_3$ °स्येन्दा° (for °स्येन्द्रा°). —d) SA $P_2$ °न्तयत्; $I_3$ °न्तयेत् [sic] (for °न्तयन्)

1819. ab) $P_1$ om.

1822 d) SA C S′ $P_{1-3}$ $I_3$ °यत् (for °यन्) after this v. तिलकम्

1824 b) C S′ तै (for ते)

1825 a) C S′ °स्तद्वत् (for °स्तत्तत्). —c) St त्याजिता या सा, All other Mss read त्याजितायामा (for त्याजिताऽऽयासा emended).

काले संनहनं रात्रिजागरः सामतो बलैः ।
समये ग्रहणत्यागतत्तद्युक्तिविकल्पनम् ॥२२१०॥

लब्धभूम्यपरित्यागो जिगीषोरीदृशैर्गुणैः ।
चलेयुररयोऽप्यस्य का वैर्याक्रमणे स्तुतिः ॥२२११

अविश्वसन् भिन्नभृत्यस्तादृक्संरम्भपीडितः ।
पलायनोन्मुखः शैलात् कोष्ठकोऽथ व्यगाहत ॥२२१२॥

मार्गेष्वकालप्रालेयपातरुद्धेषु वाजिनाम् ।
गन्तुं तस्योद्यमं जघ्नुः पृष्ठलग्ना विरोधिनः ॥२२१३॥

अवमानोपतप्तोऽथ परिमेयपरिच्छदः ।
स ययौ जाह्नवीं स्नातुं राज्ञा राष्ट्रादपाकृतः ॥२२१४॥

सोमपालोऽथ भूपालनाम्ना पुत्रेण खेदितः ।
दीर्घद्वैराज्यदुःखार्तः शरणं नृपतिं ययौ ॥२२१५॥

पुत्रौ दत्तवतो नीवीं नागपालस्य तस्य च ।
अभयं प्रतिशुश्राव भूभृदाश्रितवत्सलः ॥२२१६॥

बृहद्राजस्य जिह्मोऽयं दौःस्थ्यहेतुरभूदिति ।
स तदापदि नाऽस्मर्षीदव्याजौदार्यधुर्यधीः ॥२२१७॥

साहायकाय स्वं सैन्यं दत्तवांस्तं महीपतिः ।
भूयः प्रतिष्ठामनयद् दर्पप्रशमनाद् द्विषाम् ॥२२१८॥

स्नात्वा द्युनद्यां व्यावृत्तः कोष्ठकोऽत्रान्तरे पुनः ।
मल्लार्जुनं गृहीत्वाऽभूद् द्वैराज्योत्थापनोद्यतः ॥२२१९॥

---

2211. a) C S′ °भूत्या परि° (for °भूम्यपरि°). —d) C S′ धैर्या° (for वैर्या°).

2216. a) St $P_2$ C S′ नीविं (for नीवी).

2217. a) C S′ °राज्यस्य (for °राजस्य). —b) St C S′ $P_3$ दौस्थ्य° (for दौःस्थ्य°).

अर्कोपरागे प्रातः स कुरुक्षेत्रमवाप तम् ।
लवन्य कार्यतस्त्यक्तपूर्ववैरो नृपात्मजः ॥२२२०॥

आहूतो लोठनः पूर्वमायातस्तेन डामरम् ।
निशम्य तं संघटितं खिन्नः प्रायाद् यथागतम् ॥२२२१॥

विजयेशाग्रतः पीतकोशोऽपि नृपतिद्विषः ।
प्रविविक्षूनुपैक्षिष्ट सोमपालो दुराशयः ॥२२२२॥

आराधनाय भूभर्तुस्तत्पुत्रः कोष्ठकं पुनः ।
प्राप्तं स्वविषये तैस्तैष्ठक्कुरैर्निरलुण्ठयत् ॥२२२३॥

अत्रान्तरे चित्ररथं संवृद्धायासदुर्ग्रहम् ।
अनिच्छन्तोऽवन्तिपुरे प्रायं चक्रुर्द्विजातयः ॥२२२४॥

उपेक्ष्यमाणास्ते दर्पात् तेनाऽगणितभूभुजा ।
ज्वलिते ज्वलने देहान् बहवो जुहुवुः शुचा ॥२२२५॥

चरके धर्मधेनूनामुत्तब्धेऽपि तदाश्रितैः ।
वह्निं गोपालकोऽप्येकः कारुण्यप्रवणोऽविशत् ॥२२२६॥

भट्टस्योद्भटवंशस्य पृथ्वीराजस्य नन्दनः ।
युवा विजयराजाख्यः सानुजो गाढदुर्गतः ॥२२२७॥

देशान्तरं जिगमिषुर्विषमं वीक्ष्य तत्र तत् ।
व्याजहाराऽनुजन्मानं कारुण्यास्रुकणान् किरन् ॥२२२८॥

---

2221. c) C S′ $P_3$ SA सङ्घटितु (for सघटित).

2223. c) All Mss. read °विषयैस्तैस्तै° (for °विषये तैस्तै° suggested with D).

2224. b) SA $P_{2,3}$ सवृद्धा° (for सवृद्धा°).

उपेक्ष्यमाणा दाक्षिण्यस्तम्भितेन महीभुजा ।
विशः सचिवपाशेन विवशाः पश्य नाशिताः ॥२२२९॥

छन्दानुवृत्त्याऽमात्यानां यत्र क्ष्माभृदुपेक्षते ।
कस्तत्राऽन्यस्तु दीनानामापच्छमयिता विशाम् ॥२२३०॥

यद्वा न्यायोऽयमन्योन्यस्पर्धया यदुपप्लुतम् ।
शमिता दण्डयेच्छास्यं शमितारं परोऽथवा ॥२२३१॥

विशृङ्खलं नयेच्छय्यां दार्ढ्यसारं विघट्टनैः ।
कदाचिल्लोहमश्मानमश्मा लोहं कदाचन ॥२२३२॥

दोषेणैकेन न द्वेष्यो राजा सर्वगुणोज्ज्वलः ।
वधाच्चित्ररथस्याऽन्यद्विधेयं नाऽवभाति मे ॥२२३३॥

धर्मः सर्वोपकार्येकक्षुद्रक्षपणमुच्यते ।
जघानाऽजगरं सोऽपि जन्तूनामन्तकं जिनः ॥२२३४॥

दुर्वृत्तदमनेऽस्माभिः कृते तेजस्विनो जनात् ।
भूयोऽप्यधिकृतो बिभ्यन्न कश्चित् पीडयेत् प्रजाः ॥२२३५॥

कायस्याऽस्य परित्यागादनन्ता जन्तवो यदि ।
सुखिनः स्युरसौ भ्रातर्वणिज्या ज्यायसी न किम् ॥२२३६॥

संशुश्रुवांसं स तथेत्यथ तं कोशपीथिनम् ।
विधायाऽनुससारैत्य हन्तुं चित्ररथं तदा ॥२२३७॥

---

2230. a) $P_2$ $I_3$ SA °मान्याना (for °मात्याना)

2232. a) C S′ °च्छाम्यं (for °च्छय्या).

2235. a) C S′ $P_{1-3}$ °हसने° (for °दमने°).

2237. b) C S′ क (for त)

कालेऽस्मिन् धर्मदौर्बल्यकलुषेऽपि कलेः किल।
प्रभावो भूमिदेवानां द्योततेऽद्याऽप्यभङ्गुरः ॥२२३८॥

ब्राह्मणैरपरिक्षीणपूर्णपुण्यो न कश्चन।
धैर्यमारभते भ्रष्टदुष्टोत्पाटनपाटवैः ॥२२३९॥

द्विजानुद्वेजयन् सुज्जिर्द्विजादेवाऽऽसदद् वधम्।
विप्रेणैव हतश्चित्ररथो विप्रावमानकृत् ॥२२४०॥

द्विजोत्थापितया क्रान्तचित्तोऽसौ कृत्यया ध्रुवम्।
दध्यौ तस्य वधं प्राणान् विना कारणमुत्सृजन् ॥२२४१॥

कृशानुसादकृषत विप्रा देहान् यदैव ते।
तद्द्वेषस्तुल्यसंघर्षे तदैवाऽऽसीद्धतानुगः ॥२२४२॥

अनासादयतश्चित्ररथं पृथुबलान्वितम्।
गणरात्रमभूद्धन्तुर्दिवारात्रं प्रजागरः ॥२२४३॥

स ह्यपर्यन्तसामन्तसीमन्तितपथो व्रजन्।
अभूददृश्यो दृश्यश्च जनसंबाधमध्यगः ॥२२४४॥

तेन साश्चर्यनैश्चल्यनिष्ठुरेणैकदा जवात्।
सोऽनुसस्रे व्यतिक्रान्तनिश्श्रेणिर्नृपवेश्मनि ॥२२४५॥

विलम्बितस्य स्तम्भाग्रे कृपाण्या मूर्ध्न्यथाऽस्य सः।
सामन्तमध्यगस्यैव प्राहरत् तीव्रसाहसः ॥२२४६॥

मुमूर्षोरिव तत्राऽस्य वैह्वल्यगलितस्मृतेः।
उद्भ्रान्तचक्षुषो वर्चश्च्यवनं समपद्यत ॥२२४७॥

---

2241. a) St °तयाक्रान्त° (for °तया क्रान्त°).

2246 a) C S′ विलुण्ठितस्य (for विलम्बितस्य). D (before suggestion) C S′ $P_{1,2}$ $I_3$ SA स्तम्बाग्रे; $P_3$ तस्याग्रे (for स्तम्भाग्रे suggested with St D). —c) $P_{1-2}$ °गम्यैव (for °गस्यैव).

प्रमापितोऽयं राज्ञेति ज्ञात्वा सत्त्वबहिष्कृताः ।
वित्रस्तास्तं तथाभूतमत्यजन्ननुजीविनः ॥२२४८॥

तं वीतजीवितं ज्ञात्वा न तीक्ष्णः प्राहरत् पुनः ।
प्राप्तं द्वितीयनिश्श्रेण्या भ्रातरं निषिषेध च ॥२२४९॥

न पलायिष्ट निर्विघ्नसर्वमार्गोऽपि घातितः ।
राज्ञा चित्ररथः शश्वदित्युच्चैः प्रोच्चकार सः ॥२२५०॥

प्रनष्टं भृष्टमांसादिराज्यभोगपुरस्सरैः ।
सर्वैः कापुरुषैस्त्रासादथ चित्ररथानुगैः ॥२२५१॥

ज्यायाँल्लोठरथस्तस्य भ्राता भीत्या पलायितः ।
शरणं नर्तकीमेकां ययौ वक्त्रार्पितस्तनः ॥२२५२॥

तादृक्प्रवेशितश्चित्ररथोऽभ्यर्णे महीभुजा ।
मा भैषीः प्राहरत् कस्त्वामित्युक्त्वाऽऽश्वासितः स्वयम् ॥२२५३॥

नृपाज्ञया को निहन्ता द्वारेशस्येति वादिभिः ।
तीक्ष्णोऽन्विष्टो भटैः सोऽहमित्युक्त्वा स्वं न्यदर्शयत् ॥२२५४॥

धीरो योधान् स्वधैर्यात्तलङ्घनश्लाघ्यविक्रमः ।
त्रिंशद्विंशान् स हत्वाऽथ प्रहृत्य च रणे हतः ॥२२५५॥

"परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥२२५६॥"

---

2255 [a]) All Mss. except St read °धैर्यांक्त° (for °धैर्यांत्त°) —[b]) D (before suggestion) C S′ $P_{1-3}$ °लङ्घन, D suggests लङ्घयन् (for लङ्घन°). —[d]) St चरणे (for च रणे)

2256. This *v.* occurs in Bhagavadgītā (iii 8).

लब्धा लिखिततत्कृत्यकारणा पत्रिका करात् ।
तस्याऽन्तसमयाशंसा श्लोकेनाऽनेन पावनी ॥२२५७॥

अरुच्युन्माददीनत्वयुतश्चित्ररथस्ततः ।
रूढव्रणोऽपि लालाटसंधिवेधादजायत ॥२२५८॥

स मासान् पञ्चषान्याप्य निराप्यायकृशाकृतिः ।
विवेष्टमानोऽवर्तिष्ट शयनीयतलेऽन्वहम् ॥२२५९॥

मल्लार्जुनं पुरस्कृत्य कोष्ठको विप्लवोन्मुखः ।
तन्मध्ये तरुसंबाधं गिरिदुर्गमगाहत ॥२२६०॥

स समभ्रमयत् भ्राम्यन् स्वयूथ्यग्रहणोद्यमात् ।
अविस्मृतापदं लोकं पुनर्द्वैराज्यशङ्किनम् ॥२२६१॥

अकाण्डाम्बुदजाड्येन पीडिताङ्गं इवाऽभजत् ।
परचक्रोदयेनाऽऽशु लोकः शिथिलशक्तिताम् ॥२२६२॥

तरुदुर्गे तदकृशक्रोशव्याप्यथ सर्वतः ।
व्याप्तोपान्तवनग्रामैः सचिवैः स न्यरोधयत् ॥२२६३॥

सज्जपाले यवनकैः स्कन्धावारं निबध्नति ।
अनुचक्रुर्द्विषोऽस्पन्दान्निवातस्तिमितांस्तरून् ॥२२६४॥

धन्योऽपि शिलिकाकोट्टपर्यस्तकटकोऽभवत् ।
गन्धद्वेषी गजरिपुः सिन्धुरस्येव वैरिणः ॥२२६५॥

---

2257. b) D $I_3$ °कारणात् (for °कारणा).
2261. a) All Mss. read मा मामभ्रमय भ्रा° (for स समभ्रमयत् भ्रा° suggested with St, cf St. fn). —b) All Mss read °ग्रसनो° (for °ग्रहणो° suggested with St.Tr.).
2263. b) $P_1$ SA °क्रोष° (for °क्रोश°).
2264. b) $P_{1-3}$ $I_3$ SA स्कन्दा° (for स्कन्धा°).
2265. d) $P_2$ SA सिन्दुर° (for सिन्धुर°)

आवासितबलो राज्ञा गोवासे रिल्हणोऽकरोत् ।
अटवीं पर्यटन् घूकानिवाऽर्को त्रुडितानरीन् ॥२२६६॥

तीव्रशक्तेर्नृपस्यैवमारम्भैः स्तम्भितोऽभजत् ।
कोष्ठेश्वरस्त्रिचतुरान् मासान् संचारशून्यताम् ॥२२६७॥

क्लिष्टो देशान्तरे राष्ट्रानन्तरैर्न्यक्कृतो नृपैः ।
भिन्नस्ववर्गो भूभर्तृभृत्यव्यर्थीकृतोद्यमः ॥२२६८॥

बालिशत्वादकुशलो ज्ञातुं वृत्तिं महीभुजाम् ।
स विस्मृतागाः संधातुमैच्छच्छिन्नपदो नृपम् ॥२२६९॥

उज्जिहीर्षोः प्रभोर्मन्युं वाच्यं तद्वचनाद् विदन् ।
भक्त्येकाग्रः सज्जपालस्तस्येच्छां तामपूरयत् ॥२२७०॥

तथाऽऽर्त्तोऽपि रिपुं राज्ञः संधित्सुर्व्यग्रहीन्न सः ।
पृथ्वीहरप्रसूतानां निर्द्रोहत्वं न कौतुकम् ॥२२७१॥

तेन प्रहिण्वता राजवैरिणे स्वकराङ्गुलिम् ।
छिन्दताऽपि महीभर्तुर्मन्युश्छेत्तुं न पारितः ॥२२७२॥

कण्ठबद्धशिरश्शाटः शीर्षेणोपानहं वहन् ।
भुक्तवेलोऽपि भूपालं कर्तुं नाऽशाकदक्रुधम् ॥२२७३॥

अस्वीकृतद्वित्रभूभृल्लाञ्छनः स हि राजवत् ।
तत्तत्प्रत्युक्तभूपाज्ञः सर्वं गर्वाद् व्यवाहरत् ॥२२७४॥

---

2266 d) C S′ °र्कोत्कण्ठिता° (for °र्को त्रुडिता°).
2267. ab) $P_1$ om. *ab*.
2269. a) C $P_{1-3}$ $I_3$ SA वालि° (for बालि°).
2270. b) All Mss except $P_2$ read तद्वञ्चनाद् (for तद्वचनाद्).
2271. a) $P_1$ तथार्त्तोऽपि; $P_2$ तथातोऽपि (for तथाऽऽर्तोऽपि). —b) St C $P_3$ °त्सुर्न्यग्र°; $P_2$ °त्समर्त्यग्र° (for °त्सुर्व्यग्र°).
2272 d) C $P_3$ °न्युच्छेत्तु (for °न्युश्छेत्तुं).
2273. c) $P_1$ °वैलो° (for °वेलो°, cf *vv* VII. 369, VIII. 522).

शुश्राव बद्धं तन्मध्ये यातं मल्लार्जुनं नृपः ।
अनुबध्नाति भव्यानामुदयेऽभ्युदयान्तरम् ॥२२७५॥

नीयमानः स हि स्कन्धमधिरोप्याऽनुजीविभिः ।
अजाङ्घिकतया मार्गोल्लङ्घनायासनिस्सहः ॥२२७६॥

ततस्ततो भयस्थानान्निस्तीर्णो लोहराश्रितम् ।
सावर्णिकाभिधं ग्रामं प्राप्तो विन्यस्तरक्षिणा ॥२२७७॥

निरुद्धो जग्गिकाख्येन ठक्कुरेण महीपतिः ।
प्रियंकर तं च भृत्यं शुश्रावाऽन्तिकमागतम् ॥२२७८॥

बद्धप्रायोऽरिणा दुर्गान्निर्गतः स कथंचन ।
बद्धस्तेन पुनः शक्तिः कस्य भाव्यर्थलङ्घने ॥२२७९॥

गङ्गा द्युमार्गलुठिता जठरात् कथंचि-
देकस्य संहृतवतो निसृता महर्षेः ।
ग्रस्ताऽपरेण कृतसागरगर्तपूर्तिः
शक्तो न कोऽपि भवितव्यविलङ्घनायाम् ॥२२८०॥

जग्गिके बद्धसंप्राप्तिपर्यन्तोपान्तरक्षिणि ।
राज्ञोदयद्वारपतिः प्रायोजि प्राज्यबुद्धिना ॥२२८१॥

तं विना धैर्यगाम्भीर्यशौर्यधुर्यं महाधियम् ।
संकटे न ह्यवष्टम्भो राज्ञाऽज्ञाय्यन्यमन्त्रिणाम् ॥२२८२॥

---

2276. a) $P_{1-3}$ $I_3$ SA स्कन्द° (for स्कन्ध°). —d) All Mss read °नाय सा (for °नायास° suggested with St)

2278. a) $P_1$ जङ्घि°, $P_3$ जाङ्घि° (for जग्गि°).

2279 c) SA $P_2$ शक्ति (for शक्तिः) —d) SA $P_2$ भावार्थ° (for भाव्यर्थ°).

2281 a) $P_1$ जघ्नके, $P_2$ SA $I_3$ जग्गके, $P_3$ जङ्घिके (for जग्गिके).

स ह्यतिक्रम्य साबाधान्मार्गानुभयवेतनैः ।
तमोरिस्थितमद्राक्षीत् तं क्षमापतिविद्विषम् ॥२२८३॥

निष्ठाशून्येन धैर्येण शौर्यसंभावनावहः ।
स्तुवन् स तं बहिः प्राप्तं तत्तदुक्त्वाऽब्रवीत् पुनः ॥२२८४॥

सर्वतो ज्यायसीं भर्तृभक्तिं यो बहु मन्यते ।
भवान् धुर्यो मतिमतामाहृतो लोभनातुरैः ॥२२८५॥

कृता रक्षामणिसमं सहायं त्वादृशं विना ।
हानिर्मे दुर्नरेन्द्रस्य बाल्ये राज्ये बहुच्छलैः ॥२२८६॥

दुष्प्रेक्ष्याणां भवत्येव नियमाद् राजभास्वताम् ।
भाग्यान्तहेमन्तदिने जननेत्रविलङ्घ्यता ॥२२८७॥

शोभते रुधिराताम्रमण्डलाग्रो यथोदये ।
तथा योऽस्तमये भास्वानिव वन्द्यः स भूपतिः ॥२२८८॥

धन्योऽवतारो यस्याऽऽसीत् क्षुभ्यत्पौराङ्गनाजनः ।
उदयेऽस्तमयेऽप्युग्रे रागव्यग्राप्सरोगणः ॥२२८९॥

पदे प्रयोगं लब्ध्वाऽर्थं किंचित्कृत्वा कुलीनवत् ।
अहं कविरिवाऽप्रौढः प्राप्तो निर्व्यूढिमूढताम् ॥२२९०॥

सत्यंकारोऽधुना भूत्वा विधत्तां स्वान्तसुस्थितिम् ।
साध्यत्वानतिवृत्तेन वरेणैकेन मे भवान् ॥२२९१॥

---

2284. d) $P_{1,2}$ $I_3$ पुरः (for पुन ).

2285. d) D $P_{1-3}$ °भनान्तरै , C S′ °ऽनान्तरै (for °भनातुरै ).

2290. c) All Mss read °व प्रौढ (for °वाऽप्रौढः suggested with D).

2291. c) C S′ $P_2$ $I_3$ °नभि° (for °नति°). —d) C S′ $P_2$ सो (for मे).

इत्युक्त्वा प्रत्ययोत्पत्त्यै संस्प्रष्टुं स्फाटिकं ततः ।
स पीठं पुरतो द्वारपतेर्लिङ्गमुपानयत् ॥२२९२॥

अच्छलाहवसंमर्दप्रासशूलेषुवर्षिणः ।
योधान् योद्धुं वरं सोऽयं मानवान्नूनमिच्छति ॥२२९३॥

इति संभाव्य संस्पृष्टशिवलिङ्गः स वाञ्छितम् ।
वरं तस्योररीचक्रे स च भूयो जगाद तम् ॥२२९४॥

अक्रुष्टदृष्टिरहतः क्ष्माभुजोऽन्तिकमक्षतः ।
यथेदृगेव प्राप्नोमि तथा त्वामर्थयेऽधुना ॥२२९५॥

कार्पण्योपहतं तस्य वचः श्रुत्वा त्रपाजडाः ।
सर्वेऽप्युर्वीमुखास्तस्थुर्वृष्ट्यार्द्राः पल्लवा इव ॥२२९६॥

अन्त्यक्षणस्ततो भिक्षोः स्मर्यमाणः सचेतसाम् ।
विकासहेतुतां प्राप स्वस्थस्य मनसः पुनः ॥२२९७॥

मनुष्यवाह्यमारूढः पत्त्रं निन्ये स निस्त्रपः ।
तेन स्वपालिताँल्लोकानपि पश्यन्नविक्रियम् ॥२२९८॥

अहीनाहारनिद्रादिवैवश्यः पशुवत् पथि ।
कृष्यमाणः स केनाऽपि न विकल्पेन पस्पृशे ॥२२९९॥

---

2292. c) St सपी° (for स पी°).

2293. c) D C S′ $P_{1-3}$ $I_3$ साय; SA माऽय; St $P_2$ माय (for सोऽयं suggested).

2295. a) St C S′ $P_{1,2}$ $I_3$ आक्रुष्ट° (for अक्रुष्ट°). —c) All Mss. read प्राप्नोषि (for प्राप्नोमि suggested with D).

2297. a) C S′ अन्त्ये; St D $P_{1,2}$ $I_3$ अन्त° (for अन्त्य° found in $P_3$). —b) $P_1$ om. सचेतसाम्. D C S′ $P_{2,3}$ $I_3$ स चेतसाम् (for सचेतसाम्). cd) $P_1$ om.

पश्यन्नानीयमानं तं गोप्तृभिस्तादृशं जनः ।
दयार्द्रहृदयश्चाऽऽसीन्नाऽभ्यनन्दच्च भूभुजम् ॥२३००॥

उवाच चाऽऽनुकम्प्येऽस्मिञ्जन्मज्येष्ठस्य भूपतेः ।
नैतावद् भाति नैर्घृण्यमनुजे पितृवर्जिते ॥२३०१॥

असेचनकमेतस्य मेचकाब्जदृशो वपुः ।
क्लेशगर्ह्यमनिस्त्रिंशचेताः कः कर्तुमर्हति ॥२३०२॥

पूर्वापरानुसंधानवन्ध्यस्तं दृष्टवांस्तदा ।
विस्मृतागा नृपं तत्तदित्युपालभताऽध्वनि ॥२३०३॥

गणना काऽथवा बालबालिशादौ विधीयते ।
न चित्तवृत्तेरैकाग्र्यं महतामपि सर्वदा ॥२३०४॥

श्रोतॄणां द्यूतपाञ्चालीकेशकृष्टयादि शृण्वताम् ।
पाण्डवेभ्योऽधिकः क्रोधो धार्तराष्ट्रेषु जायते ॥२३०५॥

कुरूणां क्षतजापाने भग्नोरोर्मूर्धताडने ।
श्रुते पाण्डवविद्वेषस्तेषामेव च दृश्यते ॥२३०६॥

परावरज्ञः कार्याणां न कश्चिन्मध्यगं विना ।
तटस्थेऽनुभवाभेदस्तत्र तत्र कथं भवेत् ॥२३०७॥

स पौरान् रोदयन्नङ्के छिन्नाङ्गुल्यङ्कमुद्वहन् ।
युग्याधिरूढो मृत्पात्रं सायं नगरमासदत् ॥२३०८॥

---

2300. b) C S′ $P_{1,2}$ $I_3$ SA जना (for जन॰).

2302 a) D C S′ $P_1$ आसे° (for असे°) असेचनक means charming.

2304. ab) $P_{1,3}$ SA बालवालि°; $P_2$ $I_3$ वालवालि° (for बालबालि°).

2307. a) $P_{2,3}$ °रज्ञा॰ (for °रज्ञ). —b) All Mss read मध्यम (for मध्यग suggested). —c) C S′ ततस्ते° (for तटस्थे°).

न्यधत्ताऽऽश्वयुजाशुक्लपञ्चदश्यां महीपतिः ।
एकादशेऽब्दे तं रक्षियुतं नवमठान्तरे ॥२३०९॥

त्यक्ताहारस्य च निशाः पञ्चषास्तस्य ताम्यतः ।
पार्श्वं जगाम कारुण्याच्चरणस्पर्शनार्थिनः ॥२३१०॥

अवादीदर्थितं तस्मै प्रतिशुश्रुवुषेऽभयम् ।
द्रोहावेकान्ततो वध्यौ स चित्ररथकोष्ठकौ ॥२३११॥

राजा निर्जग्मुषः स्वोर्वीं कोष्ठकस्याऽथ बन्धनम् ।
विधित्सुः पञ्चषानाप्तान् रिल्हणादीनचूचुदत् ॥२३१२॥

सर्वेषु गलितौजस्सु स्वयं राज्युद्यमस्पृशि ।
अथ तं रिल्हणो दोर्भ्यां झषं ग्राह इवाऽग्रहीत् ॥२३१३॥

हृतशस्त्रः स बलिनस्तस्य दोष्पञ्जरान्तरे ।
तस्थावचेष्टो निद्रान्धो भूतेनेवाऽसमीकृतः ॥२३१४॥

भ्रातृव्यो भिःखराजाख्यः कुलराजस्य कोपनः ।
भूभृद्भक्त्या कृपाण्याऽस्य निर्बिभेद कृकाटिकाम् ॥२३१५॥

परश्वधेन मूर्ध्न्येनं पृथ्वीपालश्च ताडयन् ।
राजबीजी स च क्रोधान्न्यषिध्यत महीभुजा ॥२३१६॥

कृकाटिकास्थिसंजातमर्मवेधोपचेष्टितः ।
विवेष्टमानोऽवर्तिष्ट क्षितौ स रुधिरोक्षितः ॥२३१७॥

---

2310. c) $P_{1-3}$ $I_3$ °ण्याश्च° (for °ण्याच्च°).

2312. d) St °चुरत् (for °चुदत्).

2314 d) C S′ °लसीकृत.; St $P_{1-3}$ $I_3$ °सनीकृतः (for °समीकृत ).

2315. a) SA भि×ख° (for भिःख°).

महाबलैः कमलियप्रमुखैस्तस्य सोदरः।
चतुष्क पातितोऽप्युर्व्यां गण्डशैल इव द्विपैः ॥२३१८॥

विलोक्य वैकल्यहतौ बद्धौ तौ स्वामिनौ तथा।
कृष्टासिधेनुरुत्तस्थौ द्विजन्मा मल्लकाभिधः ॥२३१९॥

उच्चावचेषु प्रहरन् स भूपालोपजीविषु।
अतर्क्यमाणस्तुमुलं राज्ञैवाऽलक्ष्यतापतन् ॥२३२०॥

नृपान्तिकादापततस्तांस्तान् घ्नन्तं महाभटान्।
अधावत् सासिधेनुस्तं कुलराजो महौजसम् ॥२३२१॥

प्रतिप्रहृतिषु क्षिप्रापतत्पाणिमपारयन्।
निहन्तुं संरुरोधेव भित्तौ व्यायामवित् स तम् ॥२३२२॥

अपयातुमवस्थातुं प्रहर्तुं वाऽप्यशक्नुवन्।
तस्थौ च बहुसंधानः संस्तंभ्यैनमविक्षतम् ॥२३२३॥

चरणास्फालनोत्फालदोश्शब्दमुखरोऽन्तिकम्।
धाविते पद्मराजेऽथ मल्लकोऽक्षिपदीक्षणम् ॥२३२४॥

प्राहरत् कुलराजोऽस्य लब्धरन्ध्रोऽथ वक्षसि।
प्रहृत्य गच्छतः पाणेः स तस्याऽङ्गुष्ठमक्षिणोत् ॥२३२५॥

तौ बिज्जराजे दर्पोष्णनिबिडे प्रहरत्युभौ।
तस्मिन् प्रतिप्रहरति क्षिप्रं प्राहरतां ततः ॥२३२६॥

---

2319. b) S′ SA स्वामिनो; $P_3$ स्वामिना (for स्वामिनौ). —c) $P_{1-3}$ °कृत्त° (for °रुत्त°)

2323. d) St (before corr in corrigenda) D $P_{1,3}$ C S′ सस्त° (for सस्त°).

2326. a) All Mss. read °राजो (for °राजे suggested with St).

स त्रीनप्यभियोक्तृंस्तांस्त्यक्त्वा दृक्पथमागतम् ।
चतुष्किकाद्वारगतं राजानं समुपाद्रवत् ॥२३२७॥

लक्ष्यीभूते नृपे शीघ्रमनुधावन् ससंभ्रमम् ।
चकार कुलराजस्तं स्फिगस्थिक्षतिनिर्जवम् ॥२३२८॥

ततः सर्वैर्वृतो योधैः क्लीबाक्लीबान् स सत्वरम् ।
हत्वाऽभजद् वीरशय्यां रक्तस्यन्दोत्तरच्छदाम् ॥२३२९॥

जीवद्यापद्गतस्वामिवीक्षितः श्लाघ्यविक्रमः ।
स एव स्पृहणीयान्तक्षणो वीरेष्वगण्यत ॥२३३०॥

बहिः कोष्ठकभृत्येषु विद्रुतेष्वदरिद्रिताम् ।
परं जनकचन्द्राख्यो धैर्येणोवाह डामरः ॥२३३१॥

निरायुधो राजभृत्याद्धृत्वैकस्मात् परश्वधम् ।
स ह्ययुद्धाऽग्रदूतत्वं नयन् भूरीन् यमान्तिके ॥२३३२॥

यियासोस्तस्य चण्डांशुमण्डलं परशुः करे ।
सुषुम्णाऽसंविभागार्थी शशिखण्ड इवाऽविशत् ॥२३३३॥

नाऽद्राक्ष्म नाऽश्रौष्म वाऽपि बद्धे भर्त्तरि यत्तदा ।
कोष्ठकस्य वधूरन्वतिष्ठन्मानवती सती ॥२३३४॥

जीवन् भूयोऽपि लभ्येत त्वया स पतिरित्यसौ ।
बन्धूनामवधीर्योक्तिं प्राविशद् यद्धुताशनम् ॥२३३५॥

सप्तर्षियोषिदाश्लेषतर्षकिल्बिषदूषितः ।
तस्याः सतीलोकगायाः पादाभ्यां पावितोऽनलः ॥२३३६॥

---

2328. a) St $P_1$ लक्षी°; $P_2$ लक्ष्ये (for लक्ष्यी°).

2330. c) St C S′ $P_2$ $I_3$ एवास्पृ° (for एव स्पृ°).

2331. b) $P_3$ om. विद्रुतेष्व

वसन्तस्य सुता धन्योदयभ्रातुः पुपोष सा ।
शुचिर्वंशाभिमानेन न डामरवधूव्रतम् ॥२३३७॥

लवन्यललनाः कुर्युर्वैधव्येऽपि धनेच्छया ।
ग्रामकार्यिकुटुम्ब्यादीन्नितम्बाभोगभागिनः ॥२३३८॥

मतिव्यामोहनिर्व्यूढवैक्लव्यस्याऽभिमानिनः ।
तयाऽनुगाभ्यां च कृतं कोष्ठकस्योच्चकैः शिरः ॥२३३९॥

रूढव्रणोऽपि क्रिमिसाद्भूतः कैरपि किल्बिषैः ।
निष्प्राणो गणरात्रेण कारायां कोष्ठकोऽभवत् ॥२३४०॥

अथ चित्ररथं शोषकृशः कलुषितं नृपम् ।
श्रुत्वा मल्लार्जुनेनाऽभूद् भयादत्यन्तदुःखितः ॥२३४१॥

पत्नी तस्यैकभार्यस्य प्रिया सूर्यमती सती ।
परलोकातिथिः पूर्वं विभवप्रतिभूरभूत् ॥२३४२॥

देहे याप्यहताप्याये गेहे गतपरिग्रहे ।
पत्यौ वैमत्यकलुषे नेषदप्येष पिप्रिये ॥२३४३॥

तीर्थस्थितस्य न स्यान्मे सागसोऽप्यप्रियं नृपात् ।
इति संचिन्त्य स प्रायान्मिषान्मर्तुं सुरेश्वरीम् ॥२३४४॥

अथ नानार्थभूयिष्ठां धनाधीशाधिकश्रियः ।
स्थानात् ततस्ततस्तस्य पार्थिवोऽपाहरच्छ्रियम् ॥२३४५॥

कनकांशुकसंनाहवाजिरत्नायुधादिभिः ।
स्वा स्वा प्रकाशिता लक्ष्मीः स्पर्धयेवाऽधिकाधिका ॥२३४६॥

---

2338. c) C S′ °कादि°; $P_{1-3}$ °काहि° (for °कार्यि°).

2341. d) St C S′ $P_{1-3}$ $I_3$ दु स्थितः (for दुःखित ).

2344. d) For सुरेश्वरीम् cf. *vv.* V. 40, 41; VI. 147; VIII 506, 744, 2363, 2418 and St. Tr. fn. *v.* V. 37.

2345. a) C S′ $P_{1,2}$ °यिष्ठा (for °यिष्ठां).

लोहरद्रोहघर्मोष्मशोषितो राजपादपः
तल्लक्ष्मीशैलतटिनीसेकेनाऽऽप्यायितोऽभवत् ॥२३४७॥

विप्लवे चिरनष्टेऽपि श्रीकल्याणपुरं न यः।
वनवासोचितत्रासः शाल्वः सौभमिवाऽत्यजत् ॥२३४८॥

श्वेतच्छत्रांशुपृक्तेव चिन्तापाण्डुरवर्तत।
बन्दीकृता नरेन्द्रश्रीर्निर्निद्रा यस्य मन्दिरे ॥२३४९॥

राज्ञा प्रयुक्तं विज्ञाय विजयः स भवोद्भवः।
तीक्ष्णमानन्दनामानमवधीत् तेन चाऽवधि ॥२३५०॥

इत्थं स पप्रथे तादृक्प्रजापालनशालिनः।
सर्वोत्साहमयोऽनेहा जयसिंहमहीभुजः ॥२३५१॥

तीर्थस्थिते चित्ररथे पादाग्रग्रहणैषिणौ।
शृङ्गारजनकावास्तां तद्भृत्यौ व्यक्तचक्रिकौ ॥२३५२॥

प्रचुरोत्कोचदानेन स्वीकृत्य नृपतिं ययौ।
शृङ्गारो भग्नजनक स्वामिश्रीभोगभागिताम् ॥२३५३॥

चिरप्रचलितं द्वारमुदये निदधे पुनः।
मेघकालः सरित्पूरं प्रतीर इव पार्थिवः ॥२३५४॥

अवश्यभोग्यदुष्कर्मदत्तमर्मव्यथश्चिरम् ।
कथाशेषोऽभवच्चित्ररथो मासैरथाऽष्टभिः ॥२३५५॥

---

2348 d) C S′ साल्लूरोऽन्वुमि°, $P_1$ साल्लुस्मो…मि; D (before suggestion) $P_2$ SA साल्व सौ मि°; $P_3$ साल सौ…मि° (for शाल्वः सौभमि° suggested with St D).

2350. d) After this *v* तिलकम्.

हास्यावहोऽप्यविकृतो विकृतोऽनपास्यो
 दुर्गन्धिरप्यतिजडोऽपि गृहीतवाक्यः ।
पूर्वानुभावजयिनो भवति प्रभावाद्
 यस्य स्तुमस्तमतिसंस्तवमप्रतर्क्यम् ॥२३५६॥

निन्धैराद्यूनताद्यैर्यश्चेष्टितैः प्रागभीष्टताम् ।
बाल्ये दुर्ललितस्याऽगाद् भूभर्तुश्चित्रचेतसः ॥२३५७॥

विसृज्यमानः संप्राप्तसाम्राज्येन दिवानिशम् ।
क्रमात् स्वीकृत्य ताम्बूलं तेन चित्ररथान्तिकम् ॥२३५८॥

दूत्यैः कृत्यान्तरज्ञत्वं प्राप्तवानाप्ततां गतः ।
तदन्ते घटयन् राज्ञस्तद्भृत्यान् कोशदर्शकान् ॥२३५९॥

तदा सर्वोन्नताशेषमन्त्रिशून्ये नृपास्पदे ।
सज्जकस्याऽऽत्मजः प्राप शृङ्गारो मुख्यमन्त्रिताम् ॥२३६०॥

तस्य वैधेयताभ्यस्तकुदृष्टेरपि दुष्कृतम् ।
नाऽगुः पात्रार्पणात्तुच्छत्यागित्वेनाऽपि संपदः ॥२३६१॥

योषित्कशिपुभोग्येन धन्यंमन्योऽपि सोऽभवत् ।
धान्यदानवदान्यत्वं गुरूणामाजगाम यत् ॥२३६२॥

पीठं कृतवतो रूप्यं संयोज्य रजतैर्निजैः ।
विद्यमानं सुरेश्वर्या सायुज्यं तस्य युज्यते ॥२३६३॥

---

2357. a) All Mss. read °द्यूतना° (for °द्यूनता° suggested with D).
2360. c) D C $P_2$ सज्ञक° (for सज्जक°) After this *v* चक्कलकम् .
2361. b) All Mss read दुष्कृताम् (for दुष्कृतम् suggested with St).
 —c) All Mss except SA read नात· (for नाऽगु ).
2362. c) D C $P_{1-3}$ $I_3$ SA °वद° (for °वदा°).
2363. a) SA रुप्य (for रूप्य).

उर्वीशैरपि नाऽर्वाग्भिर्योऽनुगन्तुमशक्यत ।
आषाढ्यामाढ्यसंभारो निविडद्रविणव्ययः ॥२३६४॥

नन्दिक्षेत्रे स तत्राऽऽद्यैः प्रणीतश्वण्पकादिभिः ।
तेन कालानुसारेण पोषितः पञ्चषाः समाः ॥२३६५॥

नर्माङ्गतायां निस्सारो ज्ञातो यः सोऽधिकारभाक् ।
अचिन्त्यकृत्यकार्यासीत् स्वामिस्नेहप्रभावतः ॥२३६६॥

केलीसज्जैर्युवतिकरजैः कण्ठभूषादशायां
यस्याऽज्ञायि त्रुटनमसकृत्क्ष्माधरेष्वासकृष्टौ ।
सोऽप्यादिष्टस्त्रिपुररिपुणा प्राप भङ्गं न भोगी
शक्त्याधायी क्वचन न परो भर्तुराज्ञाप्रभावात् ॥२३६७॥

तं च रिल्हणधन्यौ च समाश्रित्येतरेतरम् ।
कार्यं जनकश्रृङ्गारावुत्कोचेनाऽपजह्रतुः ॥२३६८॥

कदाचिज्जनकं बद्ध्वा सार्धं भूषणमौक्तिकैः ।
सपुत्रदारं, श्रृङ्गारो बाष्पबिन्दूनमोचयत् ॥२३६९॥

स तं च जातु निर्विद्य मानहीनमकारयत् ।
रूक्षरक्ष्यर्पितोत्कोचधनाभ्यर्थितमैथुनः ॥२३७०॥

अङ्गुष्ठनखनिर्घर्षनर्तितानामिकोर्मिकः ।
वदन्वामोत्तरौष्ठाग्रोदञ्चनैः कुञ्चितेक्षणः ॥२३७१॥

---

2365. b) C S′ $P_{2,3}$ $I_3$ °श्वम्पका° (for °श्वण्पका°).

2369. c) All Mss read श्रृङ्गार (for श्रृङ्गारो suggested with St).

2370, c) St $P_{1-3}$ °रक्ष्या°, $I_3$ C S′ °रक्षा° (for °रक्ष्य°).

2371. d) D C S′ $P_{1-3}$ $I_3$ कुरुते क्षण; SA कु ˙ तेक्षण˙ (for कुञ्चितेक्षणः suggested with St)

भ्रूभङ्गोद्वेल्लितवलीनिम्नोन्नतललाटभूः ।
पुनरेकस्तयोर्लब्धकार्यो लोकमहासयत् ॥२३७२॥

अव्यक्ताक्षरवाग्रौक्ष्यमीलिताक्षो रटन् बहु ।
हसन् सकरतालं च संपद्यन्यो व्यभाव्यत ॥२३७३॥

सोल्लेखप्रतिभोन्नीततत्त्वानां हास्यवस्तुनि ।
कथाशरीरं पर्याप्तं नेदृशां किमचेतसाम् ॥२३७४॥

सर्वस्मिन् वस्तुतोऽर्वाचि काले विगतयोग्यते ।
जाने तृणनृणां तुल्ये शृङ्गारोऽर्हत्यगर्ह्यताम् ॥२३७५॥

यः सर्वंकषनिष्कम्पशेमुषीकः क्षमापतिः ।
धुर्यतां धर्मचर्याभिर्गतः सुकृतशालिनाम् ॥२३७६॥

लब्धबोधिरिवाऽरेर्येश्चक्रे व्यापद्युपक्रियाम् ।
दावप्रदस्य दग्धाङ्गोल्लाघत्वमिव चन्दनः ॥२३७७॥

गुरुसूरिद्विजानाथप्रभृत्युचितयाऽपि यः ।
प्रतिपत्त्या संविभेजे संविभाग्यकुटुम्बकम् ॥२३७८॥

प्रासादान् विजयेशादिदेवव्रातस्य शुद्धधीः ।
सुधादानेन निन्ये च धन्यः कैलासतुल्यताम् ॥२३७९॥

मठदेवगृहारामह्रदकुल्यादियोजने ।
जीर्णोद्धृतिव्यसनिनस्तस्य चिन्ता निरन्तरा ॥२३८०॥

---

2372. a) St SA $P_{1-3}$ °द्वेलित° (for °द्वेल्लित°). After this v. तिलकम्.

2374 b) All Mss read °त्वरां (for °त्त्वाना suggested with St D). —d) All Mss read न दृशां (for नेदृशा suggested with St)

2375. a) All Mss read °तोवाचि (for °तोऽर्वाचि sugggested with D).

2377 c) $P_{1,3}$ °प्रशस्यो, $P_2$ $I_3$ °प्रदस्यो (for °प्रदस्य)

सकृद्दर्शितविद्वेषकार्यः सब्रह्मचारिणाम् ।
स क्रौर्यधाम पर्याप्तमीदृगप्युच्यते जडैः ॥२३८१॥

विश्वाप्यायनसप्तसिन्धुभरणब्रह्मादिसंप्रीणन-
प्रायं कृत्यमुदात्तमेकसमयोपात्तेन दुष्कर्मणा ।
स्वःसिन्धोर्लघुतां गतं सगरजश्रेणीचितास्पर्शना-
ज्ज्ञाता येन जनाः श्मशानमिव सा योग्या किलाऽस्थ्नां स्थितौ ॥

तदन्तरे शिवरथो द्विजः प्रचुरचाक्रिकः ।
कायस्थपाशः पाशेन गलं बद्ध्वा व्यपद्यत ॥२३८३॥

इत्थं पृथ्वीपतिः कृत्वा तत्तत्कण्टकपाटनम् ।
अपेतविघ्नं सौजन्यनिघ्नो व्यधित मण्डलम् ॥२३८४॥

विपक्षावरणापाये प्रायेण पृथिवीभुजः ।
तैक्ष्ण्यमायान्ति जीमूतमुक्ता रविकरा इव ॥२३८५॥

परिणाममनोज्ञत्वं राजरत्नं स्वयं नृपः ।
माधुर्याधिक्यमुत्पाको द्राक्षाद्रुम इवाऽऽययौ ॥२३८६॥

प्रावर्तयत सातत्यात् क्रतून् विततदक्षिणान् ।
विवाहतीर्थयात्रादीन् महितांश्च महोत्सवान् ॥२३८७॥

संविभेजे स्वसंभारैः स क्रिया धर्मचारिणाम् ।
तेजोभिः कुलशैलानामोषधीरिव चन्द्रमाः ॥२३८८॥

---

2381. b) All Mss read °कार्यसब्रह्मचारिणा (for °कार्यः सब्रह्मचारिणाम् suggested with St).

2382. c) D C S′ $P_3$ सुरगज°, SA SL $P_{1,2}$ $I_3$ सरगज° (for सगरज° suggested with St) —cd) D St $P_{1,3}$ $I_3$ SA °स्पर्शना'' ता; St suggests °स्पर्शनात्पूता, St Tr emends °स्पर्शनाज्ज्ञाता (for °स्पर्शनाज्जाता) $P_2$ जना; St Tr emends जन (for जना, vocative case). $P_{1,2}$ $I_3$ °स्था (for °स्थ्ना).

2383. a) All Mss read तदन्तर (for तदन्तरे suggested with St). —b) St $P_{1,2}$ °चक्रि° (for °चाक्रि°).

2384. d) D C S′ °विघ्नो (for °निघ्नो).

2385. a) All Mss except D read °पाय° (for °पाये).

प्रतिज्ञातं सुतोद्वाहप्रतिष्ठादौ पुरौकसाम् ।
तेनौपयिकसामग्रीदानमव्यग्रचेतसा ॥२३८९॥

दारूणामाकराः कोशवृद्धये ये धराभुजाम् ।
नवीचक्रे पुरं सर्वं स्वाधीनान् स विधाय तान् ॥२३९०॥

मज्जतो राजकार्येषु तत्त्वविद्भिर्हरार्चने ।
विस्मितैर्वीक्ष्यते तस्य निष्ठा काष्ठा मुनेरिव ॥२३९१॥

प्राह्णादारभ्य सायाह्नपर्यन्तं चाऽस्य दृश्यते ।
न तत्कृत्यं गता यत्र नाऽध्यक्षत्वं विचक्षणाः ॥२३९२॥

अविचारान्धतमसे विद्या व्यद्योततान्तरा ।
जयापीडादिमेघश्रीसौदामिन्या विलोलया ॥२३९३॥

तेन श्रियं तु विश्राण्य स्थास्नुं रत्नप्रभामिव ।
गुणवैचित्र्यचित्रस्य प्रकाशोऽनश्वरः कृतः ॥२३९४॥

सूरयो येन संग्रामे विक्षतक्षेत्रसंपदाम् ।
ग्रामाणामाग्रहार्केन्दु सान्वयाः स्वामिनः कृताः ॥२३९५॥

विदुषां विततोत्सेधसौधास्तद्विहिता गृहाः ।
व्याप्ताः सप्तर्षिभिर्द्रष्टुमुत्कर्षमिव मूर्धसु ॥२३९६॥

प्रतिभाप्रभवे प्रज्ञोपज्ञे च पथि पान्थता ।
सार्थवाहं तमालम्ब्य निर्दोषा विदुषां स्थिता ॥२३९७॥

---

2390 a) SA $P_2$ $I_3$ कोष° (for कोश°)

2392. a) $P_{2,3}$ $I_3$ SA सायाह्न° (for सायाह्न°).

2393 d) St D C S′ $P_1$ $I_3$ °सौदामन्या (for °सौदामिन्या).

2395. a) D St $SA_1$ $I_3$ $P_{1-3}$ om सग्रामे —c) D C S′ $P_{1,3}$ °ग्रहा· कर्म; $P_2$ $I_3$ SA °ग्रहा कन्दु (for °ग्रहार्केन्दु found in SG *sec manu*).

आसीद् यथाऽऽर्यराजस्य शयानस्याऽप्यतिप्रियः ।
कामं लिङ्गाभिषेकाम्भःसंक्षोभप्रभवो ध्वनिः ॥२३९८॥

निद्राणस्य तथा वेणुवीणादिपरिहारिणः ।
दयितं तस्य निर्द्वेषविद्वज्जल्पविकल्पनम् ॥२३९९॥

काले श्रीललितादित्यावन्तिवर्मादिभूभुजाम् ।
सिद्धं न यत्प्रतिष्ठादि निष्ठां तदधुना गतम् ॥२४००॥

मठदेवगृहेष्वेवं स्वकालप्रभवेषु यत् ।
सर्वेष्वेव कृता तेन निर्व्यपाया व्यवस्थितिः ॥२४०१॥

रत्नादेव्या दृढारूढभर्तृवल्लभताभुवः ।
सर्वप्रतिष्ठाप्रष्ठत्वं विहारः प्रथमं गतः ॥२४०२॥

रिल्हणोऽथ गुणिग्रामबान्धवो धर्मपद्धतौ ।
बभूव पूर्वपथिकः समस्तामात्यसंततेः ॥२४०३॥

तपोधनांल्लब्धवर्णान् धर्मवृद्धांश्च शुद्धधीः ।
विस्रम्भभवनस्थोऽपि शक्तस्त्यक्तुं न यः क्वचित् ॥२४०४॥

कृष्णाजिनोभयमुखीदानमुख्यैः सुकर्मभिः ।
धर्मकन्याविवाहैश्च यस्याऽशून्यत्वमायुषः ॥२४०५॥

सर्वेषामाहिताग्नीनां निष्प्रत्यूहा महात्मना ।
सर्वयागोपकरणैर्येन विश्राणितैः क्रियाः ॥२४०६॥

---

2398. b) All Mss. read °श्रिय (for °प्रिय suggested with D St) Cf. *v.* II. 126.

2401. a) All Mss. read °ष्वेव (for °ष्वेव suggested). —d) St $P_{1,3}$ व्यय° (for व्यव°).

2403 a) All Mss read गुण° (for गुणि° suggested with D).

2404. a) $P_2$ $I_3$ SA तपोधना° (for तपोधना°)

2405. a) C S′ °मख° (for °मुखी°).

भोगान् बुभुजिरे भव्यान् सत्रे सूत्रितविस्मये ।
यस्य वर्णाश्चतुष्षष्टिः कुदृष्ट्यस्पृष्टचेतसः ॥२४०७॥

अग्रहारगणोदग्रैर्विततैर्मठसेतुभिः ।
पुरे परिष्कृते येन द्वयोः प्रवरसेनयो ॥२४०८॥

आद्ये प्रवरभूभर्तुः पत्तने प्रत्तविस्मयः ।
प्राप्तः प्रतिष्ठाप्रष्ठत्वं यत्कृतो रिल्हणेश्वर ॥२४०९॥

लोकान्तरगतां कान्तां कृतिनोद्दिश्य सुस्सलाम् ।
भलेरकप्रपास्थाने विहारस्तेन कारितः ॥२४१०॥

मार्जार्यास्तिर्यगुचितस्नेहविस्मृत्यपोहतः ।
मृतामनुमृतायास्तन्नाम्ना यः ख्यातिमागतः ॥२४११॥

तद्भर्तुरीर्ष्याकालुष्ये तस्या दूराग्रगा पुरः ।
प्रदेशे मानुषीवाऽऽसीत् प्रिया क्रीडाबिडालिका ॥२४१२॥

तीर्थप्रस्थानदिवसादारभ्याऽस्या विराविणी ।
उत्सृजन्त्याहृतं भोज्यं सा शुचा जीवितं जहौ ॥२४१३॥

आरोहति परां काष्ठां प्रतिष्ठाविविधाध्वना ।
दिद्दा नृपतिपत्नीषु मन्त्रिस्त्रीषु तु सुस्सला ॥२४१४॥

श्रीचङ्कुणविहारं या यातं नामावशेषताम् ।
अश्मप्रासादवेश्मादिकर्मणा निर्ममेऽधुना ॥२४१५॥

---

2408. a) C S′ $P_1$ °गुणो° (for °गणो°).
2410. c) C S′ भिक्षोरेक° (for भलेरक°, cf. v. VII. 1240).
2413 c) $P_{1,2}$ $I_3$ SA उत्सज° (tor उत्सृज°).
2414. b) All Mss. read °धुना (for °ध्वना suggested with St D).

अरघट्टप्रबन्धान्धुच्छात्रशालादिकर्मभिः ।
तस्याः संपूर्णतां पुण्यप्रकारा निखिला गताः ॥२४१६॥

पूर्वराजकुलाखण्डस्थण्डिलव्यापिनाऽखिलम् ।
तद्विहारेण नगरं नीतं नेत्राभिरामताम् ॥२४१७॥

प्रापि प्रतिष्ठयैवाऽऽशु यक्ष्मक्षपितया तया ।
विपत्तिः श्रीसुरेश्वर्यां प्राज्यसायुज्यदूतिका ॥२४१८॥

मठाग्रहारा धन्येन वल्लभाभिधया कृताः ।
नाऽभीष्टं लेभिरे नाम ख्यातिः पुण्यैर्विना कुतः ॥२४१९॥

अग्रहारमठांस्तद्वदुदय· कम्पनापतिः ।
कृत्वाऽपि स्वाभिधामेव तत्संबद्धां सदाऽशृणोत् ॥२४२०॥

उदयद्वारपतिना सह ब्रह्मपुरीगणैः ।
कृते प्रष्ठे मठे शोभां लेभे पद्मसरस्तटः ॥२४२१॥

शृङ्गारतन्त्रपतिना श्रीद्वारेऽप्यग्र्यजन्मना ।
प्रत्यष्ठापि मठोद्यानदीर्घिकाद्यनघात्मना ॥२४२२॥

स्नानकोष्ठमठब्रह्मपुरीसेत्वादिकर्मणा ।
सोऽलंचकाराऽलंकारो बृहद्गञ्जाधिपो धराम् ॥२४२३॥

बुधः सदौषधीशान्तिहेतोर्जातः कलावतः ।
यः कविर्दानवत्वं च ख्यातस्त्यागेन योऽजयत् ॥२४२४॥

---

2416. [d]) St (before corr. in Tr) SA SL $P_{1-3}$ $I_3$ °प्राकारा (for °प्रकारा).

2418. [a]) All Mss read °ष्ठये° (for °ष्ठयै° suggested with St. Tr).

2424. [c]) D $P_2$ °वत्वे (for °वत्व)

नृसिंहसेवी निर्हिंसहिरण्यकशिपुप्रदः ।
वराहसमये दत्तगौश्च योऽपूर्ववैष्णवः ॥२४२५॥

भट्टारकमठाभ्यर्णे पूर्णवार्धाविव प्रहिः ।
मठः शृङ्गारभट्टस्य ख्यात्याऽनौचित्ययोज्झितः ॥२४२६॥

सांधिविग्रहिको दार्वाभिसारोर्वीभुजोऽकरोत् ।
अष्टमूर्तेर्जट्टनामा प्रतिष्ठां पुण्यकर्मठः ॥२४२७॥

पुष्पाकरप्रणयभूः सुभगा विभूति-
रेकस्य हन्त करवीरतरोर्द्रुमेषु ।
पुष्पाणि यस्य सफलीकुरुते स्वयं तत्
प्रादुर्भवत् किमपि लिङ्गमनङ्गशत्रोः ॥२४२८॥

विभूत्या संविभक्तेषु भूभुजाऽखिलमन्त्रिषु ।
उत्कर्षकोटिं भुट्टाख्यः परं जल्हानुजोऽर्हति ॥२४२९॥

स्वयंभूः प्रकटीभूय पूजां स्वीकुरुते स्वयम् ।
ज्येष्ठरुद्रो वसिष्ठस्य यस्य वा बालकेश्वरः ॥२४३०॥

सविहारमठोदग्रवेश्मभिः कलुषोज्झितम् ।
तेन तत्र कृतं भुट्टपुराख्यं पुटभेदनम् ॥२४३१॥

नगरेऽपि हरः प्रत्यष्ठापि भुट्टेश्वराभिधः ।
सरश्च मडवग्रामे धर्मविभ्रमदर्पणः ॥२४३२॥

---

2425. b) D C S′ $P_{1,3}$ °पुच्छिद ; $P_2$ °पु॰॰ द , $I_3$ SA °पुद॰ (for °पुप्रद. suggested with St)

2429. c) D (before suggestion) C S′ $P_3$ $I_3$ SA उत्कट्ट°; $P_1$ उत्कठ°, $P_2$ उत्कठा° (for उत्कर्ष° suggested with St D)

2431 b) All Mss read °ज्झित (for °ज्झितम् suggested with St D).

2432 c) St $I_3$ मडवा° (for मडव°).

नीत्वा प्रतिष्ठां वैकुण्ठमठादि स्वविहारभूः ।
रत्नादेव्या दृढं चक्रे स्वार्थग्रथनसुस्थिरा ॥२४३३॥

रत्नापुरे बहुद्वारमहार्घे निरघो मठः ।
धत्ते सुकृतहंसस्य स्फीतवीतंसविभ्रमम् ॥२४३४॥

मृत्युंजयो राजतेऽस्याः सुधाधौतान् भजन्गृहान् ।
जनस्याऽनित्यतोच्छित्त्यै श्वेतद्वीपं सृजन्निव ॥२४३५॥

गोकुलानां विधातारो गोकुले विहिते तया ।
गणिताः शूरवर्माद्याः सतृणाभ्यवहारिणः ॥२४३६॥

गवामव्याहतस्वैरसंचारचरकाङ्क्षिते ।
तत्र वैतस्ततोयाढ्ये यदपोढामयं वपुः ॥२४३७॥

मुकुन्दस्तत्र साश्चर्यसौन्दर्यौदार्यमन्दिरम् ।
अश्वा गोवर्धनधर. सिद्धो ना विश्वकर्मणः ॥२४३८॥

मठप्रतिष्ठां कृत्वा सा नन्दिक्षेत्रेऽकरोत् स्थितिम् ।
मठान् जयवनाद्येषु स्थानेषु च मनोरमान् ॥२४३९॥

दार्वाभिसारेऽप्युर्वीशसौन्दर्यौदार्यमन्दिरम् ।
स्वनामाङ्कं पुरं चक्रे तथा शक्रपुरोपमम् ॥२४४०॥

---

2438. SL om. *cd*. —c) D $P_{1-3}$ अश्वाविव°, $I_3$ अद्वानोव° (for अश्वा गोव°). —d) C सिद्धौ (for सिद्धो) न is suggested with St. Tr. (for ना found in all Mss ).

2439. SL om. this *v*. —a) D St $P_{1-3}$ SA om. प्रतिष्ठा with a *lacuna*. —b) D St $P_{1-3}$ $I_3$ °रोत् क्षितिम् (for रोत् स्थितिम् ). —c) D St $P_{1-3}$ $I_3$ SA ···जय°, C S′ विहारान् य° (for मठान् जय° suggested).

2440. a) SA दार्वासारेप्युर्वी°; C S′ दार्वागारेष्वप्यूर्वी°; $P_1$ दार्वाणरेप्युर्वी°; $P_2$ दार्वागारे च प्युर्वी°; $P_3$ दावाभिसारेप्युर्वी°; $I_3$ दार्वागारेप्युर्वी° (for दार्वाभिसारेऽप्युर्वी°). —b) St C S′ $P_{1,2}$ $I_3$ °सुन्दरौ° (for °सौन्दर्यौ°).

उद्दिश्योपरतान् मान्यमहत्तरमुखानपि ।
प्रतिष्ठा विविधाश्चक्रे सा राज्याश्रितवत्सला ॥२४४१॥

एवं सर्वाङ्गमामुक्तालंकृतेरथ स क्षितेः ।
विशेषकाभं भूभर्तृवृषा स्वमकरोन्मठम् ॥२४४२॥

अनुत्सिक्तेन यो दत्तभूरिग्रामो महीभुजा ।
तज्ज्ञैरारोपितः ख्यातिं मुख्यः सिंहपुराख्यया ॥२४४३॥

व्यधात् कारपथेशस्य दौहित्रः सिन्धुजान् द्विजान् ।
निबिडान् द्रविडाश्चाऽत्र प्राक् सिद्धच्छत्रमध्यगान् ॥२४४४॥

किं वा मठादिनिर्माणस्तुत्या तस्य व्यधत्त यः ।
भूयः सग्रामनगरं कृत्स्नं कश्मीरमण्डलम् ॥२४४५॥

जीर्णारण्यसधर्माऽयं कालदौरात्म्यतो भवन् ।
देशो धनजनावासैस्तेन भूयोऽपि योजितः ॥२४४६॥

आरम्भात् प्रभृति क्ष्मापे दीक्षितेऽभीष्टदत्तिषु ।
शिल्पिप्रायैरपि प्रायो मठदेवगृहाः कृताः ॥२४४७॥

सत्कोशांशुकरत्नादौ निरसूयेन भूभुजा ।
साधारणीकृते पौरास्तांस्तांश्चक्रुर्महोत्सवान् ॥२४४८॥

अकाण्डतुहिनापातोदीपाद्यैरप्युपद्रवैः ।
नष्टेषु शालिषु क्षीणं सुभिक्षं तत्र न क्षणे ॥२४४९॥

---

2442. c) D C S′ $P_1$ विशेषकाम (for विशेषकाभ).

2445. c) $P_{1-3}$ SA C S′ सग्राम° (for सग्राम°)

2448. c) C S′ $P_1$ पौरा° (for पौरा°).

2449. c) D (before suggestion) $SA_1$ (after corr.) C S′ $P_3$ °लिष्वक्षी°; $P_{1,2}$ $I_3$ °लिष्टक्षी° (for °लिषु क्षी° found in $SA_1$ *Prima manu*).

अद्भुतं चाऽभवद् वाचः श्रुता यन्निशि रक्षसाम् ।
केत्वाद्युत्पातजातं च दृष्टं नष्टाश्च न प्रजाः ॥२४५०॥

कोष्ठेश्वरानुजश्छुड्डनामा विहितविप्लवः ।
आहवैर्गूढदण्डैश्च राज्ञा निन्येऽन्तकान्तिकम् ॥२४५१॥

चक्रे विक्रमराजादीन् भूपानुन्मथ्य पार्थिवः ।
प्ररोहं गुल्हणादीनां राज्ञां वल्लापुरादिषु ॥२४५२॥

प्रजेशान् कान्यकुब्जादावजर्येण नृपार्यमा ।
स व्यधाद् भव्यभूभोगवैभवानभिमानिनः ॥२४५३॥

विद्योतमाने निश्चोद्यैर्मन्त्रैस्तत्रैवमेकदा ।
भेजे जीवितदारिद्र्यं दरद्राजो यशोधरः ॥२४५४॥

स भूम्यनन्तरोऽप्यन्तरज्ञो राज्ञोऽतिसेवया ।
विपत्तौ प्रकृतिक्रान्तसंतानश्चिन्त्यतामगात् ॥२४५५॥

निकृत्याऽस्य निजामात्यौ विड्डसीहाभिधो यतः ।
संभुज्य दयितां राज्यमप्रौढतनयेऽग्रहीत् ॥२४५६॥

वशीकृत्य शनैर्देशं नाममात्रनृपं शिशुम् ।
उच्छेत्तुमैच्छद् यावत्तं स जिघृक्षुः स्वयं क्षितिम् ॥२४५७॥

अन्योऽमात्यः पुरस्कृत्य यशोधरसुतं परम् ।
तावत्तेन समं भेजे पर्युकाख्यो विपर्ययम् ॥२४५८॥

---

2451. a) C S′ कौन्धे° (for कोष्ठे°) —d) $P_2$ $I_3$ SA °न्तिका° (for °न्तका°).
2453. a) D (before suggestion) $P_{1,3}$ $I_3$ प्रजेशा, C S′ $P_2$ प्रजेश॰; SA प्रजेशा (for प्रजेशान् suggested with St D).
2456. b) C S′ °सिंहा° (for °सीहा°).
2457. b) All Mss. read °शिशु नृपम् (for °नृप शिशुम् suggested with St D).
2458. After this *v.* युग्मम् .

कश्मीरान् पृष्ठतः कृत्वा द्वैराज्यं तत्र कुर्वति ।
उत्सृज्य सज्जपालादीन् सर्वकार्यभरक्षमान् ॥२४५९॥

हेवाकप्रतिपत्त्यन्याभिधमौग्ध्यनिरुद्धधीः ।
सर्वाधिकाराद्यारोपान्मन्यमानोऽभिमानिताम् ॥२४६०॥

पर्युकाजर्यतः साज्जेरप्रौढमनुजं निजम् ।
प्रहिण्वानोऽनुमन्त्रित्वं मन्त्रज्ञोऽप्यभजन् नृपः ॥२४६१॥

अपूर्वमण्डलारब्धावाटोपाद्धामशालिनः ।
क सर्वंकषनिष्कम्पप्रतिभाः कार्यवेदिनः ॥२४६२॥

क बालबालिशप्रायो नष्टव्यवहृतिर्जनः ।
धिक्परीपाकविषमं स्वाच्छन्द्यं मेदिनीभुजाम् ॥२४६३॥

कार्यापेक्षविपक्षैः स्वैरिच्छन्त्युद्रिक्तताच्छिदाम् ।
सैन्यक्ष्मादुर्गकोशादेर्न पश्यन्त्यन्तरज्ञताम् ॥२४६४॥

प्रक्रियामात्रतो मन्त्रं गृह्णन्ति क्षित्यनन्तराः ।
कृतसाहायकैरेव चिन्त्या मित्रमुखा द्विषः ॥२४६५॥

युक्त्यारब्धविधौ तत्र वैरिसाहायकग्रहे ।
क वैधेया बकप्रायाः कार्यसंदर्भवेदिनः ॥२४६६॥

---

2460 a) All Mss. read °पत्त्या° (for °पत्त्य° suggested).

2461 ab) $P_1$ om D C S′ $P_{1,2,3}$ सुज्जे°; $I_3$ SA सज्जे° (for साज्जे° suggested with St) —c) St °ण्वतो°, $P_{1,2}$ °स्वातो°, $P_3$ °ण्वातो°, S′ °ण्यातो°, $I_3$ °म्वातो° (for °ण्वानो°) After this *v.* तिलकम् .

2463. After this *v* युग्मम् .

2464. a) D C S′ °क्षैस्तैरि°, $P_{1-2}$ $I_3$ °क्षैस्त्वैरि° (for °क्षै स्वैरि°) —d) D (before suggestion) $P_{1,3}$ $I_3$ °र्न श्यन्त्यन्त°, $P_2$ °र्न · शक्नुन्त°, C S′ °र्न शसन्त्यन्त°, St SA °र्न ·शन्त्यन्त°, St suggests °र्न विशन्त्यन्त° (for °र्न पश्यन्त्यन्त° suggested with D)

2465. d) C S′ चित्राचि°, $P_{1,2}$ $I_3$ चित्र्या मि°, $P_2$ शन्त्या मि° (for चिन्त्या मि°).

2466 c) All Mss. read वैधेयान्बकप्रायान् (for वैधेया बकप्रायाः suggested with St)

दरद्राजद्रुमोऽन्योन्यभेदकूलक्षयाच्च्युतः ।
क्रष्टुं नाशक्यताऽप्रौढैः स्रोतोभिरिव मध्यगः ॥२४६७॥

पर्युकात् संकटे कार्ये तं तमुत्कोचमिच्छतः ।
स दुग्धघातमादातुमप्यासीदलसक्रमः ॥२४६८॥

पर्युकेण समं विड्डसीहः संधिं निबद्धवान् ।
यथागतं गते साज्जौ कश्मीरेन्द्रेऽग्रहीद्रुषम् ॥२४६९॥

सर्वाधिकारप्रवगाचिरसंचारभूरुहः ।
प्रसङ्गे तत्र शृङ्गारो मृत्युसौहित्यकार्यभूत् ॥२४७०॥

आलक्ष्मकान्तात् सर्वाधिकारोऽस्थादद्वितीयया ।
वृत्त्या ततस्तु शतधा निर्झराम्भ इवाऽभवत् ॥२४७१॥

अन्येऽप्यमात्याः सामत्याद् भर्तुर्माहात्म्यभागिनः ।
प्रमयं समये तस्मिन् दैवात् किमपि लेभिरे ॥२४७२॥

प्रशंसामानृशंसस्य किं विदध्मो धराभुजः ।
मृतामात्यार्भकापत्यं निधत्ते यः पितुः पदे ॥२४७३॥

प्रवर्तिता त्वमात्यानां भृत्यैः पद्धतिरद्भुता ।
निर्वैलक्ष्याः प्रभोर्लक्ष्मी जह्रुः स्वगृहिणीमिव ॥२४७४॥

भूभर्तुः प्राभृतीकृत्य मृतस्य स्वामिनः श्रियम् ।
संतानस्य विभूत्यर्थं कृत्वा कार्यं हि तेऽहरन् ॥२४७५॥

---

2467. ab) C S′ $P_2$ $I_3$ SA °न्योन्य भे° (for °न्योन्यभे°).

2469. b) C S′ °सिह , $P_2$ °मीह (for °सीह) —c) D C S′ सुज्जौ, $P_{1-3}$ $I_3$ SA सज्जौ (for साज्जौ suggested with St).

2470. a) D $P_3$ °प्रवरा°, C S′ °प्रवहा° (for °प्रवगा°).

2471. d) $P_{1-3}$ $I_3$ SA निर्भरा° (for निर्झरा°)

गङ्गाधिपे विश्वनाम्नि विपन्ने रक्षिता परम् ।
एकेन सहजाख्येन सहायानां महार्थता ॥२४७६॥

नाऽध्यारुरोहाऽधिकारं पार्थिवेनाऽर्थितोऽपि यः ।
स्वामिसूनोष्टिष्टनाम्नो बुद्धयै साहायकं व्यधात् ॥२४७७॥

निष्ठायामप्रतिष्ठत्वं दृष्ट्वाऽपि प्रभविष्णुभिः ।
धिक्परम्परया भृत्याः प्रवर्ध्यन्तेऽधिकाधिकम् ॥२४७८॥

आसीदाचमनोपयोगि कलशे स्रष्टुर्जगल्लङ्घन-
क्रान्ताङ्घ्रिक्रमहार्यथाऽसुररिपोस्त्रैस्रोतसं यत्पयः ।
शंभुस्तन्निदधे स्वमूर्धनि जडेऽप्येकप्रयुक्तादृतौ
स्युः सर्वेऽप्यवशा गतानुगतया गाढादराः स्वामिनः ॥२४७९॥

सुज्जिनिर्वासनप्राप्तप्ररोहो दुर्नयद्रुमः ।
साज्जिजाड्यकृताप्यायः क्रमेणाऽऽसीत् फलोन्मुखः ॥२४८०॥

द्वित्राः समाः समन्युः स विड्डसीहस्ततोऽभवत् ।
अकुण्ठराज्याद्युत्कण्ठं दूतैरकृत लोठनम् ॥२४८१॥

दूरादखण्डितोत्थानः शूरमाश्रित्य भूपतिम् ।
जीवन् कृषिवणिज्यादिकर्मणा स सबान्धवः ॥२४८२॥

दरदा मन्त्रिणां जातज्ञातैर्यैरभियोगभाक् ।
चक्रेऽलंकारचक्राद्यैर्डामरैः सह चक्रिकाम् ॥२४८३॥

---

2477. d) D (after suggestion) C S′ वृद्धयै (for बुद्धयै).
2478. d) St $P_{2,3}$ $I_3$ प्राव° (for प्रव°).
2480. a) $P_2$ $I_3$ SA सुज्जिर्नि° (for सुज्जिनि°) —c) D suggests सौज्जि° (for साज्जि°).
2482 a) $P_2$ $I_3$ SA दूरा‴खण्डि°; D C S′ $P_{1-3}$ दूरादाखण्डि° (for दूरादखण्डि°). —c) C $P_2$ $I_3$ SA जीवत्कृ° (for जीवन् कृ°).
2483. After this *v* $P_{2,3}$ add तिलकम् (for युग्मम् )

सोऽप्यद्रिदुर्गस्वाम्यस्य प्रथमप्रस्थितौ सुहृत् ।
क्षुद्रो जनकभद्राख्यः पार्श्वे लिप्सोर्व्यपद्यत ॥२४८४॥

कर्णाढकादावभवत् स्थाने स्थाने विलोक्य तम् ।
प्रस्थितं कस्यचिद् द्रोहे बुद्धिः कस्याऽपि साधुता ॥२४८५॥

तं तथा विपुलारम्भमपि शाठ्यादसंभ्रमम् ।
प्रविविक्षुमुपैक्षिष्ट कौसीद्यानुद्यमो नृपः ॥२४८६॥

पोषिते प्रेषितश्रीकैरुत्पिञ्जे विप्लवैषिभिः ।
अथोदयद्वारपतिः प्रैषि विश्वंभराभुजा ॥२४८७॥

संगृह्णता चमूस्तेन पुरे शंकरवर्मणः ।
प्राप्तोऽलंकारचक्रस्य पार्श्वमश्रावि लोठनः ॥२४८८॥

अपि विग्रहराजाख्यः सूनुः सुस्सलभूपतेः ।
भोज सल्हणजन्मा च श्रुतौ तेन सहागतौ ॥२४८९॥

अथोपहत्या उत्थान एव तेषां स सत्वरः ।
मार्गं बहुदिनोल्लङ्घ्यमेकेनाऽह्ना व्यलङ्घयत् ॥२४९०॥

सयूथ्यकन्थाग्रथनासिद्धेर्यातो विधेयताम् ।
तदास्कन्दहतस्पन्दः स पलायिष्ट डामरः ॥२४९१॥

---

2484. a) C S′ $P_{1,2}$ $I_3$ SA साप्यद्रि°; $P_3$ सौम्याद्रि° (for सोऽप्यद्रि°).

2485 a) D C S′ कर्णाटका°, St $P_{1,2}$ $I_3$ कर्णाहका° (for कर्णाढका° cf *v.* VIII 2525=the modern *Karnāh* being the northern part of the Muzaffarabad district and the Krsnagangā valley).

2486 ab) $P_3$ om.

2488 a) All Mss. read च मूर्तेन (for चमूस्तेन suggested with St D).

2489 c) All Mss read सुल्हण° (for सल्हण° suggested with St). —d) $P_1$ °गत.; $P_2$ $I_3$ SA °गता (for °गतौ).

2490. a) D St $P_{1-3}$ $I_3$ °पह ·त्थान, C S′ °पचित उत्थान (for °पहत्या उत्थान suggested with St, cf. *v.* VIII. 2513).

सिन्धोर्मधुमतीमुक्ताश्रियोरन्तःस्थितं ततः ।
शिरश्शिलाभिधं कोट्टमथ तैरधिशिश्रिये ॥२४९२॥

गहने ब्रुडितः कोट्टे स्थितः किं वा स इत्यसौ ।
न निश्चिकाय द्वारेशो भ्राम्यन् दीर्घासु भूमिषु ॥२४९३॥

अथोपलब्धतद्दुर्गारोहणेऽस्मिन्नशङ्क्यत ।
दैवेनाऽपि न भूर्भर्तुः प्रभावो निष्पराभवः ॥२४९४॥

उत्थानोन्मुखतां सर्वेऽप्युत्पिञ्जे तत्र दस्यवः ।
पाल्वलास्तिमयो वर्षपृथक्कृत इवाऽभजन् ॥२४९५॥

तैस्त्रिल्लकादिभिर्गूढवैकृतैरथ लोठनः ।
पार्थ्वीहरिः पुनश्चक्रे मायाचतुरचाक्रिकः ॥२४९६॥

पुरग्रामादिदग्धारमसाध्यमथ धावताम् ।
पदे पदे कृच्छ्रगतं स्वपक्ष्यास्तमरक्षिषुः ॥२४९७॥

दिक्चक्रे नियतेर्भ्राम्यन् दृश्यादृश्यः स सर्वतः ।
कल्पात्ययोदयी ब्रह्मपुत्रः केतुरिवाऽभवत् ॥२४९८॥

श्रान्तैरमात्यैर्निर्बद्धे संधौ कालानुरोधतः ।
मेने मडवराज्योर्वी हारितेवाऽखिला जनैः ॥२४९९॥

---

2492 b) St °श्रिया अन्त °, D C S′ $P_3$ °श्रियमन्त°; $P_{1,2}$ $I_3$ SA SL °श्रियरन्त°, SG *sec manu* °श्रिय अन्ते (for °श्रियोरन्तः° suggested with St Tr ).

2494. a) All Mss read °पालब्ध° (for °पलब्ध° suggested with St. Tr )

2495 c) C S′ पाला°, $P_{1,3}$ पाल्वा° (for पाल्व°). —d) All Mss. read °भवन् (for °भजन् suggested with St D)

2496. b) St. Tr. emends लोष्टक or its prakritized form लोठक (for लोठन॰, cf. *vv* VIII. 2912, 2799 and St. Tr. fn. of this *v* ). —c) D $P_{1-3}$ $I_3$ SA पा···हारिः; C S′ पालहारिः (for पार्थ्वीहरि suggested with St, cf. *vv*. VIII. 2748, 2759, 2793, 2837) —d) All Mss read °चाक्रिकै (for °चाक्रिक. suggested with St).

2497. a) D C S′ °दग्ध्वार° (for °दग्धार°).

2499. a) All Mss read °निर्बन्धे (for °निर्बद्धे suggested with D).

असंवृत्तप्रतीकारतयाऽऽरोहत्सु वैरिषु ।
तदन्तरेऽथ संमन्त्र्य धन्यं प्रास्थापयन्नृपः ॥२५००॥

तत्स्कन्धारोपिते कार्यें व्रीडां गच्छेत् तटस्थताम् ।
विपर्यासमथ द्वाराधीश इत्यभ्यधाज्जनः ॥२५०१॥

भिक्षुर्मल्लार्जुनस्त्वासीदेक एव त्रयस्त्वमी ।
संहता हन्त दुस्साधा दध्युश्चेत्यखिलाः प्रजाः ॥२५०२॥

द्वाराधिपस्त्वहेवाकव्यवहारो महीपतेः ।
सिद्धिं स्वस्याऽप्रसिद्ध्याऽपि वाञ्छन् ह्युद्योमोऽभवत् ॥२५०३॥

एकाकी यः किल न भजते मूढतां भर्तृकार्ये
नौदासीन्यं श्रयति च रुषा बह्वधीने च तस्मिन् ।
निर्हेवाकव्यवहृतितया साध्यसिद्धिं किलेच्छं-
स्तादृङ्मन्त्री प्रभवति परं नाऽल्पपुण्यस्य राज्ञः ॥२५०४॥

पञ्चचन्द्रे मृते तस्याऽनुजं राजोपवेशने ।
न्यधाद् यं षष्ठचन्द्राख्यं सोऽप्यारब्ध्यै विनिर्ययौ ॥२५०५॥

द्विबाहुकादयो मुख्याश्चारणैः सह गायकैः ।
धन्यमेवाऽन्वयुर्बाह्याश्चाऽन्ये राजोपजीविनः ॥२५०६॥

धन्यादिषु तिलग्रामं कोटिसिन्धुतटाश्रयम् ।
श्रयत्स्वरुध्यद् द्वारेशो द्रङ्गस्थः पृष्ठपद्धतीः ॥२५०७॥

---

2501. [a]) $P_{2,3}$ $I_3$ SA तत्स्कन्दा° (for तत्स्कन्धा°)

2506. [b]) D $P_3$ मुख्या ˙ , St मुख्य , $P_2$ SA मुख , $I_3$ मुख्य ˙ (for मुख्याश्चारण ) —[c]) $P_1$ धान्य° (for धन्य°)

2507 [b]) D C S′ $P_1$ कोटि° (for कोट°). —[c]) D $P_{1-3}$ $I_3$ SA श्रय˙˙ दृद्रा°, C S श्रयत्स्वगच्छद् द्रा°; St. Tr. suggests श्रयत्स्ववधानादद्रा° ( for श्रयत्स्वरुध्यद् द्रा° suggested)

हठप्रवेशायोग्याजिमुख्यहेवाकवर्जितः ।
शोषयन् द्विषतो धैर्यगम्भीरं स व्यवाहरत् ॥२५०८॥

कुठारिकादिभिः कारुवृन्दैर्मन्दिरपद्धतीः ।
धन्यो मधुमतीतीरे नगरस्पर्धिनीर्व्यधात् ॥२५०९॥

निर्भ्रान्तं द्रुमसंबाधं सनिकेता वनस्थलीः ।
कटकं सर्वभोगाढ्यं शक्तः परिवृढोऽकरोत् ॥२५१०॥

देशे भूरितुषारोग्रहिमतौं भाग्यसंपदा ।
भूभर्तुरभियोग्यैव भूरभूद् भानुभूषिता ॥२५११॥

भुवनाद्भुतसंभारप्रेषणं विजयैषिणः ।
द्वैराज्यमीलिताज्ञेऽपि काले राज्ञो न खण्डितम् ॥२५१२॥

उत्थान एवोपहतिं भये यास्यत्यगात् परम् ।
भारोढिपीडितग्राम्याक्रन्दः क्षान्तिचरूपमाम् ॥२५१३॥

दीर्घप्रवासनिर्वेदाच्चलितान् दर्शयन् रुषम् ।
स्थास्नूंश्च तोषयन् दायैः स्थैर्यं निन्ये नृपश्चमूः ॥२५१४॥

इत्थं त्रिचतुरान् मासांस्तिष्ठद्भिरपि निष्ठुरैः ।
नैवाऽऽदातुमशक्यन्त कटकैः कोट्टसंश्रयाः ॥२५१५॥

तेषां हि वीवधासारनिरोधादीनि द्दप्यताम् ।
अप्रियाणि न जातानि दैन्यदायीनि कानिचित् ॥२५१६॥

---

2508. S′ om. this *v.*
2511 b) $P_{1,2}$ °मतौ, $I_3$ °मन्तौ (for °मतौं).
2512. b) C S′ दिग्ज° (for विज°).
2513. a) SA $I_3$ एवौपह…भये, D C S′ $P_1$ एवोपहतभये, $P_2$ एवौपहतभये; $P_3$ एवोपह… भये (for एवोपहति भये suggested with St). —d) D SA $I_3$ क्रन्द क्षान्तिचरू°, C S′ $P_{1-3}$ क्रन्दं क्षान्तिचमू° (for क्रन्दः क्षान्तिचरू° suggested with St, cf *v* VII. 15).
2514. b) C S′ $P_{2,3}$ $I_3$ °श्चलितां, SA °चलिता; $P_1$ °च्चलिता, St suggests °चलिता (for °च्चलितान्). —c) St suggests स्थास्नूश्च (for स्थास्नूंश्च).
2515. d) C S′ $P_{1,2}$ $I_3$ SA °सशया, $P_3$ °सश्रयै. (for °सश्रया).

चिकीर्षवस्तुषारान्ते स्वविभूतिप्रकाशनम् ।
तस्थुरङ्कुरितोल्लासाः पर्वता इव डामराः ॥२५१७॥

कृषिं कृषीवलैर्वेदपाठमुत्सृज्य च द्विजैः ।
उत्पिञ्जसज्जैर्ग्रामेषु सर्वतः शस्त्रमादधे ॥२५१८॥

प्रतीक्षमाणाः प्रालेयप्रलयं मार्गभूभृताम् ।
दारदास्तुरगानीकैः सज्जैस्तस्थुर्जिगीषवः ॥२५१९॥

मिहिकासंहतेः कालतूलतल्पकृतेर्दधत् ।
पातभीतिं राजसेनाजनः शश्वदवेपत ॥२५२०॥

इत्थं प्रत्यर्थिसामर्थ्यपरमार्थापरीक्षणात् ।
क्ष्माभृन्मिथ्यैवमारेभे संदेहं च जयेऽभजत् ॥२५२१॥

वैदग्ध्यदिग्धमनसामयमेक एव
कोऽप्यस्ति वञ्चनविधेरुचितः प्रकारः ।
येनाऽऽत्मना किल विशङ्कितशक्तयस्ते
मुग्धेऽपि वैरिणि विचारहतोद्यमाः स्युः ॥२५२२॥

प्रवादमात्रसाराद्यस्त्रसेत् परिकरादरेः ।
स्वयैव तस्य विघ्न्येत सिद्धिश्चिन्तान्धया धिया ॥२५२३॥

विध्येदाशु शिलीमुखैः प्रवितरेत् पत्रैरवस्कन्दनं
बध्नीयात् तदिदं गुणैः परिकरैर्मिथ्या प्रसिद्धैरिति ।
स्याच्चेदम्बुरुहं द्विपस्य भयकृच्चिन्तासहैः साहसं
प्रत्यूहेत ततो निजैरपघनैरप्येतदुन्मूलने ॥२५२४॥

---

2518. [a]) C S' $P_1$ $I_3$ कृषं (for कृषिं). —[d]) D $I_3$ °ददे (for °दधे).

2520. [a]) C S' D $P_{1-3}$ $I_3$ SA हिमिका° (for मिहिका° found in SG *sec. manu*) —[cd]) All Mss. read जनो राजसेना (for राजसेनाजनः suggested).

लोठनाद्यैर्हि कर्णाहाभिस्तीर्णैस्तैः कथंचन ।
प्राप्तेऽलंकारचक्रेऽग्रे राज्यमज्ञायि निर्जितम् ॥२५२५॥

मिथ्यैव ग्रथिता कन्था स्वयूथ्यैः कथमन्यथा ।
तस्मिन्नमन्दमास्कन्दं धावन् द्वाराधिपो ददौ ॥२५२६॥

प्रत्यवस्थित्यसामर्थ्यात् ततः कोट्टं व्यसर्जयत् ।
स राजबीजिनस्तांश्च परेद्युः स्वयमन्वगात् ॥२५२७॥

कोट्टाद्रिः सलिलस्याऽन्तः कृशोधः पृष्ठदैर्घ्यभाक् ।
स तैर्वैसारिणग्रासव्यग्रो बक इवैक्ष्यत ॥२५२८॥

निस्सामर्थ्यं तद्विलोक्य गजागारमिवाऽगजम् ।
तत्यजुर्विजयाशंसां भयं चोदवहन् हृदि ॥२५२९॥

ततः शरैर्दृषद्वर्षैर्बाध्याश्चेतो विरोधिनः ।
अर्णसो रक्षणमितो रक्ष्या यन्त्रोपला इतः ॥२५३०॥

इत्थं स तैरभिदधद् धैर्यमादाय डामरः ।
मेने स्वगुप्तिमात्रार्थी न युद्धे बद्धनिश्चयः ॥२५३१॥

ततः कन्दलितास्कन्दे तिलग्रामे द्विषद्बले ।
प्रतीकाराक्षमे दस्यौ ते चिन्ताक्षामतां दधुः ॥२५३२॥

विस्नुताविस्नुतप्रज्ञासौष्ठवो लोठन पुनः ।
डामरं कृत्यसंपूर्णमगूढं तमगर्हत ॥२५३३॥

---

2525 a) For कर्णाह cf fn v VIII 2485.

2528. b) $P_{1-3}$ $I_3$ SA कृषोध·, C S′ कृशौध· (for कृशोध). —c) $P_{1-3}$ $I_3$ SA °सारण° (for °सारिण°).

2530. a) C S′ $P_{1,2}$ $I_3$ SA °द्विष° (for °दृष°)

2531. ab) D $P_{1,3}$ $I_3$ °भिरुद्धैर्या · दा°; C S′ °भिरुद्धैर्य्यावदा°; SA °भिदद्धैर्यादा°; $P_2$ °भिरुद्धैयादा°; St suggests °भिदधद्धैर्यादा° (for °भिदधद् धैर्यमादा° suggested) After this v. युग्मम्.

2532. b) D $P_1$ $I_3$ तिला° (for तिल°). —d) C S′ °क्षम° (for °क्षाम°).

2533 a) D C S′ $P_{1-3}$ विस्नावापि स्नुत°, $I_3$ विस्नुवापि स्नुत°, St विस्नवाविस्नुत° (for विस्नुताविस्नुत° suggested).

भोजस्तूद्विजितं यन्नो द्रोहो रोहेदिति ब्रुवन् ।
रुद्ध्वा पितृव्यं तं व्याजस्तुत्या नित्यमुपाचरत् ॥२५३४॥

विमुखे लोठनेऽकुण्ठशाठ्यस्तस्य तु सान्त्वनैः ।
मेने मन्त्रज्ञतां किंचित् सोऽवर्तिष्ट च संविदि ॥२५३५॥

हन्यान्मां भूभृदित्येष यातेष्वेतेषु संत्यजेत् ।
नाऽस्मानुक्त्वेत्यरौत्सीत् स पितृव्यं गमनार्थनात् ॥२५३६॥

त्वय्यस्मासु च सर्वेषु वेष्टितेषूत्कटा द्विषः ।
पृष्ठकोपमसंभाव्य कुतश्चिन्निश्चलोद्यमाः ॥२५३७॥

यद्यद्विदध्युः सिध्येत् तत्तदेकं त्यज मामितः ।
अन्याल्ँलवन्यानानीय दरदो वा जवेन वः ॥२५३८॥

बन्धनं त्वपनेष्यामि युक्तमित्युक्तवांश्च तम् ।
डामरं विदधे किंचिदिव सांमत्यमाश्रितम् ॥२५३९॥

विमोक्ष्यामि क्षपायां त्वामद्य श्वो वेति तं ब्रुवन् ।
स त्वसंक्षीणदाक्षिण्यो विप्रलेभे प्रतिक्षणम् ॥२५४०॥

अध्वरोधे सुदूरस्थैर्यथावदकृतेऽरिभिः ।
बाह्यग्रामाहृतैरन्नैस्ते त्वहान्यत्यवाहयन् ॥२५४१॥

---

2534. a) D C S′ $P_1$ $I_3$ SA भोज तू°, $P_2$ भोजे तू°, $P_3$ भोज तू°; SR भोजो तू° (for भोजस्तू° suggested with St).

2535 a) D C S′ कुण्ठ° (for °[अ]कुण्ठ°) —b) D C S′ $P_{1-5}$ $I_3$ सान्त्वने; SA सान्त्वने (for सान्त्वनैः suggested with St). —d) C S′ °त्समवर्तिष्ट, SA °सवर्त्तिष्ट च; D $P_{1-3}$ $I_3$ सवर्तिष्ट च (for °सोऽवर्तिष्ट च suggested with St).

2537 b) C S′ °त्कटान् (for °त्कटा).

2538 d) D C S′ $P_{1-3}$ $I_3$ वा यवेन, SA वा···येन (for वा जवेन found in SG *sec. manu*).

2539 a) D व्यप° (for त्वप°)

2540. b) $P_{1-3}$ $I_3$ SA द्यो (for श्वो) —c) D $P_{1,3}$ $I_3$ SA सत्व° (for स त्व°).

2541. c) D C S′ $P_{1,2}$ S′ °रत्नै° (for °रन्नै°)

दुरुदर्कमथाऽऽशङ्क्य समयं ते व्यजिज्ञपन् ।
धन्यादयो हि तैः संधिर्विधेय इति भूपतिम् ॥२५४२॥

तैस्तैर्निमित्तैः संधानमविधेयं विदन् नृपः ।
तानादिदेश कर्तव्यं कोट्टाट्टालकवेष्टनम् ॥२५४३॥

संदिदेश च दायादा वञ्च्येरन् ख्यातिमागताः ।
निजास्पदे ताञ्जहति दत्तोत्कोचेऽथ डामरे ॥२५४४॥

भूत्वा कठोरेऽप्यारम्भाऽनिष्ठा निस्सौष्ठवा ध्रुवम् ।
क्रियातिपत्त्युपालम्भैर्यास्यामोऽनुशयं विशाम् ॥२५४५॥

नाऽस्त्यक्षद्धर्षदेवश्चेत् सप्ताहान्युद्यमं ततः ।
दुग्धप्रवाहं प्राप्स्यत् स श्रुत्वेत्यन्योऽपि तप्यते ॥२५४६॥

प्राप्तव्यं प्राप्तवान् सर्वो निजैः कृत्यैः शुभाशुभैः ।
क्रियातिपत्तिर्लोकेन त्रैलोक्यं तु मुखेऽर्प्यते ॥२५४७॥

पादेषु पक्षेषु च सत्सु नोर्व्यां
न व्योम्नि वा पक्षपिपीलकस्य ।
पङ्ग्वन्धवच्चङ्क्रमणं तु गर्ते
किं संपदा स्यान्नियमे गतीनाम् ॥२५४८॥

---

2542 c) St °योहितै (for °यो हि तै.).

2544 b) C S′ St $P_{2,3}$ $I_3$ वञ्चेरन् (for वञ्च्येरन् )

2545. a) D $P_2$ $I^8$ SA कठो प्यार°, C कठोराऽप्यार°, $P_3$ कठार' र°, S′ कठोराऽयार° (for कठोरेऽप्यार°). —b) SA $P_{1-3}$ $I_3$ °ष्ठान्नि° (for °ष्ठा नि°). —d) D C S′ $P_1$ °स्यामोऽसशय, SA $P_2$ $I_3$ °स्यामो'' शय; $P_3$ स्यामोविषय (for स्यामोऽनुशय suggested with St)

2546. c) D C S′ SA प्राप्स्यन्स (for प्राप्स्यत् स)

2547 c) C S′ $P_2$ °र्लोकेपि, St °र्लोकेत्र°, SA °लाके · °, $P_1$ °नाके··· (for °र्लोकेन).

2548. c) D C S′ $P_{1-3}$ $I_3$ SA गर्भे (for गर्ते found in SG *sec. manu*).

सहस्रपादस्य गतेर्निमित्त-
मनूरुभावेऽप्यरुणः प्रजातः ।
तस्याऽभविष्यद् यदि पादयुग्मं
ततोऽधिकं तत्किमिवाऽकरिष्यत् ॥२५४९॥

उपेक्ष्य साक्षितां तस्मात् कृत्स्नं कोट्टं विवेष्ट्यताम् ।
प्रयातु तत्रैवाऽस्माकं तेषां च पुरुषायुषम् ॥२५५०॥

अविश्रान्तो वातो दहन इव शोषं जनयति
प्रसक्तं सातत्याद् दलयति कुलाद्रीनपि जलम् ।
प्रसूते कृत्येषु व्यवसितिरनिर्व्यूढसुदृढा
फलावाप्तिं लोके प्रतिकलमसंभाव्यविभवाम् ॥२५५१॥

क्रूरां नरपतेराज्ञां श्रुत्वा धन्यादयस्ततः ।
कोट्टप्रतोलीं कूलं तं त्यक्त्वाऽप्यारुरुहुर्जवात् ॥२५५२॥

कथं युद्धं विधास्यन्ति कथं स्थास्यन्ति वेति तान् ।
शरान् किरन्तः कोट्टस्था यावत् प्रैक्षन्त कौतुकात् ॥२५५३॥

अधःस्थोऽप्यूर्ध्वगान् युद्धैर्निष्पीड्य निविडैर्व्यधात् ।
धन्यः प्रदेशं तावत् तं निकेतैः पत्तनोपमम् ॥२५५४॥

अविश्रान्तैस्ततः संख्यैरसंख्येयश्रमूक्षयः ।
प्रतिक्षणं प्रववृते सैन्ययोरुभयोरपि ॥२५५५॥

---

2551. [a]) C S′ सयो°, $P_2$ सोयो, St D $P_{1,3}$ $I_3$ सोय (for शोष suggested). —[b]) All Mss read प्रसक्ति (for प्रसक्त suggested).

2553. [d]) All Mss. read प्रैक्ष्यन्त (for प्रैक्षन्त suggested with St)

2554. [a]) All Mss read अध· सो° (for अध.स्थो° suggeted with St) After this *v* युग्मम् .

परेद्युः शारदा दृष्ट्वा संप्राप्तो गर्गनन्दनः ।
संक्रन्दनपुरीपौरवृद्धिं योधैर्हतैर्व्यधात् ॥२५५६॥

अलंकाराभिधो बाह्यराजस्थानाधिकारभाक् ।
अधृष्योऽमानुषैर्युद्धैर्विरुद्धान् बहुधाऽवधीत् ॥२५५७॥

क्व भूधरचरैः स्पर्धा वसुधातलचारिणाम् ।
तथाऽपि पृतनायन्त्रानन्त्यं चिन्त्यमचिन्त्यकृत् ॥२५५८॥

अल्पीयांसः कोट्टनिष्ठा भूयिष्ठाः कटकाश्रयाः ।
अतः पूर्वं बहून् घ्नन्तोऽप्यासन् कृत्याल्पया क्षताः ॥२५५९॥

श्लिष्टद्वाराररिपुटं द्वित्रैः पीडितमाहवैः ।
मीलिताक्षमिव त्रासात् ततो दुर्गमजायत ॥२५६०॥

गोप्तृभेदान्तरद्वैधमुखच्छिद्रानुसारिणः ।
धन्यादीन् वीक्ष्य विश्वासं कोट्टस्था नोपलेभिरे ॥२५६१॥

निद्राच्छेदार्थमन्योन्यं क्रोशन्तो नाऽस्वपन्निशि ।
स्वपन्तोऽह्नि तु निश्शब्दशून्यं कोट्टमदीदृशन् ॥२५६२॥

निशासु तत्तत्पृतना यामतूर्यरवैरपि ।
चटकाः कोटरगता मेघशब्दैरिवाऽत्रसन् ॥२५६३॥

अहर्निशं भ्रमन्तीभिर्नौभिः संरुद्धपाथसः ।
तान् समभ्रमयन् सर्वप्रकारं राजसैनिकाः ॥२५६४॥

---

2556 [cd]) All Mss except SG *sec manu* read °पौरयौधैर्वृद्धि (for °पौरवृद्धिं योधै°)

2558 [c]) $P_{2,3}$ °यान्त्या° (for °यन्त्रा°).

2559 [c]) C S′ 'वैंऽवरुन्धन्तो° (for °वें बहून् घ्नन्तो°)

2564 [c]) SA $P_{1-3}$ ससभ्र° (for समभ्र°)

ते रुद्धपाथसस्तर्षशोषं किंचिद् विषेहिरे।
निस्संचारास्तु संक्षीणे भोक्तव्ये क्लैब्यमाययुः ॥२५६५॥

बुभुक्षवः क्ष्मापयोग्यान् भोगान् भाग्योर्जितांस्ततः।
कदन्नैर्नृपदायादा अशनाशंसनं व्यधुः ॥२५६६॥

दूरे स्पर्धास्तु निस्तीर्णाः क्षुधितास्तेऽधिकं व्यधुः।
भूभर्तुर्भोगभागिभ्यो भृत्येभ्योऽप्यन्वहं स्पृहाम् ॥२५६७॥

व्यूढेष्वस्मासु पर्याप्तमकार्यमिति भाषिणम्।
भोज व्यधान्मध्यशृङ्गे दुर्गस्याऽथ स तं पृथक् ॥२५६८॥

एकस्य वार्धकाद् वेश्यापुत्रत्वादपरस्य च।
जानन्नयोग्यतां मेने द्वैराज्यार्हं तमेव सः ॥२५६९॥

विनाऽमुं चाऽनयोः सम्यक्संरम्भेरन्न वैरिणः।
इति मिथ्या प्रथां निन्ये तद्विनिस्सरणं बहिः ॥२५७०॥

कान्ताऽलंकारचक्रस्य काङ्क्षन्ती क्षयमित्वरी।
चक्षूरोगात् षष्ठचन्द्रे सान्द्रस्नेहार्द्रतां गता ॥२५७१॥

बहिराभ्यन्तरं भेदं नयन्ती मन्त्रमाययौ।
साल्हणे. कर्णसरणिं सर्वमन्विष्यतोऽन्वहम् ॥२५७२॥

रागध्वान्तान्वितधियः प्रतिभेदभयेन सः।
तस्य प्रकाशयन्नेनां गन्तुं तु प्रार्थनां व्यधात् ॥२५७३॥

---

2565. b) C S′ °दोष, SR $P_2$ °रोष (for °शोष) St C $P_{1,3}$ $I_3$ कचि°, D $P_2$ केंचि° (for किंचि°)

2566. b) $I_3$ $P_3$ भोग्यान् (for भोगान्). —d) All Mss read °शसनैः (for °शसन suggested with St)

2568. a) All Mss except SL read व्यूहे° (for व्यूढे°)

2572. After this *v.* युग्मम्.

2573. c) SA $P_2$ प्राकाश° (for प्रकाश°) D $P_1$ °न्नैना (for °न्नेना)

क्षमावाञ्शिक्षितोपेक्षो मैत्रीस्थैर्यं मुदं भजन्।
नागः सागस्यपि दध्रे बोधिसत्त्व इव क्रुधम् ॥२५७४॥

प्रियामन्युः सरागेण मृत्युहेतुर्महानपि।
हृदि विस्मर्यते पृष्ठे शरभेणेव वारणः ॥२५७५॥

अथ प्रस्थापितो भोज. सुतारिशिबिरान्तरात्।
यातप्रायोऽप्यलंकारतनयेनाऽनुयायिना ॥२५७६॥

द्रोहेच्छया भयाद् वाऽपि ध्वस्तसत्त्वेन सत्वरम्।
व्यावृत्त्याऽऽरोपितो भूयः कोट्टस्थस्याऽन्तिकं पितुः ॥२५७७॥

निर्भर्त्स्य पुत्रं गन्ताऽसि श्वो निशीत्यभिधाय तम्।
छन्नमस्थापयत् सोऽह्नि यात इत्यखिलान् वदन् ॥२५७८॥

प्रोच्चल्यानिश्चयादेकः प्रायाद् द्वौ श्वः प्रयास्यतः।
बोधितैरथ धन्याद्यैरजागार्यखिलैर्निशि ॥२५७९॥

प्रस्थास्नुः स निशीथेऽथ कोट्टाट्टालाद् व्यलोकयत्।
जाग्रतः कटके सर्वान् परितो दीपितानले ॥२५८०॥

प्रकाश्य वह्निना दुर्गं प्रतोलीनिर्गतो यथा।
पिपीलकोऽप्यलक्ष्यत्वं नोन्मुखानां द्विषां व्रजेत् ॥२५८१॥

ज्वालाप्रकाशचाञ्चल्याद् विलोला इव रक्षिताः।
न्यषेधन्मूर्धकम्पेन साल्हणिं साहसाद् गृहाः ॥२५८२॥

---

2576 b) C SA $P_2$ $I_3$ °शिविरा° (for °शिबिरा°).

2577. After this v युग्मम् .

2578. a) SA निभर्त्स्य (for निर्भर्त्स्य). —c) C S' च्छन्न°; $P_{1,2}$ श्छन्न° (for छन्न°).

2582 a) All Mss. [$P_2$ °प्रकाश्य चा°] read °प्रकाश चा° (for °प्रकाशचा° suggested with St D).

तद्गन्तुमक्षमं क्षितं क्षपाप्राह्णे स डामरः ।
अधोऽवातीतरच्छ्वभ्रमालिङ्गितवटाकरम् ॥२५८३॥

क्षेमराजाभिधानेन डामरेशेन सोऽन्वितः ।
शिलां वितर्दिकातुल्यामध्यास्त श्वभ्रमध्यगाम् ॥२५८४॥

आरुह्याऽऽसनमात्रे तां पर्याप्तां पातभीतितः ।
निर्निद्रौ पञ्चरात्रीस्तावत्यवाहयतामुभौ ॥२५८५॥

निर्वर्तितप्राणयात्रौ करस्थैः सक्तुपिण्डकैः ।
तत एव व्यजहतां विष्ठां नीडादिवाऽण्डजौ ॥२५८६॥

अव्यक्तव्याकृती चित्रासूत्रिताविव तौ स्थितौ ।
वीक्ष्याऽरिकटके लक्ष्मीं पृष्ठाद् विस्मयमीयतुः ॥२५८७॥

तयोराश्रीयत स्फीतशीतविस्मृतिकारिणा ।
जयसिंहप्रतापाग्निसंतापेनोपकारिता ॥२५८८॥

षष्ठेऽह्नि तत्र निश्शेषीभूतभोक्तव्ययोरथ ।
क्षते क्षार इवाऽऽरम्भि तुषारं वर्षितुं घनैः ॥२५८९॥

अगृह्यतोचिते दन्तवीणावाद्योद्यमे तथा ।
शीतासादितसादेन पाणिपादेन सुप्तता ॥२५९०॥

तावचिन्तयतामद्य क्षुच्छीताभिहतौ ध्रुवम् ।
पतिष्यावोऽरिकटके पाशबद्धाविवाऽण्डजौ ॥२५९१॥

---

2583. [a]) All Mss. read °क्षम· ( for °क्षम suggested with St) —[c]) C S′ $P_2$ °च्छभ्र°, $P_1$ $I_3$ °च्छुभ्र° (for °च्छ्वभ्र°).

2584. [c]) D (before suggestion) $P_{1-3}$ वैतर्दिका° (for वितर्दिका°)

2589. [c]) St D C S′ $P_2$ क्षतक्षार°, $I_3$ क्षत क्षार° (for क्षते क्षार°).

2590. [a]) C S′ दत्त° (for दन्त°) —[d]) SA $P_{1-3}$ $I_3$ पादि° (for पाणि°).

कं पूत्कुर्वः कस्य वावां विदितौ यो विनिर्हरेत् ।
इतः पङ्कान्तरामग्नौ यूथपः कलभाविव ॥२५९२॥

विषमस्थावथेत्थं तौ नक्तमभ्यर्थ्य डामरः ।
आरोप्य रज्ज्वाऽऽवसथे शून्ये स्थापयति स्म सः ॥२५९३॥

कृतशीतप्रतीकारौ पलालानलसेवनैः ।
दुःखं व्यस्मरतां तत्र निद्रया चिरलब्धया ॥२५९४॥

ततोऽप्यभ्यधिका व्यापद् भेजे लोठनविग्रहौ ।
अचक्षुष्यौ जनात् स्निग्धां गिरमप्यापतुर्न यौ ॥२५९५॥

यवकोद्रवपूपादि तयोः सतुषमश्नतोः ।
गात्रैर्वस्त्रैश्च वैवर्ण्यं शुद्धिवन्ध्यतया दधे ॥२५९६॥

धन्योऽलंकारचक्रस्य क्षीणभोज्यस्य सर्वतः ।
स्वीचकाराऽन्नदानेन तुल्यौ होलयशस्करौ ॥२५९७॥

ततः स दूतैर्विक्रेतुमङ्गीचक्रे नृपद्विषः ।
बुभुक्षाक्षुभितो भृत्यभेदभीतश्च डामरः ॥२५९८॥

दुस्तरव्यापदुद्रेकद्रुतसत्त्वतयाऽत्यजत् ।
पापोपलिप्तं तच्चित्तमधर्माकीर्तिसाध्वसम् ॥२५९९॥

भूपतेर्विद्विषच्छेषस्थापनात् स्वस्य रक्षणम् ।
ख्यातिशुद्ध्यै चिकीर्षुश्च कुशकाशावलम्बनम् ॥२६००॥

---

2592. c) All Mss read तत· (for इत· suggested with D).

2595. c) C S′ $P_3$ जनान् स्निग्धौ; $P_2$ जनान्स्निग्धान्, SA जनान् स्निग्धां (for जनात् स्निग्धा).

2597. b) SA $P_2$ °भोजस्य (for °भोज्यस्य).

2599. c) All Mss read °लिप्तत° (for °लिप्त त° suggested)

भृत्यस्योदयनाख्यस्य धिया प्रच्छादितं तथा।
ररक्ष साल्हणि भोजं द्वौ तु दातुं स तत्वरे ॥२६०१॥

तं विना च तयोर्भूपाद् दण्डं जानन्नसांप्रतम्।
अबाधं स्वस्य चाऽशेषकृत्यं युक्तममन्यत ॥२६०२॥

भोज्याभावकृतां तस्य व्यापदं तच्च मन्त्रितम्।
तदा नाऽज्ञासिषुर्धन्यादयः संधिं विधित्सवः ॥२६०३॥

मिषाच्चिचलिषा तेषां कस्माच्चिदभवत् ततः।
किं पुनस्तेन दायादद्वये दातुं प्रतिश्रुते ॥२६०४॥

देयविश्राणनानीकोत्थानादिपणसिद्धये।
भ्रातृव्यमनयद् धन्य कल्याणमवकल्यताम् ॥२६०५॥

प्रबन्धं निर्बध्नन्नरिमुपचरंश्छादितरुषं
महाहिं संगृह्णन्नयकुटिलचेष्टं व्यवहरन्।
स भूमिः सिद्धीनां दधदुचितकर्तव्यपरतां
भवेद्योनिर्व्यूढावपि सुदृढसंरम्भरभसः ॥२६०६॥

दुःखैर्दीर्घप्रवासोत्थैरपसारितसौष्ठवाः।
तदा संरम्भशैथिल्यं भूभृद्भृत्याः प्रपेदिरे ॥२६०७॥

स सत्यं सचिवोऽप्राप्यः संग्रहीतुं प्रगल्भते।
कथाशरीरमिव यो निर्व्यूढौ कार्यमाकुलम् ॥२६०८॥

---

2601. d) C S′ $I_3$ सन्वरे (for तत्वरे)

2603 a) C $P_{1,2}$ SA भोज्यभा°, S′ °भोजभा° (for भोज्याभा°).

2604. a) $P_{1-3}$ $I_3$ मिषाश्चि° (for मिषाच्चि°)

2605. d) D C S′ $P_{1,2}$ $I_3$ °कल्पताम् (for °कल्यताम्).

2606. a) St °रञ्छादि°; C S′ $P_3$ °रच्छादि°, $P_{1,2}$ °रच्छादि°; $I_3$ °रच्छामि° (for °रश्छादि°).

संधिं निबद्धं विज्ञाय सैनिकाः स्वगृहोन्मुखाः ।
उपेक्ष्य स्वामिदाक्षिण्यं क्षणादेव प्रतस्थिरे ॥२६०९॥

तद्विक्रीतमवाप्याऽन्नं लवन्यः कार्यमन्थरः ।
धन्याद्याः स्वल्पसैन्यत्वादासन् कृच्छ्रगतासवः ॥२६१०॥

प्रतोलीकीलितद्वाराः प्रार्थितागमनाशया ।
तदहः सोऽभियोक्तृंस्तानददत् तावतापयत् ॥२६११॥

रथाङ्गाक्रन्दिनी रात्रिस्तेषां कृच्छ्रेण साऽगमत् ।
विना जीवितसंन्यासमन्यत्कार्यमपश्यताम् ॥२६१२॥

प्रयत्नसंभृते कृत्ये नष्टे मन्दतया धियः ।
अस्मत्संभावनादूरीकृतवाक्यादरं प्रभुम् ॥२६१३॥

नष्टानुशोचनव्याजात् तत्तद्युक्त्युपहासिनः ।
सदयं नो ध्रुवं दुस्स्थीकरिष्यन्त्यन्यमन्त्रिणः ॥२६१४॥

सद्यो यात्रातारतम्यात् ताम्यन्तो नत्रपार्पणम् ।
कार्यनिष्ठामपश्यन्तः कुर्युर्वैत्यपरेऽब्रुवन् ॥२६१५॥

मायामेतां विहितवांस्तैः संमन्त्र्य नृपाहितैः ।
सिद्धसाध्योऽधुना दस्युर्हसन्नस्मान् ध्रुवं स्थितः ॥२६१६॥

अल्पेतरांस्तु संकल्पानेवं तेषां वितन्वताम् ।
दत्तानन्ततनुग्लानिः प्रभाता सा विभावरी ॥२६१७॥

---

2610. d) D C S' कृच्छ्रा°, $P_1$ कश्छ° (for कृच्छ्र°)
2611. a) All Mss read °केलित° (for °कीलित° found in SG *sec. manu*) —d) $P_{1-3}$ °पातयत् (for °तापयत्).
2615. c) $P_{2,3}$ $I_3$ SA °पश्यन्त (for °पश्यन्त).
2617. c) All Mss read °ज्यानि° (for °ग्लानि suggested). After this *v* कुलकम्.

प्राक्षेऽथ राजस्थानीयोऽलंकारः साहसोत्सुकः।
डामरं कोट्टमारुह्य निन्ये नयभयैर्वशम् ॥२६१८॥

एकाहं गमने सोढविलम्बस्तत्र वासरे।
लोठनं क्षीणदाक्षिण्यः स गच्छेत्यब्रवीत् स्फुटम् ॥२६१९॥

उपन्यास्यंस्ततस्तस्य म्लानिप्रक्षालनक्षमम्।
मानिनः केऽपि कर्तव्यं कीर्तिव्ययनिबर्हणम् ॥२६२०॥

कालः सोऽयं सकलजनतालोचनध्वान्तदायी
नित्यालोकप्रकटनपटुः किन्तु सत्क्षत्रियाणाम्।
अभ्रश्यामाऽद्भुतमसिलता स्वर्वधूसंगताऽपि
व्यक्तं सक्तिं दिशति रभसान्मण्डलेनोष्णभानोः ॥२६२१॥

संप्राप्नुवन्ति ननु मण्डलमेकमेव
क्ष्मापा जये समरसीम्नि वपुस्तु हित्वा।
चण्डांशुमण्डलमथाऽभिमतानि कामं
प्रेमार्द्रनिर्जरवधूकुचमण्डलानि ॥२६२२॥

नाऽस्मिन् संततवेष्टनोल्बणतलैस्तल्पैरुदेति व्यथा
ग्रन्थिभ्यश्चलितैर्न चालमसुभिर्मर्मव्यथा जन्यते।
क्रन्दद्बन्धुजनार्तनादचकितस्वान्तं न वा स्थीयते
नन्वेतन्मरणं सुखस्य सुभगा काऽप्येव संप्रातिभूः ॥२६२३॥

---

2618. b) D °सोन्मुख° (for °सोत्सुक°) —d) $I_3$ °टैर्वदन् (for °यैर्वशम्).

2619. c) D C $P_{1,3}$ $I_3$ SA लोठने, $P_2$ S′ लोठनो (for लोठन suggested with St).

2620. a) All Mss. read उपन्य° (for उपन्या° suggested with St).

2623. a) C S′ $P_{1-3}$ $I_3$ व्यथां (for व्यथा) —d) C S′ $P_{1-3}$ $I_3$ काम्येव (for काऽप्येव).

मार्गैः खड्गलतावितानगहनैर्यातः पिता ते दिवं
भ्रातृभ्यामसिधेनुकण्टकवने भ्रान्त्वाऽर्जिता सद्गतिः ।
वंशाक्षुण्णमिमं निषेव्य रभसादध्वानमुन्नद्धया
वृत्त्या व्योम्नि विशार्कमण्डलमिह स्वान्तं च तेजस्विनाम् ॥

साम्राज्यं विधिनोपनीतमसकृत्क्लैब्येन यद्धारितं
तत्राऽपि प्रशमोचिते वयसि यत्संचेष्टितं बालवत् ।
प्रायश्चित्तममुष्य लब्धमधुना तद्वेधसाऽऽपादितं
मा भूद् राज्यमिवैतदप्यसुलभं कर्तव्यमूढस्य ते ॥२६२५॥

राज्यं प्राप्तमपि प्रनष्टमसमोच्छिष्टाशनैर्यापितः
कालः सर्वजनक्षयस्य विषये याता स्थितिर्हेतुताम् ।
इत्यासीत् किमिवोचितं प्रभवतो भिक्षाचरक्ष्मापते-
र्निर्व्यूढं तु तदस्य देहविरतौ येनैष सर्वोन्नतः ॥२६२६॥

स तथोत्तेजितोऽप्योजो नाऽऽददे तेजसोज्झितः ।
न ज्वलत्यग्निसङ्गेऽपि निर्वीर्यं बाडवेन्धनम् ॥२६२७॥

शान्ताहन्तस्तु संवृत्तनिद्राभङ्ग इवाऽर्भकः ।
ऐच्छदुद्यद्भयोद्वेगो रोदितुं प्रसृताधरम् ॥२६२८॥

डामरेणाऽर्पितं नेतुं प्रवृत्तास्तं नृपाश्रिताः ।
तादृशं वीक्ष्य कारुण्याद् धैर्याधानार्थमभ्यधुः ॥२६२९॥

मा विषीद न देवस्य दयाचन्द्रोदयोज्ज्वले ।
हृदि प्ररोहति स्वैरं विकारतिमिरान्धता ॥२६३०॥

---

2625. d) All Mss. read °मूकस्य (for °मूढस्य suggested with D).
2627. d) D St $P_{1-3}$ $I_3$ वानरे°, C S′ वा नवे° (for बाडवे° suggested).
2628 a) $SA_1$ gloss शान्ता अहन्ता अहभावो यस्य (for शान्ताहन्त॰).
2629. d) C S′ $P_{1,3}$ °भ्ययु॰ (for °भ्यधु ).
2630 a) C S′ SA $P_{1-3}$ $I_3$ दैवस्य (for देवस्य)

स सौजन्यसुधासिन्धुः स स्थिरत्वसुराचलः।
स प्रपन्नार्तिसंतापच्छेदचन्दनपादपः ॥२६३१॥

पुण्यां शुद्धां च संलक्ष्य शरदीव द्युवाहिनीम्।
मूर्तिं तस्योल्वणं चेतः समाधास्यत एव ते ॥२६३२॥

निष्कलङ्कैर्वंशपूर्वैर्निर्विशेषं सभाजयन्।
चारित्रं लाघवभुवो ह्रियस्त्वां सोऽपनेष्यति ॥२६३३॥

अपकर्तॄन् विपन्मग्नान् दयमानः परानपि।
क्षमापरीक्षाहेतुत्वात् स वेत्ति ह्युपकारिणः ॥२६३४॥

उक्त्वेति हृष्टस्तैर्लोलस्थूलकूर्चो गृहात् ततः।
व्यालम्बकम्बलो गोष्ठाद् वृद्धोक्ष इव निर्ययौ ॥२६३५॥

निर्भूषणं म्लानजीर्णवस्त्रशस्त्रं निरीक्ष्य तम्।
युग्याधिरूढमायान्तं धन्यो ह्रीनम्रतां दधे ॥२६३६॥

दीर्घास्पन्देक्षणं रूक्षघनकूर्चांसविग्रहम्।
व्यलोकयदथोलूकमिव नष्टं गुहागृहात् ॥२६३७॥

रेजे शैलश्चलद्भिस्तैः शिबिरोद्दीपितानलः।
भूपप्रतापस्वर्णस्य कषाश्मत्वमिवाऽऽगतः ॥२६३८॥

स्कन्धावारे गते वर्षत्तुषारं प्रसभं नभः।
अमर्त्यभावे भूभर्तुर्विशां चिच्छेद संशयम् ॥२६३९॥

---

2633. d) D C S′ $P_{1-3}$ $I_3$ [अ] प्रिय° (for ह्रिय°).

2637. b) D SL SA $P_{1-3}$ $I_3$ °कूर्च स°, C S′ °कूर्व स° (for °कूर्चांस° suggested with St)

2638 b) SA $P_{1,2}$ $I_3$ शिवि° (for शिबि°)

2639. a) SA $P_{1-3}$ $I_3$ स्कन्दा° (for स्कन्धा°).

प्राक् चेत्पतेद्धिमं तावन्म्रियेरन् त्रुडिताः क्षणात् ।
पिष्टातकान्तर्गताटाः प्रविष्टा इव सैनिकाः ॥२६४०॥

एवमेकान्नविंशेऽब्दे दशम्यां शुक्लफाल्गुने ।
न्यूनाब्दषष्टिदेशीयो निबद्धो लोठनः पुनः ॥२६४१॥

दीर्घप्रवासादायातं सत्कर्तुं कटकं पुनः ।
निर्ममो हर्म्यमुत्तुङ्गमारुरोह महीपतिः ॥२६४२॥

यथोचितं दानमानसंभाषणविलोकनैः ।
संतोष्य विसृजन् सैन्यं धन्यादीन् प्रैक्षताऽऽगतान् ॥२६४३॥

तेषां पुनश्च दोर्द्वन्द्वमूले क्षिप्तकरं भटैः ।
न्यस्तेनाऽऽनासिकं वासःप्रान्तेनाऽऽच्छादिताननम् ॥२६४४॥

निर्भूषणश्रोत्रपालिप्रविष्टैः श्मश्रुलोमभिः ।
बलत्तरूत्तैः प्रव्यक्तकार्श्यक्लेशं कपोलयोः ॥२६४५॥

उच्चावचोक्तिमुखरे पौरलोकेऽन्तरान्तरा ।
व्यापारयन्तं नेत्रान्तौ दीनस्तिमिततारकौ ॥२६४६॥

कातर्यदैन्यभीक्लान्तिक्षुदलक्ष्मीकटाक्षितम् ।
वेपमानविनिद्राङ्गं गां शीतेनाऽऽर्दितामिव ॥२६४७॥

---

2640. a) D (before suggestion) C S′ $P_{1-3}$ $I_3$ प्राञ्च°, SA प्राञ्चे° (for प्राक् चे° found in SG *sec. manu*) —b) $P_{1-3}$ $I_3$ °न्द्रिये° (for °न्म्रिये°).

2641. a) C °कोन° (for °कोन्न°) —b) C S′ $P_{1-3}$ $I_3$ SA °फाल्गुणे (for °फाल्गुने).

2643. c) St C S′ $P_{1-3}$ $I_3$ व्यसृजत् (for विसृजन् ).

2645. a) $P_{2,3}$ $I_3$ °पाणि° (for °पालि°). —c) $P_{1-3}$ $I_3$ SA वल° (for बल°).

भ्रान्तामिव क्ष्मां पर्यस्तानिवाऽद्रीन् पतितामिव ।
विदन्तं च दिवं शोषबहुशुष्करदच्छदम् ॥२६४८॥

दैविको वाऽन्तरायोऽस्तु ध्वान्तं वोग्रं प्रवर्तताम् ।
राजौकोऽभ्यर्णतां यातं वाता वा जरयन्त्विदम् ॥२६४९॥

सर्वापकारकृद्राज्ञः स्थास्यामि पुरतः कथम् ।
पदानि संनिरुन्धानं निध्यायेति पदे पदे ॥२६५०॥

बहुलोकावृततया स्तोकसंलक्ष्यमैक्षत ।
प्रतीहारैरथाऽऽवेद्यमानं लोठनमङ्गने ॥२६५१॥

भ्रूसंज्ञया वितीर्णाज्ञो राज्ञा तामारुरोह सः ।
सभां पारिप्लवाम्भोजामिव प्रेक्षकलोचनैः ॥२६५२॥

दृष्ट्या निर्दिष्टपार्श्वोर्वीस्थितिः पृथ्वीभुजस्ततः ।
अस्प्राक्षीत् क्षितिनिक्षिप्तजानुर्मूर्ध्नाऽङ्घ्रिपङ्कजे ॥२६५३॥

हस्ताम्बुजाभ्यामालम्ब्य ललाटतटमानतम् ।
सम्राट् संभ्रमनम्रस्य तस्योदनमयच्छिरः ॥२६५४॥

रत्नौषधीजुषोः स्पर्शः पाण्योस्तापं स चेतसः ।
दौर्भाग्यमहरद् देहाच्चाऽस्य श्रीखण्डशीतलः ॥२६५५॥

पुण्यानुभावात् कारुण्यभाजो भूभर्तुरञ्जसा ।
विस्रम्भसंभावनया स क्षणात् पस्पृशे हृदि ॥२६५६॥

---

2648. b) D SA $P_{1-3}$ $I_3$ °निव (for °मिव) —d) St D $P_{1-3}$ $I_3$ om. बहुशुष्क.

2649. a) $P_2$ SA दैविको · न्तरा° (for दैविको वान्तरा°).

2650. After this v अन्तर्युगलम् .

2651. After this v. कुलकम् .

2655. cd) D (before suggestion) C S′ $P_{1-3}$ $I_3$ देहश्चा°, SA देहचा° (for देहाच्चा° suggested with St D).

मा भैषीरिति दत्तोक्तिः सुखं संप्राप्स्यसीति वाक् ।
अगाम्भीर्येण भग्नेव मन्युर्न त्वयि सोऽधुना ॥२६५७॥

इत्युक्ते पूर्ववैराणां भवेदुद्घाटनं कृतम् ।
बान्धवो नस्त्वमित्यस्मिन् परीहास इव क्षणे ॥२६५८॥

क्लिष्टोऽसीति स्वप्रतापप्रभावाभाषणं भवेत् ।
ध्यात्वेति भूभृद् दृष्ट्वाऽस्य नाऽऽप्यायं तु गिराऽकरोत् ॥२६५९॥

अभयार्थनया पादौ स्प्रष्टुं नमयतः शिरः ।
संस्पर्शं मौलिषु पुनर्विग्रहस्याऽङ्घ्रिणाऽकरोत् ॥२६६०॥

का योग्यता सत्क्रियायां ममेति वदता बलात् ।
अजिग्रहत् पितृव्येण ताम्बूलं स्वकरार्पितम् ॥२६६१॥

नम्रं द्वारेशमूचेऽभूच्छ्रमो व इति सस्मितम् ।
धन्यं षष्ठं च पस्पर्श प्रष्ठं सव्येन बाहुना ॥२६६२॥

दाक्ष्यदाक्षिण्यगाम्भीर्यविनयाद्यैर्विभाव्य तम् ।
भूभृद्गुणैः परीतं स्वं लोठनोऽमन्यताऽवरम् ॥२६६३॥

आदिश्य सान्त्वनं धन्यमुखेनाऽथ त्रपानतम् ।
पितृव्यं प्राहिणोद् वेश्म भ्राजिष्णु विनयाञ्जलिः ॥२६६४॥

अभियोगे य एवाऽस्य नीतौ विन्यस्यतो दृशम् ।
मुखरागः स एवाऽभूत् फलावाप्तावविप्लुतः ॥२६६५॥

---

2657. d) All Mss except SG *sec. manu* read मन्युना त्वयि साधुना; D suggests मन्युर्मे त्वयि साधुना (for मन्युर्न त्वयि सोऽधुना).

2659. After this *v* तिलकम्.

2664. ab) $P_{2,3}$ $I_3$ SA धन्य मु° (for धन्यमु°)

नाऽऽयाति वाडवशिखिक्कथनेन तापं
शैत्यं हिमाद्रिपयसा विशता न चाऽब्धिः ।
कश्चिद् गभीरमनसां सततं विषाद-
काले प्रमोदसमये च समोऽनुभावः ॥२६६६॥

प्रीतिस्थैर्यैर्ज्ञातियोग्यैश्चोपचारैरकृत्रिमैः ।
क्रमाद् राजाऽहरल्लज्जां पौरुषभ्रंशजीवयोः ॥२६६७॥

दायादोष्ठद्वयादेव राष्ट्रे कृष्टेऽपि मन्त्रवित् ।
भोजेनोत्पिञ्जसर्पस्य दन्तं सोऽन्तरचिन्तयत् ॥२६६८॥

प्रवासायासभीत्या स्वैस्त्यक्तसंरम्भसंभ्रमैः ।
जिगीषुर्विद्विषच्छेषान् चक्रे यन्निष्प्रजागरः ॥२६६९॥

साल्हणि स तु निस्तीर्णः श्वभ्राच्छून्यगृहे वसन् ।
पितृव्यविग्रहोदन्तमुपलेभे न कंचन ॥२६७०॥

राजगृह्यं त्वलंकारं डामरान्तिकमागतम् ।
पृष्ठाद् वीक्ष्याऽभवद् रोहद्द्रोहसंभावनस्तदा ॥२६७१॥

ददर्श च क्रमाद् दूरतया दुर्लक्ष्यविस्तृति ।
स्कन्धावारं बद्धमालं मार्गे नगरगामिनि ॥२६७२॥

---

2667 [b]) All Mss read °कृत्रिम (for °कृत्रिमै suggested with St D).
2668. [c]) All Mss read भोजनो° (for भोजेनो° suggested with St D).
2669. [c]) All Mss. read °च्छेषै. (for °च्छेषान् suggested)
2670. [a]) All Mss. read सल्हण (for साल्हणि suggested with St). —[ab]) D विस्तीर्णच्छ्व°, C S′ $P_{1,2}$ $I_3$ SA विस्तीर्णः श्व°; $P_3$ विस्तीर्णाच्छ्व° (for निस्तीर्ण श्व° suggested with St) —[cd]) $P_1$ om.
2671. [a]) D राजा गृहीत्वलकार°, C S′ राजा गृहे त्वलकार, $P_{1-3}$ $I_3$ SA SL राजा गृहं त्वलकार° (for राजगृह्य त्वलकार suggested with St, cf. *vv.* VIII. 2618, 2925)
2672. [b]) All Mss. read °विस्मृति (for °विस्तृति suggested with St D). —[c]) $P_{2,3}$ $I_3$ SA स्कन्दा° (tor स्कन्धा°).

अज्ञातेन विदूरत्वात् पितृव्येणाऽऽश्रितं ततः।
युग्यं चाऽसौ धन्यषष्ठयुग्ययोरन्तरैक्षत ॥२६७३॥

अचिन्तयच्च को हेतुः कटकप्रस्थितेरितः।
युग्यारूढश्च कोऽथ स्यात् तृतीयो धन्यषष्ठयो ॥२६७४॥

पृष्टस्तेनाऽवदत् कश्चित् पामरोऽथ प्रमोदभाक्।
संधिर्निबद्धो नगरं गतौ लोठनविग्रहौ ॥२६७५॥

सन्देहे जहति द्रोहभयमुन्मुखतां व्रजत्।
ज्ञातिस्नेहेन तस्याऽऽसीन्मुहूर्तमपहस्तितम् ॥२६७६॥

सैन्ये गते शून्यतया मिलितैर्विहगैः सरित्।
रुवद्भिस्तेन तौ नीतौ क्रन्दन्तीव व्यकल्प्यत ॥२६७७॥

लवन्य एव मां दध्याद्भयात्वेहस्थमवेत्य ते।
पुनर्नयेयुर्धन्याद्याः क्रमाद् दध्यावथेति सः ॥२६७८॥

स्वं नेतुं पार्थिवचमूं प्रत्यावृत्तां निनादिनीम्।
श्रुतेऽन्तरान्तरा घोषे निर्झराणामशङ्कत ॥२६७९॥

---

2674. b) C S′ °न्वित° (for °रित ).

2675. a) C S′ $P_{1-3}$ $I_3$ SA पृष्टसेना° (for पृष्टस्तेना°).

2676. a) C S′ सन्देहोऽथहतद्रोहो; D $P_{1,3}$ सन्देहोजहतद्रोहो; St $I_3$ संदेहौजहतोद्रोहो; St suggests सन्देह जहतो द्रोह°; $P_2$ सदेहे जहतद्रोहो (for सन्देहे जहति द्रोह° suggested). —b) $SA_1$ (after corr ) St $I_3$ भजेत्; C S′ St. Tr भजत्; $SA_1$ (before corr ) D $P_{1-3}$ व्रजेत् (for व्रजत् suggested)

2677. d) D C S′ $P_1$ क्रन्दतीव (for क्रन्दन्तीव). All Mss read अकल्पत (for व्यकल्प्यत suggested with St).

2678 a) All Mss read मे (for मा suggested with St. Tr.).

अथाऽजायत जीमूतवितीर्णतिमिरं जगत् ।
वन्ध्यं मध्यंदिनेनेव निशीथव्यथितश्रिया ॥२६८०॥

राधमासावधि दधुस्ततः प्रभृति वारिदाः ।
दीक्षां क्षोण्यां तुषारौघसत्रासूत्रणकर्मणि ॥२६८१॥

विस्रब्धघात्यभव्योऽहं निर्ब्रह्मण्यो ह्रियोज्झितः ।
निन्दन् स्वमिति भोजाग्रे ततो दस्युरुपाविशत् ॥२६८२॥

समयापेक्षयाऽक्षोभो मन्युं संस्तभ्य साल्हणिः ।
सान्त्वयन्निव नास्त्यागस्तवाऽत्रेति जगाद तम् ॥२६८३॥

ऊचे च संश्रितापत्यज्ञात्याद्यापद्गतं त्वया ।
त्रातुमेतत्कृतं तत्र गर्हां नाऽर्हसि कस्यचित् ॥२६८४॥

तव द्रोहस्पृहा स्याच्चेन्नाऽऽनृशंस्यं भवेन्मयि ।
परवत्ताऽभवत् तस्मादियं कालानुरोधतः ॥२६८५॥

राज्ञश्च हर्षभूभर्तृवंश्या इव न वा वयम् ।
उच्छेद्याः किन्तु संयम्या राजधर्मानुरोधिनः ॥२६८६॥

स्वस्याऽख्यातिस्तयोर्बाधा राज्ञश्चाऽमार्गगामिता ।
शेषं मां रक्षता हन्त निषिद्धा धीमता त्वया ॥२६८७॥

इत्युक्तवन्तं तं त्यक्तलज्जाभार इवाऽवदत् ।
साक्षी त्वमेव सर्वत्र ममेति सततं स्तुवन् ॥२६८८॥

---

2680. c) D $P_1$ वन्ध्यमध्य°, C S′ बद्ध मध्य° (for वन्ध्य मध्य°) —d) D C S′ °व्ययित° (for °व्यथित°)
2683. b) $P_2$ $I_3$ SA सस्तम्भ्य (for संस्तभ्य).
2685. c) D C S′ $P_{1-3}$ परक्तत्ता° (for परवत्ता°)
2687 c) SA $P_{1,3}$ शष मा; C S′ स्वा सभा (for शेष मा).
2688. c) St त्वमेव, SA तमेव (for त्वमेव)

क्षणेन च प्रहिणु मामधुनेत्यभिधायिनम् ।
तमेव हिमवृष्ट्यन्ते कर्ताऽस्मीत्युक्तवान् ययौ ॥२६८९॥

चयि दुस्युर्विपर्यस्येन्मन्युं जानन्नभोजनम् ।
भोजस्तत्रेति केनाऽपि कथितो व्यधिताशनम् ॥२६९०॥

स्पृशंश्चाऽन्नं चिरात् प्राप्तमिदं विक्रीय ताविति ।
ध्यायञ्ज्ञात्योर्देहमांसं तयोर्भुक्तममन्यत ॥२६९१॥

दस्युस्तु हिमवृष्ट्यन्ते त्वां प्रहेष्यामि निश्चयात् ।
श्वो वाऽद्य वेति कथयन् द्वौ मासौ न मुमोच तम् ॥२६९२॥

मां ज्ञात्वेह स्थितं राज्ञः कृतारब्धेर्हिमात्यये ।
विक्रीणात्येष मत्वेति भोजोऽधाद् गमने त्वराम् ॥२६९३॥

मिषं यं यं समादाय गमनायोदपादयत् ।
दस्युस्तं तं समुच्छेद्य सापराधं व्यधत्त तम् ॥२६९४॥

तेजोनाम्नो बलहरात् संजातो भाद्रमातुरः ।
अभ्यधाद् बाल्यमाशास्य लम्बकम्बलकावृतः ॥२६९५॥

---

2690. a) C S′ $P_{1-3}$ $I_3$ SA दस्यून्वि° (for दस्युर्वि°)

2691. b) All Mss. read विक्रीयतामिति (for विक्रीय ताविति suggested with St).

2692 c) $P_2$ $I_3$ SA देति (for वेति).

2693 a) All Mss. read राज्ञा (for राज्ञ. suggested with St)

2694. a) All Mss read निषेधाय (for समादाय suggested).

2695. a) All Mss. read ओजो° (for तेजो° suggested with St, cf. *v.* VIII. 2862). —b) All Mss. read °जात (for °जातो suggested with St). —c) वर्धितो बाल्यमारभ्य is suggested (for अभ्यधाद् बाल्यमाशास्य found in all Mss.)

तेजोविस्फूर्जितां तत्तद्वीरोत्कर्षकषोपले ।
द्वैराज्ये सौस्सले सैन्ये पंक्तिपावनतां गतः ॥२६९६॥

पितुराप्ततया राज्ञा वर्धितस्तदनन्तरम् ।
एवेनकादिविषयाधीकारित्वं क्रमाद् भजन् ॥२६९७॥

विमुखे राज्ञि नागेन खूयाश्रमभुवा कृते ।
तं राजवदनो नाम विजिघृक्षू ररक्ष तम् ॥२६९८॥

आनृशंस्यं भृत्यभावाद्लवन्यतयाऽस्य च ।
प्रत्यवस्थित्यसामर्थ्यं राज्ञि सर्वे शशङ्किरे ॥२६९९॥

अतोऽलंकारचक्रेण कुर्वतोऽत्यर्थमर्थनाम् ।
द्वैराज्येच्छो राजबीजी तदा न स समार्प्यत ॥२७००॥

नीतः प्रत्यक्षतां दूरस्थितेऽप्युदयने स तम् ।
विमृष्टवति दुध्रुक्षुस्त्यक्तुमेनं न सोऽशकत् ॥२७०१॥

राज्ञा कर्तुं विनियमं भोजस्य प्रहितो धनैः ।
प्राप द्रङ्गामलंकारो विषयाधिकृतस्ततः ॥२७०२॥

तत्पार्श्वमुद्यतं गन्तुं मां समुत्सृज्य यासि चेत् ।
त्यक्ष्यामि तदसूनेवमूचे भोजस्तु डामरम् ॥२७०३॥

श्वस्त्वां प्रभाते द्रक्ष्यामीत्येतावत् तत्र जल्पति ।
कोट्टादनुक्त्वैव निशस्तुर्ययामे विनिर्ययौ ॥२७०४॥

---

2696 a) D C S′ $P_{1-3}$ $I_3$ SA °र्जितांस्त° (for °र्जिता त° found in SG).
2698. After this *v* चक्कलकम्
2700. b) All Mss read कुर्वता° (for कुर्वतो° suggested with St). —d) All Mss read समर्प्यत (for समार्प्यत suggested). After this *v.* युगलकम्.
2701. ab) The text here appears to be corrupt.
2702. c) All Mss. read प्राप्य (for प्राप suggested with St).
2703. b) $I_3$ SA मामुत्सृज्य, C S′ मासमुत्सृज्य (for मा समुत्सृज्य)

घनवर्षेऽप्यमर्षेण मार्गान्वेषी गवेषणम् ।
यावच्चक्रे क्षपान्ते तं तावच्छुश्राव निर्गतम् ॥२७०५॥

असाध्यप्रतिषेधोऽथ तमह्न्यनुजगाम सः ।
प्रस्थितं शारदादेवीस्थानं यावन्मितानुगः ॥२७०६॥

एकसार्थगतौ ज्ञाती विना तौ ज्ञातियोषिताम् ।
दाक्षिण्यादक्षमः स्थातुमग्रे सागा भवन्निव ॥२७०७॥

प्रवयाः पञ्चषान् वारान् व्यधादारब्धिमेष तु ।
युवाऽप्यकल्यः कौलीनमिति स्वस्य च चिन्तयन् ॥२७०८॥

दुराण्डगमने खण्डितेच्छः संश्रित्य दारदान् ।
संयुयुत्सुर्मधुमतीरोधसा मार्गमग्रहीत् ॥२७०९॥

काऽपि श्यानाश्मसूच्यश्रिमृत्युदंष्ट्राङ्कुरोत्कटान् ।
क्वचिद् रुद्धप्रकाशाभ्रकालपाशान्धकारितान् ॥२७१०॥

प्रभ्रश्यद्धिमसंघातगजव्यूहोल्बणान् क्वचित् ।
काऽपि निर्झरफूत्कारनाराचक्षतविग्रहान् ॥२७११॥

क्वचिद् दुस्स्पर्शपवनस्पष्टस्फुटदसृग्धरान् ।
काऽप्यातपक्षतहिमज्योतिर्निहतदृक्पथान् ॥२७१२॥

दूरावरोहे प्रसृते स्फुटमप्रसृते विदन् ।
ऊर्ध्वावरोहमसकृन्मन्यमानोऽप्यधोगतेः ॥२७१३॥

---

2709. After this *v.* तिलकम् .

2712. a) All Mss. read सुस्पर्श° (for दुस्स्पर्श° suggested with D). —d) $I_3$ $P_3$ SA °र्निहित° (for °र्निहत°)

2713 a) All Mss. read °रोहे (for °रोह suggested with St).

तुषारकालविषमान् षट्सप्तान् पथि वासरान् ।
उल्लङ्घ्य स दरद्राष्ट्रसीमान्तग्राममासदत् ॥२७१४॥

गूढार्पितात्मसामग्रीहताकिंचन्यलाघवम् ।
तं दुग्धघातकोट्टेशः प्रणम्याऽनयदर्घ्यताम् ॥२७१५॥

दूरस्थितो विड्डसीहस्तद्दूतोक्ततदागमः ।
प्रक्रियां प्राहिणोच्छत्रवादित्राद्यां नृपोचिताम् ॥२७१६॥

आदिष्टदिष्टवृद्धिश्च राष्ट्रे कोट्टाधिपेन सः ।
अकारयत् स्वकोशस्य स्वामित्वं राजबीजिनः ॥२७१७॥

राजायमानो भोजोऽथ राजवासगतोऽर्चितुम् ।
आनिन्ये राजवदनापत्येनाऽभ्येत्य पक्ष्यताम् ॥२७१८॥

स पित्रैकान्ततो राज्ञो भिन्नेन प्रहितोऽन्तिकम् ।
तेनाऽज्ञाय्यरिनीत्युग्रपाशाग्रस्थापनोपमः ॥२७१९॥

कार्यगौरवविश्वासाभावव्यतिकरोचितम् ।
संदिश्य प्राहिणोत् तं स न स्वीकुर्वन्न चोत्सृजन् ॥२७२०॥

किमाप्तोऽहं किमेकान्तभिन्नो राज्ञः शनैरिति ।
मां ज्ञास्यसीति तं दूतैः स राजवदनोऽवदत् ॥२७२१॥

---

2714. After this *v* कुलकम् .

2715. c) St SA D $P_{1,3}$ $I_3$ S′ दुग्धघाट्ट°; C दुग्धघाट्ठ°, $P_2$ दुग्धघटा° (for दुग्धघात° suggested, cf. *v* VIII. 2468). —d) St °र्च्यताम् (for °र्घ्यताम् )

2716. b) D (before suggestion) $P_{1-3}$ $I_3$ SA °गमम् (for °गमः). —d) C S′ SA °त्राद्यान्नृपो° (for °त्राद्यां नृपो°).

2717. c) All Mss. read अवारयत् (for अकारयत् suggested with D).

2718. b) D C S′ $P_{1-3}$ °गतोचितम् ; $I_3$ SA °गतोचितुम् , SG °गतोचिताम् (for °गतोऽर्चितुम् suggested with St). —d) D C S′ $P_2$ $I_3$ पक्षताम् (for पक्ष्यताम् ).

तस्य दार्ढ्यं दर्शयितुं गोत्रिवैरिमिषान्नृपे ।
ब्रुवाणेऽथ विदोषत्वं नागाद्यैरग्रहीद् रणम् ॥२७२२॥

सामग्र्यूनः शनैः स्थैर्यं ततः साम्यमथ क्रमात् ।
आधिक्यं चाऽऽदधे तेषां विग्रहैर्धैर्यनिष्ठुरः ॥२७२३॥

तथा प्रतिष्ठां स प्राप तस्याऽपूर्वस्य भूमिजाः ।
दास्यमेत्य यथा व्रीडां नाऽगुर्नागस्य बान्धवाः ॥२७२४॥

स हि त्यागक्षमास्तम्भालोभादिगुणभूषितः ।
अभिगम्योऽभवन्नित्याभ्यस्तभूतिरिवोन्मिषन् ॥२७२५॥

स्थैर्यं पृथ्वीहरादीनां साश्रयाणां न कौतुकम् ।
आडम्बरो निरालम्बस्याऽस्य स्तुत्यस्तु विस्तृतः ॥२७२६॥

ग्रथयन् पृथुलान् व्यूहांश्चौराटविकघोषिकैः ।
क्रान्तग्रामोऽथ तस्थौ स भोजादीन् प्रतिपालयन् ॥२७२७॥

जहुरन्योन्यसंघर्षसेर्ष्यामात्यमतेन वा ।
ततो लुण्ठिप्रियत्वाद् वा नीतिमन्येऽपि डामराः ॥२७२८॥

उद्धातध्वंसितां विप्लवेच्छा लोठनबन्धने ।
याऽधात् तेषां तदानीं सा जगाम शतशाखताम् ॥२७२९॥

---

2722. [a]) C S′ तस्यादा° (for तस्य दा°). —[b]) C गोत्र° (for गोत्रि°). —[d]) All Mss. read रणे (for रणम् suggested with St).

2723. [a]) All Mss. read सामग्री न. (for सामग्र्यून° suggested with St).

2725. [b]) C °षितम्; D (before suggestion) S′ $P_{1,2}$ $I_3$ °षिताम्; $P_3$ °षिताः (for °षित°).

2728 [b]) D (before suggestion) C S′ $P_{1,3}$ $I_3$ SA व, $P_2$ य (for वा suggested with St D).

2729. [a]) D $P_3$ °ध्वसिना (for °ध्वासिता).

त्रिल्लको जयराजश्च राज्ञा संवर्धितावपि ।
अहार्ष्टां नैव तपसा विवशौ चक्रमीलनात् ॥२७३०॥

यो घूकानामिव श्वभ्रमामयानामिव क्षयः ।
दैत्यानामिव पातालं यादसामिव सागरः ॥२७३१॥

आश्रयः सर्वदस्यूनां त्रिल्लको माययोल्बणः ।
स देवसरासाधीशं संबध्नन् विप्लवं व्यधात् ॥२७३२॥

काङ्क्षन्तोऽथ तदाऽऽक्षेपं क्षोणीत्राणार्थिनो द्विजाः ।
प्रायं नृपतिमुद्दिश्य चक्रिरे विजयेश्वरे ॥२७३३॥

अकालदस्युनिर्माथं जानतोऽभ्यर्थनां न ते ।
राज्ञोऽगृह्णंस्ततः सोऽभूद् दाक्षिण्यात् तत्सभानुगः ॥२७३४॥

प्रस्थातुं पार्थिवे सज्जे ज्यायान् यो विप्लुतेष्वभूत् ।
स जातोत्पातपिटको जयराजो व्यपद्यत ॥२७३५॥

भाग्यवानेकतोजातदस्युवैवित्त्यमीशिता ।
ततो मडवराज्यं स विप्रप्रीत्यै विनिर्ययौ ॥२७३६॥

अमात्यदत्तवैमत्यैः सशाठ्यं मठैरथ ।
द्विजैर्निषिद्धोऽलकारो मन्त्री राज्ञोज्झितोऽन्तिकात् ॥२६३७॥

स व्यवस्थापने दुस्स्थदस्यूनां सोद्यमः सदा ।
सेर्ष्याणां प्रत्यभात् तेषां तद्दोषपरिपोषकः ॥२७३८॥

---

2730. c) All Mss. read अकार्ष्टां (for अहार्ष्टां suggested).

2732. After this *v.* युग्मम् .

2734. b) All Mss read जानते° (for जानतो° suggested with St)

2737. a) D (before suggestion) °वैमात्यै°; D suggests °वैयात्यै (for °वैमत्यै°). —b) St स्वशाद्य°, S′ $P_3$ $I_3$ SA स्वशाठ्य (for सशाठ्य).

त्रिल्लकोन्मूलनं कुर्यां कृत्वा द्वैराज्यभञ्जनम् ।
प्रतिज्ञायेति नृपतिर्विप्रान् प्रायान्न्यवीवरत् ॥२७३९॥

त्रस्तोऽथ त्रिल्लकस्तैस्तैरप्रियैरुदवेजयत् ।
अनुद्विग्नमुखो गूढामयो रोगान्तरैरिव ॥२७४०॥

जयराजानुजं राज्ञा यशोराजं निवेशितम् ।
तन्मतेनाऽवचस्कन्द भ्रातृव्यं राजकाभिधः ॥२७४१॥

त्रातुं तं देवसरसं हतारात्याश्रितं गतः ।
सज्जपालोऽल्पसैन्यत्वात् संदिग्धविजयोऽभवत् ॥२७४२॥

ज्ञातोदन्तस्ततोऽभ्येत्य रिल्हणो रणमुल्बणम् ।
जयलक्ष्मीकटाक्षाणां प्रथमातिथितामगात् ॥२७४३॥

मन्दरेणाऽथ तेनाऽरिवारिराशौ विलोडिते ।
कल्पोऽभूत् सज्जपालाब्दस्तुच्छारातिजलाहृतौ ॥२७४४॥

जितेऽपि राजके स्वोर्व्यां विनाऽनुग्राहकं क्षमः ।
न बभूव यशोराजः शून्ये बाल इवाऽऽसितुम् ॥२७४५॥

प्रतीक्षमाणो द्वैराज्यपर्याप्तिं क्ष्माभुजेऽकरोत् ।
त्रिल्लक कालहरणं तैस्तैर्मायानतिक्रमैः ॥२७४६॥

यथाकालं ततो गूढोपोढान्मण्डलकण्टकान् ।
स्वपक्षसूचीविशिखान् दिक्षु श्वाविदिवाऽक्षिपत् ॥२७४७॥

---

2744. c) St P3 कल्यो° (for कल्पो°). All Mss. read °पालाब्धि° (for °पालाब्द° suggested with St)

2746. a) SA I3 प्रतीक्ष्यमाणो (for प्रतीक्षमाणो).

अथ पार्थ्वीहरियोऽभूच्चतुष्क कोष्ठकानुजः ।
राज्ञा भ्रात्रा समं बद्धः कारागारात् पलायितः ॥२७४८॥

स तेन निजजामात्रा रक्षितः स्वोपवेशने ।
असंख्यडामरयुतः शमाला संप्रवेशितः ॥२७४९॥

आकर्ण्य कुररस्येव निनादं तस्य भेजिरे ।
व्यक्ततां दस्यवो गूढा ह्रदस्थाः शफरा इव ॥२७५०॥

दृप्यन्तं राजवदनं षष्ठचन्द्रोऽथ गर्गज. ।
रुरोध प्रलयोद्वृत्तं वेलाद्रिरिव वारिधिम् ॥२७५१॥

वर्धमानक्षीयमाणसंहती तौ त्वजायताम् ।
घर्मे सजम्बालहिमौ तुषाराद्रितटाविव ॥२७५२॥

षष्ठस्य जयचन्द्रश्च श्रीचन्द्रश्चाऽनुजौ ततः ।
दूरविप्रकृतौ राजमन्दिरानाप्तवेतनौ ॥२७५३॥

ज्ञातनिर्वृत्त्यपर्याप्ती धुर्यकार्यवशप्रियात् ।
प्रतीक्ष्यादग्रजाद् राज्ञः शङ्कितावशुभागमम् ॥२७५४॥

---

2748. b) St erroneously emends लोष्ठका°; D कोष्टका° (for कोष्ठका°, cf St Tr.)

2749. After this *v.* युग्मम् .

2750. a) $SA_2$ gloss कुररस्येति कुरर. नदहूर इति भाषया कश्मीरेषु प्रसिद्ध· (for कुररस्य).

2751. b) $SA_2$ (after corr.) St $P_{1-3}$ गग्गज (for गर्गज ).

2752. c) C S′ $P_3$ °हिम° (for °हिमौ).

2753. d) All Mss. read °रावाप्त° (for °रानाप्त° suggested with St. Tr.).

2754. a) St $P_{1,3}$ $I_3$ °निवृत्त्य° (for °निर्वृत्य°).

कटकाद् विद्रुतौ राजवदनान्तिकमागतौ ।
श्वशुर्यावपि भूभर्तुरागतौ प्रतियोगिताम् ॥२७५५॥

शैलप्रस्थानपथिकैरसंख्यैरथ खाशकै ।
स पूर्वराजकोशार्थी भूतेश्वरमलुण्ठयत् ॥२७५६॥

तस्कराक्रान्त्यशरणं बलवन्निहताबलम् ।
अराजकमिवाऽशेषं राष्ट्रं कष्टां दशामगात् ॥२७५७॥

उदयं कम्पनाधीशं रिल्हणं च ततो नृपः ।
चतुष्कयुद्धमादिश्य नगरं विवशोऽविशत् ॥२७५८॥

पार्थ्वीहरिस्तु दुस्साध्यो महाव्याधिरिवौषधैः ।
स्तम्भितोऽभूत् तयोः सैन्यैः संहन्तुं न त्वशक्यत ॥२७५९॥

कालापेक्षां स्वपक्ष्याणां दुर्बुद्धिं वाऽनुरुन्धतः ।
आसीन्मन्दप्रतापत्वं रिल्हणस्याऽपि तत्क्षणम् ॥२७६०॥

विड्डसीहस्तु विज्ञातभोजोदन्तो व्यसर्जयत् ।
दूतानानेतुमुर्वीशान् सुबहूनुत्तरापथे ॥२७६१॥

अपि वित्तेशवनितारहोवैयात्यवेदिभिः ।
अपि किंमानुषपुरीगीतोद्गारिदरीगृहैः ॥२७६२॥

अप्यौष्ण्याद् वालुकाम्भोधेः शीतावेदिभिरेकतः ।
अपि शृङ्गानिलैः प्रीतान् कुर्वाणैरुत्तरान्कुरून् ॥२७६३॥

---

2755. d) All Mss. read प्रतियोग्यताम् (for प्रतियोगिताम् suggested with St).

2757. a) D C S′ $P_{1,3}$ °क्रान्त° (for °क्रान्त्य°).

2758 a) $P_{1-3}$ $I_3$ SA °धीश° (for °धीश).

2759. a) $P_{1-3}$ $I_3$ St दुस्साधो (for दुस्साध्यो). —d) D $P_2$ $I_3$ $P_3$ सहर्तुं (for सहन्तु)

हिमाद्रिकच्छैर्म्लेच्छेशाः प्रधावन्तोऽधिशिश्रियुः ।
दिशस्तुरंगै रुन्धन्तः स्कन्धावारं दरत्पतेः ॥२७६४॥

राज्ञां संघटनं यावद् व्यधादेवं दरन्नृपः ।
दिग्भ्यो भोजान्तिकं तावत् तत्सामन्ताः प्रपेदिरे ॥२७६५॥

स पिप्रिये तानज्ञातालापान् वीक्ष्य गिरिव्रजात् ।
प्रीतिप्ररूढप्रणयानवरूढान् कपीनिव ॥२७६६॥

जयचन्द्रादयो राजवदनप्रहिता अपि ।
कीराः काश्मीरिका पार्श्वमभजन् राजबीजिनः ॥२६६७॥

अभ्यर्णस्थान् बलहरप्रमुखांश्च विदूरगान् ।
अपुष्णात् साल्हणि स्वर्णैः परां कोशेशतां भजन् ॥२७६८॥

ततः स्वजनितोत्पिञ्जतया निश्चोद्यचाक्रिकः ।
भोजेन राजवदनः समगंस्तापसाध्वसम् ॥२७६९॥

तयोरकृतकर्तव्यविशेषेणेतरेतरम् ।
जातसौष्ठवयोः क्षिप्रमविश्वासो व्यशीर्यत ॥२७७०॥

अभ्यमित्रीणतां तस्याऽनिच्छतो दरदं विना ।
मदात् साहायकार्यैच्छन्मितानेव स तान् हयान् ॥२७७१॥

स्युश्चेत् सोढाग्रिमाटोपाः कटकस्याऽस्य नो द्विषः ।
तत्साम्यमुन्मिषेद्यद् वा भङ्गो भूयोऽपि योगभित् ॥२७७२॥

---

2764. d) $P_{1,3}$ $I_3$ SA स्कन्दा° (for स्कन्धा°). After this v. तिलकम्.

2767. c) St (before corr. in corrigenda) काश्मीरका: (for काश्मीरिका.).

2769. a) St $P_2$ C S′ $I_3$ सुजनितो° (for स्वजनितो°). —b) St $P_3$ $I_3$ °चक्रिक (for °चाक्रिक)

तस्मात् सर्वाभिसारेण रणमेकं ममेच्छतः।
विजयावजयावाप्तिरेकाहान्तरिता मता ॥२७७३॥

व्याजहारेति यद्भोजस्तद्देषोऽथ हसन् स्मयात्।
निन्ये तद्दारदं सैन्यमुपेक्ष्याऽऽगामिनीश्चमूः ॥२७७४॥

संकटान्ते वितीर्णानुयात्रस्तेषां प्रसर्पताम्।
स राजबीजी शुश्राव दरद्राजमथाऽऽगतम् ॥२७७५॥

तत्संगमाय व्यावृत्ते तस्मिन् कोट्टान्तिकं पुनः।
प्रावेशयद् बलहरो मातृग्रामं स तद्बलम् ॥२७७६॥

दिशस्ततो वीक्ष्य वाहैर्भ्रान्तिवातमृगा इव।
निसर्गधीरधीर्गर्गिर्न धैर्यात् पर्यहीयत ॥२७७७॥

तस्य सर्वेऽपि नीलाश्वडामराः स्वे च सैनिकाः।
विपक्षैः सह बद्धैक्याः सैन्यान् दुध्रुक्षवो ययुः ॥२७७८॥

स तथा विषमस्थोऽपि प्रस्थित्यै प्रार्थितो निजैः।
म्लानाननः प्रभुं द्रष्टुं न क्षमोऽस्मीत्यभाषत ॥२७७९॥

स सूर्यवर्मचन्द्रस्य न जातः कश्चिदन्वये।
उपयोगाय यो नाऽगान्मल्लाभिजनजन्मनाम् ॥२७८०॥

भोजं सभाजयित्वाऽथ विड्डसीहः सपार्थिवः।
सारैः समं स्वसामन्तैर्विजयाय व्यसर्जयत् ॥२७८१॥

---

2774 d) D C S′ SA $P_2$ $I_3$ °गमिनी° (for °गामिनी°) After this v. तिलकम्

2780 b) C S′ SA $P_{2,3}$ $I_3$ कैश्चि° (for कश्चि°).

2781 c) C S′ $P_1$ ससा° (for स्वसा°).

ततो म्लेच्छगणाकीर्णा व्रजन् संवाहयंश्चमूः ।
प्रयाणमात्रान्तरितः पृष्ठे तस्य बभूव च ॥२७८२॥

प्रादुष्कृतजगत्क्षोभे बले तत्राऽनुयायिनि ।
उत्साहात् साल्हणिर्मेने कृत्स्नां हस्तगतां महीम् ॥२७८३॥

वाजिभिस्तर्जकैर्म्लेच्छराजैश्च बलमूर्जितम् ।
स्थाने समुद्रधाराख्ये निर्बबन्धाऽथ तत्पदम् ॥२७८४॥

स राजवदनस्ताद्दग्दुर्जयाग्र्यबलोज्ज्वलः ।
मृत्युदन्तान्तरे दिष्टं षष्ठचन्द्रममन्यत ॥२७८५॥

ततः प्रावृट्पयोवाहकृतोदीपपरिप्लुता ।
संजायते स्म वसुधा समीभूतजलस्थला ॥२७८६॥

धरित्रीपानपात्रेऽम्भश्शीधुपूर्णे दधुर्द्रुमाः ।
मग्ना लक्ष्यशिखामात्रा वलन्नीलोत्पलोपमाम् ॥२७८७॥

षष्ठस्य संकटं जानन् भूभृच्छ्रेष्ठैर्बलैः समम् ।
अथोदयद्वारपतिं तं च धन्यं व्यसर्जयत् ॥२७८८॥

वाहिनीरुद्धमार्गौ तौ पदवीमनुसस्रतुः ।
मार्गे धनंजयस्येव शैनेयपवनात्मजौ ॥२७८९॥

लम्बाम्बुदेऽम्बरे दूरं वारिपूर्णे च भूतले ।
स्यूतेव विद्युद् ददृशे भिन्नद्योतननिस्स्वना ॥२७९०॥

---

2784. a) All Mss. read °स्तर्जितो, St suggests °स्तर्जिते (for °स्तर्जकै° suggested)

2785. d) D स्वम°; $P_3$ त्वम° (for °मम°).

2786 a) SA $P_2$ $I_3$ प्रावृड्°, $P_3$ प्रावृत्° (for प्रावृट्°).

2787. b) St °सीधु° (for °श्शीधु°).

2789 Cf. v. VIII 469.

शोभामात्रोदितागर्हपरिबर्हाबहिष्कृतः ।
तत्राऽविभक्तकटकः पार्थिवः समजायत ॥२७९१॥

अनास्थो राजवदने सत्त्वावष्टम्भयोः पुरा ।
अत्राऽपरो न निक्षेप्यो राजबीजीति दारदान् ॥२७९२॥

त्रिल्लक संदिशन् दूतैर्वृद्धिं पार्थ्वीहरिं नयन् ।
तयोरेकस्य सामर्थ्यादैच्छत् तं हस्तपातिनम् ॥२७९३॥

अभित्तिलिखितालेख्यकल्पं बलहरस्य तत् ।
तादृग्विलोक्य सामर्थ्यमथ राज्ञश्च सर्वतः ॥२७९४॥

विभक्ताशेषसैन्यस्य तत्र तत्राऽरिसंकटे ।
ज्ञात्वाऽप्रतिसमाधेयच्छिद्रमुन्मुद्रदुर्नयः ॥२७९५॥

अङ्कशाश्वाविदाचारश्चिरं स्वाङ्गैः स गोपितम् ।
बहिर्दुर्धर्षमत्याक्षीद् द्वितीयमपि कण्टकम् ॥२७९६॥

ध्वान्तेऽम्बुधरजालान्ध्यमहावाते रजोभरः ।
स्वपक्षभेदयोर्ज्ञातकर्णेजपमहोद्यमः ॥२७९७॥

कुलच्छेदकृतो राज्ञस्तत्र तत्राऽतिसंकटे ।
अशान्तजागरोऽत्यर्थमनर्थपरिपोषकः ॥२७९८॥

सोऽथ शूरपुरेऽकस्माद् बहुभिः सह डामरैः ।
तेन संपूरितः पृथ्वीहरजो लोठकोऽपतत् ॥२७९९॥

---

2793. After this *v.* युग्मम् .

2796 After this *v.* तिलकम् .

2799 d) For लोठक cf. *vv.* VIII 2496, 2748, 2912, 3313. After this *v.* तिलकम् .

तस्य संघट्टतः कन्थां प्रयातं वैकृतं चिरात् ।
पालीभङ्गे तटस्येव प्रावृट्पूर्णस्य लक्ष्यताम् ॥२८००॥

निद्राणोपेन्द्रजठरप्रसादनिसृतं जगत् ।
समेतमिव तत्सैन्यं प्रत्यभाज्जलदागमे ॥२८०१॥

यावद्भिः पार्यते नेदृक्संख्यातुमपि तद्बलम् ।
भर्तव्यकल्पैः सुस्वल्पयोधमध्यगतैरपि ॥२८०२॥

तावद्भिरनुगैः पिम्वदेवद्रङ्गाधिपो युधि ।
तद्योधान्याम्यहरितः सरितश्चाऽतिथीन् व्यधात् ॥२८०३॥

तटोज्ज्वलैश्चिताचक्रैर्बिम्बितैस्तटिनीजले ।
मृतानामपि संस्कारः क्रियमाण इवाऽभवत् ॥२८०४॥

इति विस्मृतमृत्युः स कुर्वन्नेकाहमाहवम् ।
कथंचिदाप्तैरन्यैद्युर्भग्नसारोऽपसारितः ॥२८०५॥

पुरे स शून्ये सैन्यानि संगृह्णंस्तत्र सर्वतः ।
द्वित्रैरहोभिर्नगरं सुखग्राह्यममन्यत ॥२८०६॥

इच्छां पद्मपुरास्कन्दे मन्दत्वं त्रिल्लकोऽनयत् ।
पृष्ठस्थयोर्यशोराजकम्पनाधीशयोर्भयात् ॥२८०७॥

---

2801. b) D $P_3$ °प्रमाद° (for °प्रसाद°)

2802. c) D $P_3$ त्यक्तव्य° (for भर्तव्य°).

2803. b) D °इङ्गाधि° (for °द्रङ्गाधि°). —c) $P_3$ $I_3$ SA °हरित° (for °हरित°). After this *v* युग्मम् .

2804. a) D $P_{1-3}$ तदोज्ज्वलै°; C S' ततोज्ज्वला° (for तटोज्ज्वलै°).

न भृत्यैस्तद्विधः सिद्धश्चाऽस्यैकस्मिन्नसंमते।
विधेयान्यलवन्यस्य डामरे होलडौकसि ॥२८०८॥

द्वैराज्ये सुस्सलस्याऽपि नैवाऽदृश्यत तादृशः।
अनर्थौ यादृगुत्तस्थौ तत्सुतस्य समन्ततः ॥२८०९॥

चतुष्कमवधीर्याऽथ राज्ञा पादगदोपमम्।
रिल्हणः प्रैषि तं ग्रीवागण्डतुल्यं व्यपोहितुम् ॥२८१०॥

प्रस्थितस्तत्प्रमाथाय शमालैः सोऽन्वबध्यत।
व्रजन् प्राग्ज्योतिषं हन्तुं पार्थः संशप्तकैरिव ॥२८११॥

अधावच्चाऽभ्यमित्रीणस्तान् व्यावृत्त्य निपातयन्।
पश्चाकरोन्मुखः पृष्ठलग्नान् भृङ्गानिव द्विपः ॥२८१२॥

रणश्रान्तेन गमिता त्रियामा तेन रामुषे।
गर्जत्कुल्यार्पितारातिपृतनानादसंस्क्रिये ॥२८१३॥

तं कल्याणपुरं प्राह्णे विशन्तं सोऽग्रमागतः।
रुरोधाऽभ्येत्य भूयोऽपि बलैर्भरितदिङ्मुखः ॥२८१४॥

आपतन्नेव चाऽरातिपदातीन् संमुखागतान्।
दृष्टनष्टान् व्यधाच्छागानिवाऽग्रेऽजगलो गिलन् ॥२८१५॥

---

2808. d) SA होलळौ°, S′ लौलरौ°; C होलरौ° (for होलडौ°).

2810. c) All Mss. except SG read रिल्हणप्रेषित (for रिल्हणः प्रैषि तं).

2813. b) St (before suggestion) C S′ $P_{1,2}$ $I_3$ रामशे; D (before suggestion) $P_3$ रामुशे (for रामुषे, cf. *v.* II 55). —c) All Mss read गर्जन्कु° (for गर्जत्कु° suggested with St). —d) D C S′ $P_{1,3}$ °नाश° (for °नाद°).

2814. a) All Mss read तत्कल्या° (for त कल्या° suggested with St).

उद्वृत्तमारुतस्येव तस्याऽऽपाते पदातिभिः ।
तत्यजे रिल्हणः पर्णैर्हेमन्त इव पादपः ॥२८१६॥

पश्यतस्तस्य ते विद्रवन्तो जिह्मा न जिह्रियुः ।
देहस्पृहापारमित्यै कस्यौचित्यमनत्ययम् ॥२८१७॥

आप्तैरथाऽपसृत्य स्वैरर्थितो रिल्हणोऽब्रवीत् ।
नयन् प्रजासृजश्चाऽऽस्यं स्वामिभक्तिस्मृतेः स्मितम् ॥२८१८॥

धीप्रभावाविशेषेऽपि जन्तोर्जन्तोर्यदीशिता ।
भृत्यभावेऽपि यो लुप्तकृत्यो धिक् तस्य जीवितम् ॥२८१९॥

जातं वक्त्रसरः श्मश्रुराजिनीलाब्जभोज्ज्वलम् ।
जराकैरवगौरं च राज्ञः पादान् प्रपद्य यान् ॥२८२०॥

म्लायत्सु तेषु भ्रूभङ्गभृङ्गभ्राजिष्णुभिर्भवेत् ।
कथं लक्ष्मीविलासैस्तदखण्डैरविडम्बितम् ॥२८२१॥

एषा कापुरुषासेव्या धीराणां नैव पद्धतिः ।
यदायासलवत्रासात् सौख्यवैमुख्यभागिता ॥२८२२॥

वस्त्रापासन एव शीतजनितत्रासोऽथ तीर्थाम्बुभिः
स्नाने ह्लादसुखोपलब्धिरसमब्रह्मानुभावोपमा ।
वैह्वल्यं समरे वपुर्विजहतामेवं किलोपक्रमे
कैवल्याख्यसुखोपलम्भपरमा पश्चात्पुनर्निर्वृतिः ॥२८२३॥

---

2818. c) All Mss. read प्रजासृजा साम्य (for प्रजासृजश्चाऽऽस्य found in SG *sec. manu*)

2819. a) D $P_{1-3}$ $I_3$ ह्री˙˙ वा; C S′ ह्रीप्रभावा (for धीप्रभावा suggested).

2820. b) All Mss. read °भोजनम्; St suggests °भाजनम् (for °भोज्ज्वलम् suggested with D).

2821. After this *v.* युग्मम् .

2823. c) $SA_1$ (before corr.) वैह्वल्ये (for वैह्वल्य). —d) C वैकल्पा°; S′ SA $P_2$ $I_3$ वैकल्या° (for कैवल्या°).

एवमुक्त्वा परानीकमेकाकी स व्यगाहत ।
गृह्णञ्शरान् हरिप्रोथश्वाससंदिग्धशूत्कृतान् ॥२८२४॥

स्वर्णत्सरुप्रभाजालहरितालोज्ज्वलोऽभजत् ।
खड्गपट्टनटस्तस्य रणरङ्गोत्तरङ्गताम् ॥२८२५॥

तत्खड्गस्य घ्नतः खड्गाञ्जीवैर्जालच्छलाद् ध्रुवम् ।
उत्थाय लग्नं शत्रूणां तृणैस्तृणमणेरिव ॥२८२६॥

आजौ तमनुजग्मुस्ते यैरगण्यन्त वैरिणः ।
तिर्यञ्चोलक्ष्यतां यातास्तेषां प्राणास्तृणान्यपि ॥२८२७॥

संप्रविष्टो मुखान् मृत्योः कैश्चिन्मार्गैः स निर्गतः ।
तिमेः संमीलितास्यस्य श्रोत्ररन्ध्रैरिवोदकम् ॥२८२८॥

शश्वत्कुर्वन् परावृत्तीः श्रमशान्त्यै विनिर्गतः ।
प्रक्षीणभूयिष्ठबलो लब्धोत्सेको रिपावभूत् ॥२८२९॥

पृष्ठतः स पपाताऽथ चतुष्क· पुष्कलैर्बलैः ।
साहायकागतं प्राक् स यं स्वं कंचिदमन्यत ॥२८३०॥

तस्योभयमुखस्याऽरिसैन्यस्याऽहेरिवेक्षणात् ।
न संरम्भः शिखण्डीव परं ताण्डवितोऽभवत् ॥२८३१॥

तौ व्यूहावथ पर्यायैर्मुखपृष्ठं प्रदर्शयन् ।
सोऽक्षिणोद् युधि मन्थाद्रिर्मथनेऽब्धितटाविव ॥२८३२॥

---

2825. a) SA $P_{1,2}$ $I_3$ °प्रजाजा° (for °प्रभाजा°).

2830. a) St C S′ $P_{1,2}$ $I_3$ पृष्ठतोथ (for पृष्ठत· स).

2831. c) All Mss. read सरभे (for सरभ· suggested with St).

कीलनिश्चलयोर्भ्राम्यन्नसकृद्वाऽन्तरे द्वयोः ।
कुविन्द इव पूरण्योः तुरंगमजवान्वितः ॥२८३३॥

भास प्रत्यग्रहीत् तस्य तमेकपृतनारयम् ।
एकतोऽम्भोभरं द्वीपस्येव कूलबिलोद्गमः ॥२८३४॥

तेन वैरिचमूश्चक्रे लुलितायुधकुण्डला ।
क्रीडता चण्डवेगेन पुरुषायितुमक्षमा ॥२८३५॥

त्रासपाण्डून् द्विषां वक्त्रकुम्भान् स्वेदाम्भसाचितान् ।
स कुर्वन् भूभुजं जाने भूयो राज्येऽभ्यषेचयत् ॥२८३६॥

स च पार्थ्वींहरिश्चाऽऽस्तामन्योन्यस्य क्षपाक्षणे ।
सज्जौ मान्त्रिकवेतालाविव रन्ध्रगवेषिणौ ॥२८३७॥

साहायकागतान् साक्षीकृत्य क्ष्मापतिसैनिकान् ।
अन्येद्युः सोऽकरोच्छत्रुं वनमार्गावगाहिनम् ॥२८३८॥

पर्यस्तशौचान् संचिन्त्य त्रिल्लकादीनथाऽऽययौ ।
सञ्जपालस्तृतीयस्मिन् दिवसे रिल्हणान्तिकम् ॥२८३९॥

नृपप्रतापग्लपितः स ताभ्यां पर्यशोष्यत ।
वनान्तः शुचिशुक्राभ्यां घुणक्षीण इव द्रुमः ॥२८४०॥

---

2833. c) All Mss except C S′ have a *lacuna* (for पूरण्यो ). —d) D $P_{1,2}$ $I_3$ SA °तुरा°; St $P_3$ °त्वरा° (for °जवा°).

2834. b) D (before suggestion) SA $P_{1-3}$ $I_3$ °नावयम् (for °नारयम्). —c) D °म्भोधर (for °म्भोभर).

2836. c) SA $P_{1,2}$ $I_3$ °भुजां (for °भुज).

2837. a) C S′ पात्कीं°; $P_{1,3}$ पात्तवीं°, $I_3$ पार्श्वीं°, $P_2$ पाक्षी°(for पार्थ्वीं°).

2838. b) All Mss. read °कृत° (for °कृत्य suggested with D St).

2839. a) $P_1$ $I_3$ सचित्य (for सचिन्त्य).

चितानल इवाऽऽसारैर्युद्धैः शममनाश्रितः ।
उदयेन शनैर्निन्ये चतुष्कोऽपि मितोष्मताम् ॥२८४१॥

दारदं तद् बलं दृप्यद्धेमसंनाहवाहिभिः ।
हयैरवरुरोहाऽद्रिकुहरादाहवोन्मुखम् ॥२८४२॥

तुरुष्कलोकेनाऽऽक्रान्तान् देशांस्तद्वशमीयुषः ।
शङ्कमानैर्जनैर्ज्ञाता कृत्स्ना म्लेच्छावृतेव भूः ॥२८४३॥

प्रयाणमात्रान्तरिते धन्ये द्वारपतावपि ।
साहसं निस्सहायस्य तत्खङ्गैरग्रतोऽभवत् ॥२८४४॥

ज्वलत्कनकसंनाहं तत्सैन्यं स द्विषोऽरुधत् ।
कचज्ज्वालावलिं दावं सनिर्झर इवाऽचलः ॥२८४५॥

विधूय जयचन्द्रादीनग्रप्रस्थानरोधिनः ।
बलबाहुल्यदृप्तास्ते व्यगाहन्ताऽऽहवावनिम् ॥२८४६॥

तेषां हयसहस्राणि त्रिंशद्विंशच्चतुरंगमैः ।
रंहसा प्रतिजग्राह निजग्राह च गर्गजः ॥२८४७॥

तस्याऽसुहृद्भिर्ददृशे पौरुषं तदमानुषम् ।
एकैकस्याऽग्रतो यत् स वैश्वरूप्यमिवाऽऽदधे ॥२८४८॥

अश्ववङ्काग्रविन्यस्तवक्त्रास्ते विद्रुताः क्षणात् ।
जगाहिरे कापुरुषा गिरीन् किंपुरुषा इव ॥२८४९॥

---

2841. b) $P_1$ °बैद्ध. (for °युद्धै.).

2842. a) D St $P_{1-3}$ $I_3$ SA have a *lacuna* (for तद्). D (before suggestion) $P_{1-3}$ $I_3$ SA दृप्ये° (for दृप्य°)

2844. d) SA तत्खाङ्गे°, $P_3$ तत्खङ्गा°, $P_2$ तत्खडे°, $I_3$ तत्खङ्गे° (for तत्खङ्गै°).

2846. c) D C S' $P_1$ °दीप्ता° (for °दृप्ता°).

2849. a) C S' °वल्गा° (for °वङ्का°)

अभूमिज्ञतया शाठ्याच्चैष जातः पराभवः ।
श्वस्तदस्मान् पुरस्कृत्य जयं प्रत्याहरिष्यथ ॥२८५०॥

इत्युक्ता राजवदनजयचन्द्रादिभिर्निशि ।
तथेति मिथ्याऽकथयन् दारदा विद्रवोन्मुखाः ॥२८५१॥

प्रवेश्य धन्यद्वारेशौ दूरं बलहरो बली ।
पेच्छत् तानभिसंधातुं रुद्ध्वा पाश्चात्यपद्धतीः ॥२८५२॥

स्कन्धावारेण सार्धं च दरदा राजबीजिनम् ।
विधातुं विदधे बुद्धिं तं ततस्तारमूलके ॥२८५३॥

चिकीर्षति ततस्तस्मिन् मत्तेष्वन्धेषु दस्युषु ।
उत्सेहे सात्हणिः कृत्स्नं राज्यं निश्चित्य निर्जितम् ॥२८५४॥

जयाभावेऽप्यनन्तेहक्सामन्तसहितस्ततः ।
भव्योऽस्मि भवितेत्येवं विचिन्त्योत्सिषिचे च सः ॥२८५५॥

पद्मोन्माथाद् द्विरदरदनैरप्रियैः पद्मबन्धो-
रिन्दौ स्पर्धिन्युदयति वपुः खण्डशः स्वं भ्रियेत ।
तापस्त्यज्येत च रुचिरताभागिभिः सूर्यकान्तै-
र्भद्राभद्रं व्यसनसमये संभवेदप्रतर्क्यम् ॥२८५६॥

---

2851. After this *v.* युग्मम्

2852. c) D St C $P_1$ $I_3$ SA ऐच्छत्तन्न°, S' $P_{2-3}$ ऐच्छन्तन्न° (for ऐच्छत् तान° suggested with St Tr )

2853. a) $P_{2,3}$ $I_3$ SA स्कन्दा° (for स्कन्धा°). —b) All Mss read °बीजिनाम् (for °बीजिनम् suggested with St).

2854. d) All Mss except SG *sec. manu* read निश्चित° (for निश्चित्य).

2855. b) All Mss. read °सहितांस्तत°, D suggests सहित तत. (for सहितस्तत° suggested with St).

2856. c) All Mss. read रुचिरमा° (for रुचिरता° suggested with St).

योो डामरतया भिक्षोः शश्वत्कृच्छ्रेऽप्युपेक्षणात् ।
टिक्कादीनां च कौटुम्ब्याद् भूभर्तुर्द्रोग्घृमूर्धनि ॥२८५७॥

अलवन्यतयाऽनन्यसामान्याश्चर्यवर्धनात् ।
ततः कृच्छ्रोपयोगाच्च विश्वासस्येव मूर्धनि ॥२८५८॥

तौ नागराजवदनौ व्यसनावसरे तदा ।
चित्रं स्वकार्यतात्पर्याद्द्भुतादरतां गतौ ॥२८५९॥

स्वयं विधेयं नागोऽन्यकृतं तं वीक्ष्य विप्लवम् ।
अदूरमर्थमन्येन कृतं कविरिवाऽशुचत् ॥२८६०॥

क्ष्माभृद्विपक्षं स्वं पक्षीकर्तुं क्लृप्ताननं ततः ।
संत्यज्य राजवदनं मां भजस्वेत्यभाषत ॥२८६१॥

संप्राप्तं वः प्रतीक्षध्वं तेजोबलहरात्मजम् ।
युग्याधिरूढं किं नारीमेव स्वां यामिको यथा ॥२८६२॥

इति ते संदिशन्तं च व्यहसन् संविहाय तम् ।
कामधेनुसमं नागं छागाश्लेषो विधिर्न यत् ॥२८६३॥

सर्वः स्वकार्यतात्पर्यात् प्रवर्तेत प्रियाप्रिये ।
स्नेहवैरेऽन्यदीये तु न किंचिदधिगच्छति ॥२८६४॥

---

2857. b) All Mss. [$P_3$ °क्षणा] read °क्षणम् (for °क्षणात् suggested).
2858. c) C $P_{1-3}$ $I_3$ °गाश्च (for °गाच्च)
2859. After this *v* तिलकम्.
2861. c) SA $P_2$ $I_3$ सात्याज्य (for सत्यज्य).
2862. a) SA $P_3$ $I_3$ प्रतीक्ष्यध्व (for प्रतीक्षध्व). —cd) St (before suggestion) SA SL $P_{1-3}$ $I_3$ नारीसेवता, C नारीमिव स्वां, S' नाडीमिव स्वा; D नारीमेव ता; St suggests नाडीसेवता (for नारीमेव स्वां suggested).
2863. S' om. this *v* —b) SA St $P_2$ $I_3$ व्यसहन्स वि° (for व्यहसन् सवि°). —d) St D $P_{1-3}$ $I_3$ SA °षाद्विधि··यत् (for °षो विधिर्न यत् ).
2864. c) C S' स्नेह वता° (for स्नेहवैरे°).

ज्योतिस्तर्जितकान्ति दन्तयुगलं बाध्यं सुधादीधिते-
र्दानास्वादधिया प्रिया मधुलिहां कुम्भस्थली कुम्भिनः।
नागस्यैष विरोधभाक्सरसिजस्येत्यत्र नेन्दो रति-
स्तस्याऽऽप्यायकृतोऽहितोऽयमिति नाऽप्यस्य द्विरेफा द्विषः॥

प्रतिष्ठालोठनं कर्तुं ततो बलहरस्य सः।
आजन्म वैरं संरेभे तेन भूभृद्धितेच्छया ॥२८६६॥

स तथा दारदान् भग्नानभिन्नो भूभुजैष वः।
स भोजान् राजवदनो हन्यादित्यभ्यधान्निजैः ॥२८६७॥

दरद्राजानकानीतनेतारौ कम्पनापती।
प्रख्यातक्षेमवदनमधुभद्राभिधावुभौ ॥२८६८॥

त्रस्यन्भोजसनामा च कोट्टेशो मन्त्रितं रहः।
ब्रुवाणास्तद् व्यहस्यन्त भोजेनाऽन्तरवेदिना ॥२८६९॥

स्फाटिकेनेव सैन्येन तेनाऽग्रे रुद्धमप्यथ।
दिधक्षु राजार्कमहो विड्डसीहेन्धनेऽपतत् ॥२८७०॥

पार्थिवानर्थदुश्चिन्ताऽऽमययक्ष्मपरिक्षतः।
स यत्कृष्णक्षपाक्षीणसोमसाम्यं समाययौ ॥२८७१॥

---

2865. c) C S′ सरस्यै°, St वासस्यै°; D $P_{1-3}$ $I_3$ SA वा·· स्यै° (for नागस्यै° suggested). —d) St D C °हितो (for [अ] हितो°)

2866. b) C S′ सा (for स·).

2867. b) D C S′ $P_1$ $I_3$ °न्नाभिन्नो (for °नभिन्नो)

2868. d) D $P_{1-3}$ $I_3$ °मधु भि°, St SA °मत्ता भि° (for °मधुभद्राभि°)

2870. c) $P_{2,3}$ $I_3$ SA दिदक्षु (for दिधक्षु). —d) C S′ $P_{1,2}$ °सूर्ये°, $I_3$ SA °सूहे° (for °सीहे°)

रोगग्रस्ते रणप्रष्ठे पृष्ठगोतरि भर्तरि ।
तथाऽभियोज्ये स्थाने च भयजर्जरतां गते ॥२८७२॥

आहारस्थं बलहरं विहाय निखिलास्ततः ।
पलायिषत तेऽन्येद्युर्विगाह्य हरिभिर्गिरीन् ॥२८७३॥

दृष्ट्वा बहुमतं प्रातरागन्तारः पुनर्वयम् ।
कथयित्वेति संप्रार्थ्य साल्हणि सह तेऽनयन् ॥२८७४॥

प्राक्पीतकोशो वैवश्यात् स तेषामनुगोऽभवत् ।
भ्रष्टकार्यस्तु वैह्वल्यं श्वभ्रे मज्जन्निवाऽऽदधे ॥२८७५॥

मुहुः सर्वशिरोद्रिक्तरक्तपूर्णमिव ज्वलत् ।
अवरोहदनच्छाम्बुसोपानाश्मनिभं मुहुः ॥२८७६॥

ज्ञातेन पतितेनैव मुहुर्व्योम्ना महीसमम् ।
व्रजतस्तस्य वैलक्ष्याद्लक्ष्याक्षमभून्मुखम् ॥२८७७॥

दध्यौ च धिङ्नो ये शश्वत्प्रभावं वयमीदृशम् ।
राज्ञो दृष्ट्वाऽप्यनात्मज्ञा जानीमो मर्त्यधर्मताम् ॥२८७८॥

प्रतिभाप्रौढिनिर्भाततत्त्वानां नाऽन्यथा गिरः ।
महाकवीनामेतादृक्प्रतापानलवर्णने ॥२८७९॥

---

2873 c) C S′ पलायितास्ततोऽन्ये°; D (before suggestion) $P_3$ पलाय्यत तैरन्ये°; $P_{1,2}$ $I_3$ SA पलायिततेन्ये° (for पलायिषत तेऽन्ये° suggested with St D). After this *v.* युग्मम् .

2875. a) SA $P_2$ °कोषो (for °कोशो).

2876. a) C S′ वपु (for मुहु). C S′ SA $P_2$ $I_3$ °दृक्त° (for °द्रिक्त°). —b) D $P_2$ $I_3$ SA °व ज्वलन् ; C S′ वोद्वहम् ; $P_1$ °व ज्वलम् (for °व ज्वलत् ).

2877 a) St C S′ °तेनेव (°तेनैव).

2879. a) All Mss read °प्रौढ° (for °प्रौढि° suggested with D). —b) All Mss read शिर. (for गिरः suggested with D).

राज्ञः प्रतापशिखिनः कणाः क्षोणौ न सन्ति चेत् ।
तत्कस्माद् वयमायाताः पदन्यासेऽप्यधीरताम् ॥२८८०॥

अनेकशोऽङ्गैर्वीराणां पीतधाराम्बुडम्बरे ।
शोषः प्रादुष्कृतो न स्यात् तज्ज्वालासंज्वरं विना ॥२८८१॥

किमन्तरेण तद्धूममालान्ध्यं प्रोन्मिषद्दृशः ।
मार्गामार्गविभागस्य परिज्ञाने विमूढता ॥२८८२॥

मधुमत्यास्तटेऽन्यस्मिन् विवर्ज्य दरद· स्थितान् ।
वीचीजवनिकाच्छन्नः सोऽवाप्याऽथ तटेऽवसत् ॥२८८३॥

क्रमादुत्खातखेदस्तैर्नीत्वा स्वशिबिरान्तरम् ।
तत्रैष्यतेति संधातुं रोहद्द्रोहस्पृहातुरैः ॥२८८४॥

नृपं तेषां ह्यगण्यार्थवर्षिणं नयनैपुणात् ।
उपजीवितुमिच्छाभूत् तद्रक्षणवणिज्यया ॥२८८५॥

नानेहा विग्रहस्याऽयं प्रत्यासन्नो हिमागमः ।
मधुमासि विधास्यामः पुनरारब्धिमुत्तमाम् ॥२८८६॥

कालक्षेपेऽक्षमत्वं चेद्भुट्टराष्ट्राध्वनाऽधुना ।
त्वां तन्निदध्मो बलिनस्त्रिल्लकस्योपवेशने ॥२८८७॥

राजानं राजवदन श्रितस्तैरित्यसावतः ।
उक्त्वैष्यत स्वराष्ट्रान्तर्युक्त्या बन्धुं नराधमैः ॥२८८८॥

---

2880. b) C S′ $P_2$ काणा· (for कणा·).
2883. d) $P_{1,3}$ °वाप्य (for °वाप्याऽथ)
2884 a) C S′ $P_2$ °खेरै° (for °खेद°). —b) SA $P_2$ $I_3$ °विरा° (for °बिरा°) —d) D (before suggestion) $P_{1-3}$ °द्द्रोह स्पृहान्तरै, C S′ $I_3$ SA °द्द्रोह· स्पृहातुरै (for °द्द्रोहस्पृहातुरै suggested with St D).
2887. c) All Mss. read त्वान्तर्नि°, अन्तर्नि° may also be suggested (for त्वा तन्नि° suggested).
2888. d) St बन्द्धु (for बन्धु). After this *v.* तिलकम्

अपि राजपुरीयाणा कौटिल्यं तैर्हि जीयते।
दैर्घ्यं निदाघघस्राणां वियोगदिवसैरिव ॥२८८९॥

तथा यातमुपालेभे दूतैर्बल्लहरोऽथ तम्।
प्रह्वौ निहितवांस्त्वस्मीति त्रोटितवटाकरः ॥२८९०॥

उत्साहादाहवस्थोऽपि स तथा गार्गिमग्रिमम्।
आयान्तं च नृपानीकमुत्साहान्न व्यचिन्तयत् ॥२८९१॥

अकस्माद् विद्रुतदरद्राजभोजादिवार्तया।
न व्यदीर्यत यद्धैर्यपर्याप्तिस्तत्किलाऽद्भुतम् ॥२८९२॥

आडम्बरालम्बनस्य भेदेऽप्यच्छिन्नविग्रहः।
यद्युद्धोद्धतं सिध्येत् तत्कस्याऽमानुषं विना ॥२८९३॥

कालानुरोधात् संधित्सू धन्यद्वाराधिपावथ।
सोऽयोजयद् विलम्बेन भोजप्रत्यागमाशया ॥२८९४॥

ततोऽलंकारचक्रः स नेतुं साल्हणिमाययौ।
ज्ञातेयाद् दारदानेत्य प्रार्थिता परिपन्थिनीः ॥२८९५॥

बुद्ध्वा तदनुबन्धेऽपि द्रोहनिर्बन्धिनीः सभाः।
अग्रहीन्मार्गसेत्वग्रे निधनाद् व्यवसायिताम् ॥२८९६॥

भृत्यैः सह युवप्रायैर्वीक्ष्य तं मर्तुमुद्यतम्।
दरातुरं दरद्राजसैन्यं तद्दैन्यमाययौ ॥२८९७॥

---

2889 c) D (before suggestion) C S′ $P_{1,2}$ $I_3$ SA °दस्राणा, $P_3$ °खप्राणा (for °घस्राणा suggested with St D)

2891. b) $P_2$ $I_3$ SA गर्गि° (for गार्गि°) —cd) D $P_{1-3}$ $I_3$ SA °नीकमु° · हान्न, C S′ °नीक दृष्ट्वापि न व्य° (for °नीकमुत्साहान्न व्य° suggested with St).

2892 a) $I_3$ om दर.

2895 c) D C S′ $P_{1,2}$ $I_3$ SA °वेत्य, $P_3$ °देत्य (for °नेत्य suggested with St). —d) C S′ °पन्थिन ; $P_2$ °मन्त्रिनी (for °पन्थिनी ).

व्यपोहन्ती बल्हरी बाहुभिः कलहं सरित् ।
कल्लोलास्फालनोल्लापैर्निनिन्देव दरद्दलम् ॥२८९८॥

ह्रेपितः स्वावरोधैश्च सेर्ष्यैश्च म्लेच्छपार्थिवैः ।
सैन्यैः कदनभीतैश्च विड्डसीहोऽथ तं जहौ ॥२८९९॥

पुरस्सरैर्भग्नसेतुपालैः पारं परं ततः ।
विद्रावितानि स प्राप भिन्दंस्तूर्यरवैर्दिशः ॥२९००॥

असामर्थ्ये वरूथिन्याः स्वस्य चाऽर्थितसंधिना ।
आनीतो विड्डसीहेन दूतः प्रोक्तोऽथ भूपतेः ॥२९०१॥

अमानुषानुभावेन तावत्त्वत्स्वामिना भवेत् ।
प्रातिसीमिकसामन्तबुद्ध्या स्पर्धासु धीवरः ॥२९०२॥

अश्रद्धेयानुसंधान एव यान्तौ यमान्तिकम् ।
जयराजोऽस्मि वाऽमुष्य प्रभावावेदकौ दिवि ॥२९०३॥

तेन दिव्यानुभावेन निर्जयोऽपि जयो मम ।
पान्थस्य कूलविभ्रंशात् तीर्थे पतनमुन्नतिः ॥२९०४॥

अथाऽऽयातः पुरे स्थित्वा कंचित्कालं निजेऽविशत् ।
यमराष्ट्रमसत्कीर्तिलसद्वन्दनमालिकम् ॥२९०५॥

अबुद्ध्वा भोजमायान्तं संधिं तत्रैव वासरे ।
सार्धं द्वारेशधन्याभ्यां स राजवदनोऽप्यगात् ॥२९०६॥

---

2899. c) C S′ कदा न (for कदन°).

2900. c) St suggests विद्राव्य तानि (for विद्रावितानि, found in all Mss ).

2901. a) D C S′ $P_{1-3}$ SA °थिन्या (for °थिन्या ). —c) C S′ °सिंहेन (for °सीहेन)

2902. b) D C S′ $P_3$ तावत्तत्स्वा°, $P_1$ तावतद्र°, $P_2$ $I_3$ SA ताव‥त्स्वा° (for तावत्त्वत्स्वा° suggested with St).

2903. b) D $P_{1-3}$ $I_3$ SA यान्तो (for यान्तौ).

2905. d) C S′ $P_{1-3}$ $I_3$ SA °मालिकाम् (for °मालिकम् ).

अश्वागतं तं व्यावृत्य षष्ठं प्रष्ठं मनस्विनाम् ।
आदाय तावथाऽभ्यर्णं प्राविक्षातां क्षमापते ॥२९०७॥

अहंकाराद् विमोहाद् वाऽविमर्शेन बहिष्कृतौ ।
उपेक्षामक्षते भोजेऽभजतां राजबीजिनि ॥२९०८॥

आहूतस्तु हठोत्कण्ठाभाजाऽपि प्रभुणाऽसकृत् ।
अनिश्शेषीकृताराातिर्न व्यावर्तत रिल्हण· ॥२९०९॥

प्रभोः पुरस्तात् कार्यान्ते तेन स्थातुमशक्यत ।
प्रसादाकाङ्क्षिणा सूदेनेव भोक्तुं न हि क्वचित् ॥२९१०॥

द्विधा कृता येन युद्धे पृथ्वीहरसुतद्वयी ।
मगधेन्द्राकृतिर्भीमेनेव कार्याक्षमाऽभवत् ॥२९११॥

मातृकुक्षिमिव स्वोर्वीं तेनाऽऽजौ लोष्ठकः कृतः ।
खाण्डवे खण्डितः सर्प इव गाण्डीविनाऽविशत् ॥२९१२॥

भजंश्चतुष्क संकोचं दुर्भेदं त्रिल्लकालयम् ।
स्वकायकर्परं दर्पोज्झितः कूर्म इवाऽविशत् ॥२९१३॥

निश्शेषीकृतकार्यः स शौर्येणैव महीपतेः ।
पार्श्वं पादनखज्योतिःपट्टबन्धाप्तये ययौ ॥२९१४॥

प्रतापैर्नृपतेरित्थं विप्लवः शोषितोऽप्यभूत् ।
अमात्यमतिदोषेण भूयः प्रादुष्कृताङ्कुरः ॥२९१५॥

---

2907. c) D C S′ $P_{1-3}$ $I_3$ °ताभ्यर्णं (for °थाऽभ्यर्णं)

2908. b) D C S′ $P_{1-3}$ $I_3$ SA °विमर्षेण (for °विमर्शेन) —d) All Mss. read भजते (for [अ]भजता suggested with St)

2912 b) Cf. *v* VIII 2496 for लोष्ठक.

2913. a) SA $I_3$ भजञ्च° (for भजश्च°).

दण्डार्हो राजवदनो दानेनाऽऽप्यायितो यतः ।
निर्भयं भोजमायान्तं प्रतिजग्राह तं पुनः ॥२९१६॥

उत्कोचपरिणामात्तं सोऽथ स्थापयति स्म तम् ।
दिन्नाग्रामाभिधे स्थाने खाशकाना निवेशने ॥२९१७॥

इत्येनमब्रवीद्धयश्चेदायास्यो नाऽनुगामिनः ।
मितानुयायी द्वारेशः प्रायास्यद् गोचरान्मम ॥२९१८॥

सोत्कम्पः साहसस्रोतःपातेऽनीयत नौरिव ।
त्रिल्लकेनाऽपि स स्थैर्यं नीतिरज्जुप्रसारणात् ॥२९१९॥

व्यसनोल्लासवैवश्यं विशां पत्युर्व्यचिन्तयत् ।
येनाऽव्यवस्थाप्राथम्यं स जालमः पुनरग्रहीत् ॥२९२०॥

अलंकारादिभिः स्वास्थ्ये स्थाप्यमानोऽपि मन्त्रिभिः ।
अत्यजन्नैव कौटिल्यमजितात्मेव दुर्ग्रहम् ॥२९२१॥

गदं वैद्य इवाऽपाकं तमवज्ञाय पार्थिवः ।
पक्वगण्डानिवाऽऽरेभे रिपून् पाटयितुं परान् ॥२९२२॥

आगन्तव्यं त्वया पश्चाद्यात्स्वस्मासु प्रकम्पताम् ।
भोजमुक्त्वेत्यलंकारचक्रोऽगाद् विप्लवोद्यतः ॥२९२३॥

---

2918. a) All Mss read °ब्रवीच्छ्व° (for °ब्रवीद्धय° suggested with St Tr).

2919 a) SA $P_2$ $I_3$ °स्रोत° (for °स्रोतः°).

2921. c) SA C $P_{2,3}$ $I_3$ °न्नेव (for °न्नैव). —d) SA $P_{2,3}$ $I_3$ °त्मैव (for °त्मेव).

2922. a) D $P_1$ गण्ड ( for गद ).

2923. d) $P_2$ $I_3$ SA °चक्रेगा° ( for °चक्रोऽगा° ).

तं जयानन्दवाडाख्यो दस्युरानन्दवाडजः ।
अन्वयुर्विक्रमोदग्राः परेऽपि क्रमराज्यजाः ॥२९२४॥

अग्रस्थितो राजगृह्योऽलंकार- स्वल्पसैनिकः ।
वालुकासेतुकल्पस्तैर्जज्ञे सिन्धुरयैरिव ॥२९२५॥

स तु रामखराद्याजिक्षोभसंभावनां विशाम् ।
उदपादयदेकाकी कुर्वन् बहुभिराहवम् ॥२९२६॥

आपानरभसक्षुभ्यद्रक्षःसंभ्रमदक्षिणम् ।
रणं जगाम गञ्जात्वमञ्जसाऽस्रपरिस्रुतः ॥२९२७॥

स तूलकूटमिव तत्कटकं विकटं द्विषाम् ।
किमन्यत् प्रैरयत् काऽपि प्रभञ्जन इवाऽञ्जसा ॥२९२८॥

ग्रासाय गृध्रकङ्कादिपत्त्रिव्रातस्य तत्यजे ।
आनन्दवाडसूनुः स हत्वा तेनेषुणा रणे ॥२९२९॥

भोजस्योत्थातुकामस्य जिघृक्षोः क्ष्माभुजश्च तत् ।
पङ्कप्रधावत्क्रकरव्याधन्यायो व्यवर्धत ॥२९३०॥

अनुड्डयनसामर्थ्यः श्राम्यति क्रकरो यथा ।
धावन् पङ्के पतन् व्याधोऽप्यनुधावत्यथाऽन्वहम् ॥२९३१॥

---

2924. [a]) S′ $P_2$ °वाराख्यो, SA °वाळाख्यो ( for °वाडाख्यो ). —[b]) S′ °वारज., SA °वाळज ; $P_2$ °वाज (for °वाडजः) —[d]) C S′ °ज्यका° (for °ज्यजा )

2925. [c]) D $P_{1-3}$ $I_3$ SA °कल्पस्त, C S′ °कल्पस्तु (for °कल्पस्तै° found in SG *sec manu*)

2926. [a]) D $P_{1-3}$ $I_3$ SA राम ··रा°; C S′ शत्रुभिरा°; St suggests रामचरा° ( for रामखरा° suggested )

2929. [b]) $P_2$ $I_3$ SA °पतिव्रा°, C S′ °पातिव्रा°, $P_3$ °षत्रिव्रा° (for °पत्त्रिव्रा°). —[c]) C S′ °वार°, SA °वाळ°, $P_{2,3}$ °वाडा° (for °वाड°).

2931 [d]) D $P_1$ I. °धावन् प°, C S′ $P_2$ °धावन् य° ( for °धावन्प° ),

प्रसङ्गे साहसस्यैवं भोज क्लैब्यमगात् सदा ।
तं प्राप्तुमिच्छन्भूपोऽपि मतिमोहं मुहुर्मुहुः ॥२९३२॥

दिन्नाग्रामस्थिते भोजे स राजवदनोऽप्यगात् ।
पुनः किं चौरचण्डालाः श्रेयसीत्युक्तिमीशितुः ॥२९३३॥

डामरा भग्नसंघाता भूयः पूर्वाधिकां ततः ।
कन्थां ते ग्रन्थयामासुर्मुहुर्यां शौर्यशालिनः ॥२९३४॥

ते द्वारपतिमायातं सोढुं शेकुर्न केवलम् ।
अशक्यैराहवैर्यावत् तात्पर्यादुदवेजयन् ॥२९३५॥

तेषां त्राणार्थमन्येषामुत्थानार्थमथाऽऽययौ ।
कृष्टोऽलंकारचक्रेण नीविं दत्त्वा स साल्हणिः ॥२९३६॥

तेषां परेद्युः पार्श्वं स यियासुरसकृद् यदा ।
छायाश्रमं श्रान्तसैन्यो द्वारेशोऽबुद्ध तं तदा ॥२९३७॥

अजानन्निव तेषां स व्याजसन्धिं निबद्धवान् ।
मिषात् कुतोऽप्यगात् तिर्यक्स्थितं सत्तारमूलकम् ॥२९३८॥

तस्मिंस्तत्र स्थिते दूरात् कुतस्त्यामपि पूत्कृतिम् ।
श्रुत्वा भोजोऽवदत् सायं किमपि व्याकुलीभवन् ॥२९३९॥

निजैर्विहस्यमानोऽपि त्रासात् तस्मादहेतुकात् ।
व्यरंसीत् संभ्रमान्नाऽसौ चक्रे सज्जांस्तु वाजिनः ॥२९४०॥

---

2932. c) All Mss. read तत्प्राप्तु° (for त प्राप्तु° suggested with St). After this *v.* युग्मम् .

2936. b) C S′ °मुक्तानर्थ°, $P_2$ °मुक्तानार्थ° (for °मुत्थानार्थ°).

2937 cd) $P_1$ om.

2938. d) D C S′ $P_{1,3}$ $I_3$ SA सतार°; $P_2$ मतार° ( for सत्तार° suggested with St).

2939. ab) $P_1$ om.

त्रस्तोऽलंकारचक्रोऽथ दशग्राम्यग्रतो द्रुतम् ।
क्व राजपुत्र इत्येवं कथयित्वा पलायितः ॥२९४१॥

उदतिष्ठत् ततो ग्राममध्यात् तूर्यध्वनिर्महान् ।
आस्कन्दावेदकः सेनानिनादश्च क्षपामुखे ॥२९४२॥

अलक्षितो ध्वान्तमध्ये भेजे भोजः पलायनम् ।
श्वः कर्तव्येष्वलंकारचक्रो युद्धाय संदधे ॥२९४३॥

दत्तो द्वाराधिपेनाऽग्निर्गिरिवर्त्म प्रकाशयन् ।
ध्वान्तध्वस्तात्मनां तेषां तदाऽभूदुपकारकः ॥२९४४॥

द्वाराधिपस्य क्षाम्यन्तः संधिं भोजप्रतीक्षया ।
श्रुत्वा तमथ वृत्तान्तं भङ्गं ते डामरा ययुः ॥२९४५॥

समत्यजदपत्यादिबन्धं धीरोच्चलाश्रयात् ।
आर्जि च भोजोऽलंकारचक्रेणाऽमङ्गलावहम् ॥२९४६॥

संरंभात् कर्तुमारेभेऽसामर्थ्यान्न च चक्षमे ।
भोजस्तत्राऽप्यभूत् तर्षान्नाहारादिसुखान्वितः ॥२९४७॥

बाणाग्निजस्त्रिपुरनिर्दहने प्रतापः
पाथोनिधेः प्रमथने वडवाग्निजन्मा ।
आसाद्य मन्दरनगेन समागमं हि
न क्वाऽपि पन्नगपतेः सुखसख्यमासीत् ॥२९४८॥

---

2944. c) $P_2$ $I_3$ SA °त्मना ( for °त्मनां )

2945. a) $P_{1-3}$ $I_3$ S′ SA क्षम्यन्त॰ ( for क्षाम्यन्त ).

2946 a) All Mss. read असन्त्यजन्न° ( for समत्यजद° suggested ).
—c) All Mss. read स ( for च suggested )

2947 ab) D St SA $P_{1-3}$ $I_3$ om. with a *lacuna*

क्षुत्पिपासाश्रमं हन्तुं प्राप्तः स्वविषयावनौ ।
अलंकारात्मजैर्भूयो बन्द्धुं भोजोऽभ्यलष्यत ॥२९४९॥

पितुर्मतेन बुद्धया वा स्वया तत्तद्दिधित्सतः ।
सोऽभिसंधाय निर्यातः प्रापाऽथ विषयान्तरम् ॥२९५०॥

ततो बलहरेणैव कृत्यं निश्चित्य कार्यवित् ।
अनास्थोऽन्यलवन्येषु दिन्नाग्रामं पुनर्ययौ ॥२९५१॥

द्वाराधिपोऽहितोद्धारधीरोऽप्यत्राऽन्तरेऽक्षमः ।
चक्षूरोगेण भग्नाभियोगोऽकस्माद् व्यधीयत ॥२९५२॥

भोजाय दातुमैच्छद् यो डामरस्ते सुते ददौ ।
पर्माण्डये गुल्हणाय राजजाय च निर्जितः ॥२९५३॥

रोगोच्चण्डतया दण्डप्रयोगावसरे कृते ।
तत्र साम प्रयुज्यैव द्वारेशो विवशोऽविशत् ॥२९५४॥

अभियोगक्षणे तस्मिन् ययौ भारसहः क्षयम् ।
दुर्नामकामयक्षामः षष्ठचन्द्रोऽपि गर्गजः ॥२९५५॥

तत्राऽऽमयाविन्येवाऽऽत्तोद्रेकौ तदनुजौ निजौ ।
चक्राते वसुधां दुस्स्थामास्कन्दाद्यैरुपद्रवैः ॥२९५६॥

त्रिल्लक प्रबलैरन्यैः सहाऽभेदं प्रवर्धयन् ।
नाऽग्रहीद् विग्रहैकाग्रः सान्त्वनामपि भूपतेः ॥२९५७॥

---

2949 d) C S' $P_{1,2}$ $I_3$ बन्धु (for बन्द्धु).

2950. c) D सोसि° ( for सोऽभि°).

2951. c) C S' $P_1$ $I_3$ °स्थोऽन्यो (for °स्थोऽन्य°).

2954. a) C S' °गश्च°, $P_{2,3}$ $I_3$ °गोश्च° (for °गोच्च°). —c) D $P_3$ प्रयोज्यैव ( for प्रयुज्यैव )

2956 b) All Mss read तमनुज निजम् (for तदनुजौ निजौ suggested with St, cf *v.* VIII 2753).

षष्ठे निष्ठां गते रोगमज्ञे द्वारपतावपि।
नियुक्तः क्ष्माभुजा धन्यो निरगात् तारमूलकम् ॥२९५८॥

भोजश्च्युतोऽसुतोऽन्येषां बलिनां गोचरे पतेत्।
प्राप्तप्रतिष्ठो निस्तीर्णो देशाद्वाऽसाध्यतां व्रजेत् ॥२९५९॥

इति संचिन्त्य सामाद्यैरुपायैस्तं जिघृक्षुणा।
क्ष्माभुजा मर्मसंरम्भो विदधे सोऽभियोगभाक् ॥२९६०॥

अज्ञातोदर्कवैषम्या दुर्नीतिः सा महीभुजम्।
व्यावृत्याऽबाधत च्छिन्नपुच्छाक्रुष्टेव पन्नगी ॥२९६१॥

बलिनं राजवदनं नृपं चाऽवेत्य निर्बलम्।
आभ्यन्तराश्च बाह्याश्च विक्रियां यत्क्रमाद् ययुः ॥२९६२॥

छिद्रान्तराणि सुलभानि सदैव हन्त
पातालरन्ध्रसरणेरिव दण्डनीतेः।
बह्वीभवन् प्रसरमन्तरसंप्रविष्टो
यात्यप्रतर्क्यनियमात् पतनं भजेद् वा ॥२९६३॥

भोजत्यागार्थितो राज्ञा क्षीणार्थोऽसौ व्रजेदितः।
उक्त्वेत्यमुं बलहरस्तस्य वृत्तिमकारयत् ॥२९६४॥

---

2958 c) C S′ $P_{1,2}$ $I_3$ SA धन्ये ( for धन्यो ).

2960. c) St °जामन्द° (for °जा मर्म°). After this *v* युग्मम्.

2961. b) C S′ $P_2$ $I_3$ SA °भुजाम् ( for °भुजम् ) —c) St C S′ $P_{2,3}$ $I_3$ °बाधता° ( for °बाधत ). —cd) $P_1$ om

2964 a) All Mss read °त्यागो° ( for °त्यागा° suggested with St. Tr.) D $P_3$ °र्जितो (for °र्थितो).

तां लब्धप्रसरां मायां राजपक्षे विलोक्य सः ।
युक्त्यन्तराणि संलेभे प्रयोक्तुं नीतिकौशलात् ॥२९६५॥

संधिं पदे पदे बद्ध्वा सार्धं बलहरादिभिः ।
कुर्वन् गतागतं धन्यो जनस्याऽवाप हास्यताम् ॥२९६६॥

शश्वद्व्यावर्तमानस्य राजकार्यस्य नाऽवधिम् ।
अरघट्टघटीयन्त्रगुणस्येवाऽऽससाद सः ॥२९६७॥

तस्य चक्र इवोद्भ्रान्ते कर्तव्ये तैक्ष्ण्यभागपि ।
भेत्तुं प्ररोढुं वाऽप्यासीन्नयो बाण इवाऽक्षमः ॥२९६८॥

नीतराजद्वयो व्यग्रः शेषस्यैकस्य विग्रहे ।
चतुरङ्ग इव क्रीडन् विवशोऽभूद् विशां पतिः ॥२९६९॥

बद्धलक्ष्यः प्रदानार्थं ततश्च च्छद्मना परान् ।
भञ्जतो वाजिपत्त्यादि नाऽप्यासीन्नाऽप्यजीगणत् ॥२९७०॥

दस्युषूद्यतसङ्गेषु शीतापायप्रतीक्षिषु ।
नागाद् बलहरः स्वेषामुन्मूलनमशङ्कत ॥२९७१॥

सामर्थ्याशिथिलामित्रभावे सूत्रितविप्रिये ।
तस्मिन् धावति धन्ये च शश्वत्सोऽवेपताऽऽकुलः ॥२९७२॥

संमन्त्र्य सार्धं भोजेन धन्यं समदिशत् ततः ।
बद्ध्वाऽर्पयत नागं मे भोजं दास्यामि वस्ततः ॥२९७३॥

---

2965. [c]) C S′ युक्त्या° (for युक्त्य°). —[d]) $P_3$ °नैपुणात् (for °कौशलात्)
2967. [a]) D $P_3$ °द्विवर्त°, SA $P_1$ $I_3$ °द्वयवर्त° (for °द्व्यावर्त°).
2971. [a]) SA *prima manu* C S′ दस्युषु द्यूत°; SA *sec manu* St $P_3$ $I_3$ दस्युषु स्यूत° (for दस्युषूद्यत°).
2972. [a]) D (before suggestion) $P_{1-3}$ $I_3$ °मित्रो° (for °मित्र°).
2973. [d]) C S′ $P_{1,2}$ वस्तुत· (for वस्तत·)

भूरिकार्यकृतं स्वस्य बन्धनार्थावहां रिपोः ।
धन्यो व्यसनवैवश्याद् धियं नाऽबुद्ध तस्य ताम् ॥२९७४॥

पार्थिवाः स्वार्थसंसिद्धित्वराविरतसत्त्वया ।
धियाऽविशुद्धं यत्किंचित् कुर्वन्तीति न नूतनम् ॥२९७५॥

काकुत्स्थोऽपि प्रियाप्रार्थी व्यग्रः सुग्रीवसंग्रहे ।
वीरोऽविधेयं स्वार्थान्ध्याद् वधं व्यधित वालिनः ॥२९७६॥

संहृत्य सत्यनित्यत्वं राज्यगर्वाविशुद्धधीः ।
आचार्यं पाण्डवो राजा धर्मनिघ्नोऽप्यघातयत् ॥२९७७॥

आ भिक्षुविग्रहान्नित्यद्रोग्धुर्नागस्य निग्रहः ।
स्वार्थापेक्षी तटस्थस्य तत्कालं न विगर्हितः ॥२९७८॥

अगृहीत्वा तु भूभर्त्रा कंचिद् भोजार्पणे पणम् ।
सोऽवाष्टम्भीत्यभूत् तस्मिन् मन्युर्मतिमतां मनाक् ॥२९७९॥

यथा तत्कृत्यमायत्यां हितं जातं तथैव चेत् ।
विचार्याऽकारि राज्ञा तच्छेमुषीयममानुषी ॥२९८०॥

विभिन्न इव भोजस्तु नागं समदिशद् यथा ।
दित्सुर्बलहरो राज्ञे त्वदर्पणपणेन माम् ॥२९८१॥

---

2974. b) All Mss read °वह (for °वहां suggested with St D).

2976. a) $P_{1-3}$ SA काकस्थो° ( for काकुत्स्थो° ).

2978. b) All Mss read बिग्रह. ( for निग्रह· suggested ).

2979. c) All Mss read सोव° (for सोऽवा° suggested with St).

2981 c) C S′ दित्स्व° (for दित्सु°). D $P_{1,3}$ °लहर, C S $P_2$ $I_3$ SA °लहरे ( for °लहरो suggested with St) $P_3$ राज्ञा (for राज्ञे).

बन्धमश्रद्दधानोऽस्य राज्ञस्त्रासादसौ श्रयेत् ।
स विद्न्नथ माध्यस्थ्यमिति तं हि तथाऽवदत् ॥२९८२॥

षष्ठचन्द्रे गते निष्ठां जयचन्द्रेण पार्थिवः ।
संगृहीतेन तं नाग पार्श्वं प्रावेशयत् ततः ॥२९८३॥

पक्षीकृतः क्ष्माभुजाऽयं हन्यादस्मान् भयादिति ।
चलन्तमपि तं भोजस्तन्मन्त्रितमबोधयत् ॥२९८४॥

तथेति जानन्नपि तं कृष्टोऽस्म्येतैरनीशताम् ।
यातः किमपि हन्तेति दूतैर्नागोऽप्यभाषत ॥२९८५॥

नियतं नियतिस्रोतोगर्भे जन्तोर्निमज्जतः ।
कथ्यमानं तटस्थेन श्रोतुं न श्रवणौ क्षमौ ॥२९८६॥

नागे बद्धे तत्कुटुम्बैर्भीतैरेत्य समाश्रितः ।
मायाशाली बलहरो दुर्धर्षः समपद्यत ॥२९८७॥

भोजनिष्क्रयविक्रेयं तमादाय ययौ ततः ।
रिल्हणेन समं धन्यो धावन् बलहरान्तिकम् ॥२९८८॥

सान्तर्हासो मोहयंस्तौ प्राङ्नागं दत्त मे ततः ।
भोजं दास्यामि व इति ब्रुवन् भ्रामयति स्म सः ॥२९८९॥

---

2984. b) C S′ °मस्माद्, $P_1$ °मस्मान् (for °दस्मान्). —d) D C S′ $P_{1-3}$ °न्त्रिणमरो°, SA $I_3$ °न्त्रिणमबो° (for °न्त्रितमबो° suggested with St).

2985. b) C S′ SA $P_{1,2}$ °स्मीस्रेतै° (for °स्म्येतै°)

2986. d) D (after suggestion) C S′ °णे क्षमौ (for °णौ क्षमौ).

2987. d) All Mss. read दुर्दर्शे (for दुर्धर्ष suggested with D).

2988. a) SA $P_{2,3}$ $I_3$ भोजोनि° (for भोजनि°). —d) SA $P_2$ $I_3$ °रोन्ति° (for °रान्ति°).

2989. a) C S′ °मोहयन्त; St (after suggestion) $P_1$ $I_3$ °मोहयन्तौ; SA $P_{2,3}$ मोहयन्तौ (for मोहयंस्तौ).

बद्धमूलतया दूरं दुर्धर्षौ योद्धुमागतम् ।
सर्वं तच्च तयोः सैन्यं निन्ये कृत्यविधेयताम् ॥२९९०॥

वर्षयुद्धापकर्षादिभिः खिन्नौ तौ ततोऽभ्यधात् ।
इतोऽपसृतयोः कुर्यां युवयोर्मतमित्यसौ ॥२९९१॥

एकप्रयाणान्तरिते स्थितयोः पथि चाऽकरोत् ।
कार्यान्तःपातवैवश्ये तयोर्मतिविमोहनम् ॥२९९२॥

काचिद् बलहरस्याऽऽसीत् पर्याप्तिर्धैर्यसत्त्वयोः ।
निश्चोद्याऽद्यतने काले वीराणां विरलैव या ॥२९९३॥

तथा हारितमार्गाय साहसात् पार्श्वमीयुषे ।
द्रुह्यति स्म न धन्याय लोभाद् भोजाय नाऽपि यः ॥२९९४॥

मतिमोहेन नागं चेद्द्युम्नैं सचिवास्ततः ।
कुर्यां तं स्वपदेऽभ्यर्थ्य चकारेति च चेतसि ॥२९९५॥

नागासांनिध्यलब्धार्द्धिदाढ्यार्थं गूढवैकृतः ।
भ्रातृव्योऽपातयन्नागं धन्याद्यैर्लोष्ठकाभिधः ॥२९९६॥

सचिवैर्निहते नागे निर्हेत्वहितमोहितैः ।
दुर्मन्त्रितं नरपतेः स्वैः परैश्च व्यगर्ह्यत ॥२९९७॥

स्वजातीयवधक्रोधाद् विरुद्धैः सर्वडामरैः ।
नागानुगैश्चाऽऽश्रितोऽभूत् ततो बलहरो बली ॥२९९८॥

---

2991 [ab]) D $P_{1-3}$ $I_3$ St SA °दि'' खिन्नौ, C S' °दिसङ्खिन्नौ (for °दिभिः खिन्नौ suggested). —[b]) $A_1$ (before corr) °ऽव्यधात् (for °ऽभ्यधात् ).

2995. [a]) C S' मतेर्विमोहेन, $SA_1$ मतिमोहे (for मतिमोहेन).

देहिनो व्यसनापातवैवश्याद् भ्रमतोऽपथि ।
अकार्यं कुर्वतः कार्यं सिद्धः संसाधयेद् विधिः ॥२९९९॥

उद्यद्दुस्सहवित्ततानवतया बद्धावधाने मन-
स्युन्मार्गभ्रमणेऽवशस्य रभसाच्छ्वभ्रे परिभ्राम्यतः ।
अन्योऽपाहितकोशपृष्ठलुठनात् संदर्शिताङ्कक्षते-
र्जन्तोर्हन्त तनोति दुर्गतिशमं रम्यानुलोम्यो विधिः ॥३०००॥

तथा निरनुसंधानं नागं धीसचिवैर्हतम् ।
नाऽबुद्ध भोजः संजातत्रासस्त्वेवं व्यकल्पयत् ॥३००१॥

लब्धवर्णस्य नाऽवर्णावहं कर्मेदमीशितुः ।
अलब्धपणबन्धस्य वाञ्छिताप्त्यै विशङ्क्यते ॥३००२॥

यश्च युद्धमिति व्यग्रं हर्षादाद्यामवापि यः ।
भोजमन्यकरस्थोऽयमशक्यो ह्यन्यथा मम ॥३००३॥

उक्त्वेति मोहयन् धन्यमुख्यान्मुग्धोऽस्मि संदिशन् ।
इति मां राजवदन स्थितस्तन्नूनमन्यथा ॥३००४॥

आ भिक्षुविप्लवाद् द्रोहसुभिक्षस्याऽनुबन्धिनः ।
किं राजवदनोऽप्येष लोभात् संभाव्यते न भूः ॥३००५॥

---

2999. b) C S′ $P_3$ भ्रमत· पथि ( for भ्रमतोऽपथि ).

3003. a) St suggests युद्धमतिव्यग्र ( for युद्धमिति व्यग्र).

3004. b) St D SA $P_{1-3}$ $I_3$ °मुख्या· ·स्मि (for °मुख्यान्मुग्धोऽस्मि). All Mss. read संदिशेत् (for संदिशन् suggested with St). After this *v.* युग्मम् .

अथाऽविशङ्किनस्त्रासव्युदासायाऽस्य खाशकाः ।
रक्तार्द्रकृत्तिन्यस्ताङ्घ्रि कोशपानं प्रचक्रिरे ॥३००६॥

प्रादुष्कृतभियः क्षिप्तरक्षिणोऽमुष्य तिष्ठतः ।
विश्वासार्थं बलहरो विरलः पार्श्वमाययौ ॥३००७॥

अमात्यमतिजाड्येन नष्टे कृत्येऽथ कृत्यवित् ।
स्वयमुत्तम्भनं नीतेः संरंभेऽसंभ्रमो नृपः ॥३००८॥

चैत्रः पादपमण्डलस्य तटिनीतोयस्य वर्षागमः
सत्कारो गुणगौरवस्य नयनप्रेम्णोऽन्तिकासेवनम् ।
ऐश्वर्यस्य महोद्यमो जयविधेर्गाढाविषादग्रहः
कर्तव्यस्य च सिहदेवनृपतिर्म्लानौ न तत्त्वावहः ॥३००९॥

प्रवाहेणेव कृत्यस्य हठेन हरतोऽन्तरे ।
प्रातिलोम्यं श्रितवता पारं गन्तुं न पार्यते ॥३०१०॥

अतो धूर्तो नृपो मुग्ध इति ज्ञातोऽरिभिर्मुधा ।
मौग्ध्यं प्रदर्शयंस्तेषां यतते स्माऽभिसंधये ॥३०११॥

स हि यत्तत्प्रदानेन भजन् भोजान्तिकस्थितीन् ।
तस्याऽविश्वासपात्रत्वं मंत्रस्तस्याऽभितोऽनयत् ॥३०१२॥

गन्धेन वासितोत्सङ्गाः कुरङ्गार्यङ्गजन्मना ।
प्रज्वलन्त्यो विभाव्यन्ते तटिन्योऽपि कवाटिभिः ॥३०१३॥

---

3006. c) St C S' $P_{1-3}$ $I_3$ °त्रस्ता° (for °न्यस्ता°)

3008 c) All Mss read °त्तम्भने [C S' °न] नीत· (for °त्तम्भनं नीतेः suggested with D).

3013 d) All Mss. read कवाटिभि· (for करेणुभि suggested).

नीडस्याऽन्तः सरन्ध्रस्य सर्वतो हि भयं स्पृशन् ।
जाले द्वाराग्रबद्धे च निर्गमे पतनं विदन् ॥३०१४॥

ताम्येद्यथा खगो भोजस्तथाऽन्तस्स्थेष्वविश्वसन् ।
बहिर्भूपेन रुद्धाऽध्वा प्रस्थानेऽप्यभजद् भयम् ॥३०१५॥

तदा स दौस्स्थ्यातिथितां प्राप्तः प्रैक्षत न क्षणम् ।
मनोविनोदनं किंचित्कृत्यं लोकद्वयोचितम् ॥३०१६॥

उग्राभिषङ्गमनुषङ्गि परस्य दुःखं
हन्ताश्लथं व्यथयति प्रसभार्द्रभावम् ।
बद्धः सरोजकुहरे विरहार्त्तनादै-
श्चक्राभिधस्य मधुपोऽधिकमेति दैन्यम् ॥३०१७॥

रणे पूर्णव्रणाश्यानशोणितो लूनकुन्तलः ।
फेनोद्गार्याननः क्रन्दंस्तेनैकः प्रैक्ष्यत द्विजः ॥३०१८॥

स पृष्टो विप्लुतैर्नीतसर्वस्वं विक्षतं तथा ।
स्वं डामरैर्निवेद्यैनं निनिन्द त्रातुमक्षमम् ॥३०१९॥

स्वदौस्स्थ्यार्तमनास्तस्य दुःखेन व्यथितोऽन्वहम् ।
घट्टितार्द्रव्रण इव प्राह सेति स सान्त्वयन् ॥३०२०॥

गर्हार्होऽस्मि न ते ब्रह्मन् योऽनुग्राह्योऽहमीदृशः ।
विषमे वर्तमानश्चेत्यथ सोऽपि तमब्रवीत् ॥३०२१॥

---

3014. c) $P_1$ ज्वाले (for जाले).
3015. c) $P_{2,3}$ रुद्ध्वा° (for रुद्धा°) After this *v* युग्मम् .
3016 a) St C S′ दौस्थ्या°; $P_2$ दोस्थ्या° (for दौस्स्थ्या°).
3017. a) C S′ °षद्धि (for °षङ्गि). —c) St °हार्त°, $P_2$ $I_3$ °हातु° (for °हार्त्त°)
3018. c) St C S′ फणो° (for फेनो°)
3019. a) D ( before suggestion ) $P_{1-3}$ $I_3$ SA नीतः सर्व°; C S′ नीतं सर्व° ( for नीतसर्व° suggested with D ).
3020. a) St C S′ °दौस्थ्यार्त°, $P_{1-3}$ $I_3$ °दौस्थ्यन्त° (for °दौस्स्थ्यार्त°).

दुर्ग्रहेणाऽमुना ब्रूहि कोऽर्थः पार्थिवपुत्र ते।
सारासारविदो यूनः कुले जातस्य मानिनः ॥३०२२॥

प्राणान् संदेहमारोप्य प्रणम्य प्रकृताशयान्।
पीडयित्वा विशः क्लेशैः कार्यं किमिव पश्यसि ॥३०२३॥

यश्च ते प्रतिभात्येव जेतव्यो विदितो न किम्।
अग्निशौचः स सारङ्गः परशौर्याग्निमज्जने ॥३०२४॥

यत्र शस्त्रशलाकाऽपि विकला तद्विधीयते।
इन्दीवरदलद्रोण्या घटनं स्फाटिकाश्मनः ॥३०२५॥

पृथ्वीहरावतारादिप्रत्यनीकिजितः परे।
के नामाऽस्य न संघर्षे क्षुद्रप्राया दरिद्रति ॥३०२६॥

किं दृप्या एव बुद्ध्वाऽपि कृत्यं द्वैराज्यजीविनाम्।
भृत्याशयाः फणिग्राहिगृहीता इव भोगिनः ॥३०२७॥

जातैः क्ष्मावलयोद्वहे फणिकुले धिग्भोगिडिम्बैर्मुदा
व्यालग्राहिविकासितास्यकुहरैर्ग्रासस्य हा गृह्यते।
एतान् भिक्षयितुं न तु प्रथयितुं ते जीविकायै जन-
त्रासार्थं ननु कारयन्ति हि हतैर्निर्मज्जनोन्मज्जनम् ॥३०२८॥

---

3022. c) सारसा is no longer legible in SA.

3024. c) For अग्निशौच cf. fn. *v.* V. 15.

3025. d) C S′ घटना (for घटन).

3027. a) All Mss. read दृप्य (for दृप्या suggested with St).

3028 a) D C S′ °लैर्धिग्भो°; SA $P_{1-3}$ $I_3$ °लैर्धिभों° (for °ले धिग्भो° found in SG *sec. mauu*). D C S′ $P_{1,2}$ $I_3$ SA °र्मुधा (for °र्मुदा). —b) All Mss. read °तस्य कुहरैर्ग्रासस्य (for °तास्य-कुहरैर्ग्रासस्य suggested with St)

इत्युक्तवन्तं तं सान्त्वयित्वा भोजो व्यसर्जयत् ।
तदैव चाऽऽशु व्याकोशविवेकः समपद्यत ॥३०२९॥

भव्यात्मत्वं प्रशममहिमोल्लासने हन्त हेतु-
र्भावानां तु ध्रुवमपरथा मार्दवं क्रूरता वा ।
स्पृष्टं पादैरमृतमहसः स्यात्कठोरं हिमांशो-
र्याति ग्रावाऽप्यहह रभसादार्द्रतां चन्द्रकान्तः ॥३०३०॥

राजन्याभिजने जातोऽप्यलज्जत्वमशिक्षितः ।
सोऽन्तरं स्वस्य राज्ञश्च मुहुर्महदचिन्तयत् ॥३०३१॥

गुणैः शौर्यनयत्यागसत्यसत्त्वादिभिः प्रभोः ।
पूर्वेऽप्युर्वीभुजः खर्वाः क्षुद्राः स्पर्धासु के वयम् ॥३०३२॥

तस्य प्रभावदीप्तेऽपि समये क्षान्तिशीतला ।
शक्तिः क्षयजडत्वेऽपि मुग्धानां नो महोष्मता ॥३०३३॥

क्ष्वेडाग्नितापनिविडोरगसंगमेऽपि
तुङ्गस्य चन्दनतरोरतिशीतलत्वम् ।
काले हिमर्तुपरिपिञ्जरसंज्वरेऽपि
निम्नस्य कूपकुहरस्य महोष्मयोगः ॥३०३४॥

कुतोऽविपर्ययात् कार्यसुतं नृपममुं विना ।
प्राप्यं कस्य पुनः प्राप्यमप्यशुद्धया न बाधितम् ॥३०३५॥

---

3029. c) All Mss read तदेव (for तदैव suggested with St D).

3030 c) SA $P_3$ स्पष्ट (for स्पृष्ट).

3033 c) C S' जयजडत्वे° (for क्षयजडत्वे°).

3034. b) All Mss read °रपि शी° (for °रतिशी° suggested with D).

3035. a) All Mss. read कुतोपि प° (for कुतोऽविप° suggested). —ab) All Mss. read कार्यं सु° (for कार्यसु° suggested). —c) All Mss. read प्राप्य (for प्राप्य suggested). —d) D $P_{1,2}$ $I_3$ SA बाधितुम् (for बाधितम्).

अष्टं निर्झरवारि शुभ्रमचलैः स्वीयेन भूयः कचि-
ल्लभ्यं लभ्यमथाऽत्रतः कलुषतादुष्टं प्रकष्टं न तत् ।
निर्यन्निर्भरनिम्नगाम्बु नभसः प्राप्येत नित्यं दध-
त्प्रालेयत्वमुपेत्य शुद्धिमधिकां नाऽद्रेर्हिमाद्रेर्नगैः ॥३०३६॥

तदर्थमेव ग्रथितो योऽनर्थोऽग्रथितात्मनः ।
स तेन स्वस्थतां नेतुमर्थितो न स्पृशेद् रुषम् ॥३०३७॥

प्लोषाय योऽस्य दववह्निमदादमुष्मिन्
स्वस्थे स तेन शिखिना ग्लपितः समीपम् ।
अभ्येति चन्दनतरोर्दववह्निदाह-
शान्त्यै यदि प्रियकृदेष न तस्य किं स्यात् ॥३०३८॥

समग्रदुर्गतावर्हदपकर्तेव भूपतिम् ।
लोकनाथं तमुद्धर्तुं धीरं धन्यः पुनः पुनः ॥३०३९॥

राजप्रसादनोपायान्वेषी बलहरान्तिकम् ।
राजदूतमथाऽऽयान्तमेकदैकं व्यलोकयत् ॥३०४०॥

दरद्देशं व्रजन् दृष्टवान् प्राक्प्रज्ञातमन्तिकम् ।
स नमन्तं तमानीय ततः स्मेर इवाऽब्रवीत् ॥३०४१॥

राज्ञः किमन्यसंधानैः संधिं बध्नात्वसौ मया ।
प्राज्ञैर्हि भिषजा भोज्यमातुराय समर्प्यते ॥३०४२॥

---

3039. a) All Mss. except SG *sec. manu* and $P_2$ read समग्रोदु° (for समग्रदु°).

3040. d) All Mss except SG *sec. manu* read °मेकमेक (for °मेकदैक).

3041. b) D C S′ $P_{1-3}$ वाक्प्रज्ञातु°, $P_2$ $I_3$ SA वाक्प्रज्ञात° (for प्राक्प्रज्ञात° suggested with St).

3042. b) D SA S′ $P_{1-3}$ $I_3$ सधिबन्धात्व° (for संधिं बध्नात्व°).

तत्तस्याऽश्रद्दधानस्य नर्मस्मेरस्य जानतः ।
प्रत्ययोत्पादनं तैस्तैरालापैः किंचन व्यधात् ॥३०४३॥

निर्दम्भभाषितैरूढविस्रम्भः स कथान्तरे ।
अथाऽभिगम्य राजानं स्तुवन् भोजमभाषत ॥३०४४॥

राजपुत्राभिजातस्य पादच्छायाऽस्य लभ्यते ।
स्वर्णाद्रेरिव कल्याणप्रकृतेः पुण्यभागिभिः ॥३०४५॥

अनुवृत्त्याऽतिमृद्ध्याऽपि तस्याऽपोह्येत वैकृतम् ।
ज्योत्स्नयेव शरद्भानुपरितापौष्ण्यमम्भसः ॥३०४६॥

अपि स्मरसि चारत्वे नियुक्तोऽस्मि महीभुजा ।
विशतस्ते दरद्देशमभूवं पुरतः पुरा ॥३०४७॥

ततो निवृत्तो वृत्तान्तं मुख्यमाख्याय तावकम् ।
कालं क्षेप्तुं कथां दैर्घ्यं नयन् मध्ये तमभ्यधाम् ॥३०४८॥

क्षुत्तृडध्वक्लमश्रान्तान् देव तानवलोक्य माम् ।
निन्दतः स्वानुगान् भोजो निर्भर्त्स्यैवं तदाऽब्रवीत् ॥३०४९॥

स दैवतमिवाऽस्माकं कुलालंकरणं प्रभुः ।
वयं त्वसुकृतो यस्य नाऽऽप्नुमः पादसेवनम् ॥३०५०॥

---

3046. b) All Mss read °पोह्यत (for °पोह्येत suggested with St).

3047. a) All Mss. read चारुत्वे (for चारत्वे suggested with St D).

3048. c) All Mss read कथादै° (for कथा दै° suggested with St). —d) C S′ SA $P_{1,2}$ $I_3$ °भ्यधात् (for °भ्यधाम् ).

3049. a) SAP $_{1,2}$ $I_3$ क्षुन्दन्न° (for क्षुत्तृड°). —b) St $P_{1-3}$ $I_3$ त्वाम° (for तान°). —c) C S′ $P_{1,2}$ $I_3$ SA भोज (for भोजो).

3050. b) All Mss. read प्रभोः (for प्रभु suggested)

गण्याः पर्यन्तनिस्सारास्तत्संबन्धादिमे वयम् ।
चन्दनभ्रान्तिकृत्काष्ठं यत्स्यात् तद्गन्धवासितम् ॥३०५१॥

तच्छ्रुत्वैव दयार्द्रत्वं त्वयि यातः स लक्षितः ।
पृच्छन् पितेव किं गर्भरूपो वक्तीति मां पुनः ॥३०५२॥

तन्निशम्यैव भोजस्य द्रवीभूतमभून्मनः ।
सोऽन्तर्बाष्पोऽप्यपश्यत् तं सान्त्वयन्तमिवाऽग्रतः ॥३०५३॥

स व्यक्तमात्रासंबोधमुग्धत्वेन विहीयते ।
तत्त्ववित्कारणाज्ञानादन्तःकरणवेदनम् ॥३०५४॥

अश्रद्दधानस्तामिच्छां भोजस्याऽकृच्छ्रवर्तिनः ।
प्रतिदूतीकृते तस्मिन् धन्यो न प्रत्ययं दधे ॥३०५५॥

देविताऽभूद् यथा नागवृत्तान्ते न भवेत् तथा ।
महीभुजं मोहयितुं मायया दीव्यते मया ॥३०५६॥

मा भूद् भिन्नोऽयमित्येवमुक्त्वा बलहरं रहः ।
व्याजार्जवेन भोजस्तु संधिबन्धाय तत्वरे ॥३०५७॥

तत्कालयोग्यसाचिव्यश्चक्रिकाचतुरस्तथा ।
तेनाऽऽशु दैशिकापत्यमेको दूत्ये न्ययोज्यत ॥३०५८॥

स बालकतया नित्यस्वतन्त्रश्चक्रिकां स्वयम् ।
आचरेदिति नाऽऽशङ्कां भोजे बलहरोऽभजत् ॥३०५९॥

---

3053. c) SA I$_3$ om. प्य.

3054 a) All Mss read सुव्यक्त° (for स व्यक्त° suggested). —c) All Mss except SG *sec manu* read °कारणज्ञा° (for °कारणाज्ञा°)

3057. After this *v* युग्मम्.

पार्थिवः प्रार्थितः संधिदूतमाप्तं प्रतीक्षते ।
प्रत्यागतेन तेनेति ततो भोजोऽभ्यधीयत ॥३०६०॥

तत्राऽसंनिहितान्याप्तः स्त्रीत्वादप्रतिभामपि ।
धात्रीं नोनाभिधानां स्वां राज्ञोऽभ्यर्णं व्यसर्जयत् ॥३०६१॥

मृतेन पित्रा मात्रा च हीनं तमनुयातया ।
मातृकृत्यं ययाऽत्राऽऽसीच्छैशवे माननीयया ॥३०६२॥

पत्युः प्रीत्यै विसंधानध्वंसाकल्पादिकल्पनात् ।
सखीकृत्यं सपत्नीनां यया शान्तेर्ष्यया कृतम् ॥३०६३॥

ह्रासोल्लासे हि कार्याणां योग्यकृत्याप्तनिश्चयात् ।
न यां सुक्षत्रियां क्ष्माभृत् संभ्रान्तां जातु वीक्षते ॥३०६४॥

श्वशुरेण प्रजाभिश्च कृतं राज्ञोऽभिषेचने ।
आशास्यं या महादेवी पट्टबन्धं समादधे ॥३०६५॥

अपत्यप्रियताभोगलोभभर्तृप्रसादनैः ।
प्रेर्यमाणाऽप्यकार्येषु बुद्धिर्यस्या न धावति ॥३०६६॥

स्वस्याऽन्यस्य च संधाने जाते भर्तुरभिन्नधीः ।
भाग्योदयेष्वनुत्सिक्ता या चाऽखण्डितसद्व्रता ॥३०६७॥

आबाल्याद् भावविद्भर्तुः कुसृत्यनुसृतौ न सा ।
कार्यमध्यं विगाहेत मानाभिजनरक्षिणी ॥३०६८॥

---

3060. [a]) $I_3$ सन्धि (for सन्धि°).
3062. [b]) All Mss read हीने (for हीन suggested with St).
3063. [d]) C S′ यथा (for यया).
3064. [a]) All Mss read °ह्लासो (for °ह्लासे suggested with St D).
3065. [c]) All Mss. read वा (for या suggested with St)
3066. [d]) C S′ $I_3$ °स्यात्र (for °स्या न).
3067. [a]) D (before suggestion) St $P_{1,2}$ $I_3$ स्वत्रान्यत्र, C S′ अत्रान्यत्र; $P_3$ स्वस्यान्यत्र (for स्वस्याऽन्यस्य suggested with D)

इति कल्हणिकादेव्या माध्यस्थ्ये स धियं व्यधात् ।
प्रस्थानपद्यात्रां सा सीमान्तप्रापणावधि ॥३०६९॥

गुप्त्यै लग्नकवित्तादि परार्ध्यं मध्यपातिनाम् ।
पाथेयार्थं पृथुस्वर्णभाजि कोशादि चाऽऽत्मनः ॥३०७०॥

प्रापयामास किं चाऽष्टौ प्रकृष्टाभिजनोद्भवान् ।
पालनार्थं राजपुत्रान् देवी यत्सर्वसंविदम् ॥३०७१॥

वाचिकं तद् गृहीत्वा तामागमत् पार्थिवेन सः ।
धात्री स कारयन् धन्यो बद्धेच्छासिद्धिनिश्चयाम् ॥३०७२॥

विहितप्रत्ययस्तस्याः सद्यः स्यात्तु महीपतिः ।
राजधर्मस्य च वसन्नासीद् दोलाकुलाशयः ॥३०७३॥

स हि दध्यौ निर्विरोधो वैराग्येणाऽथ मायया ।
संकटान्मोचितव्योऽसौ यायात् कालेन विक्रियाम् ॥३०७४॥

अनिःशेषितजीमूतजालमाविर्भवन् रविः ।
अनूनक्लेशशेषं च विवेको न स्फुरेच्चिरम् ॥३०७५॥

---

3069. [d]) All Mss read सीमन्ताप्रा° (for सीमान्तप्रा° suggested with St) After this *v.* कुलकम्

3070. [b]) All Mss. read °नम् (for °नाम् suggested with St)

3071 [a]) SA $P_{1-3}$ $I_3$ प्राप्नु° (for प्राप°) —[d]) All Mss except SG *sec manu* read °वत्स° (for यत्स°)

3072 [a]) All Mss. read वाचक (for वाचिक suggested with D) —[b]) $P_{1-3}$ D पार्थिवेव (for पार्थिवेन)

3074. [b]) C S' $P_2$ $I_3$ °ग्येनाथ (for °ग्यणाऽथ). —[c]) All Mss read °तव्यासौ (for °तव्योऽसौ suggested with St)

मुग्धान्निरनुसंधाननागबाधाद्वेत्य नः ।
स्वार्थस्य सिद्धये माया तेनेयं निरमायि वा ॥३०७६॥

लब्धलक्षेऽपरिक्षीणे शक्के यूनि गणाश्रिते ।
क्षत्रधर्मस्थिते नेदृग्विवेकः क्वाऽपि लक्ष्यते ॥३०७७॥

अवल्लि कौङ्कुमं पुष्पमपुष्पं क्षीरिणः फलम् ।
अकालपर्ययापेक्षं वैराग्यं वा महात्मनाम् ॥३०७८॥

न त्याज्यो राजपुत्रोऽसावेवं मायानिधिर्यदि ।
एवं विवर्तश्चेत् तस्मिन्नदृष्टे किं दृशोः फलम् ॥३०७९॥

राज्ञी राजात्मजाश्चैते प्रतिष्ठाभङ्गशंसिनः ।
ऋजुप्रभावात् सुस्पष्टमन्यत्कार्यं न मन्यते ॥३०८०॥

अटन्ती कुटिलं स्पष्टं सरित्सर्वैर्न लक्ष्यते ।
कान्ताकुन्तलनिःस्यन्दी तोयबिन्दुरिव क्रमः ॥३०८१॥

इति ध्यात्वा राजधर्मं सत्यप्रज्ञोचितं व्यधात् ।
धन्यरिल्हणयो कार्यं श्रुतावन्यान् विसर्जयन् ॥३०८२॥

स्वस्यैवाऽर्थस्य दार्ढ्याय साल्हणिस्त्वां दिदृक्षते ।
समागमायेत्युक्त्वाऽथ धन्यो दूतैरनीयत ॥३०८३॥

---

3076. a) C SA $P_2$ मुग्धानिर° (for मुग्धान्निर°). —c) D (before suggestion) $P_{1-3}$ स्वस्थस्य (for स्वार्थस्य).

3077. a) C °लक्षे परि° (for °लक्षेऽपरि°) —b) C SA $P_2$ $I_3$ शक्तो (for शक्के).

3078 a) St C S′ $P_{1,2}$ $I_3$ कुङ्कुम (for कौङ्कुम)

3081. a) D $P_{1,3}$ $I_3$ अटिल, $SA_1$ *prima manu* अ'' ल, $P_2$ अटिले (for अटन्ती). —b) D $P_{1-3}$ $I_3$ SA शरत्स° (for सरित्स°). —c) St $P_2$ $I_3$ °विष्यन्दी (for °नि.स्यन्दी). —d) D °वाक्रम. (for °व क्रमः).

3082. d) $P_{1,3}$ श्रुत्वा° (for श्रुता°).

3083. b) C S′ SA $P_{1-3}$ $I_3$ °णिस्ता (for °णिस्त्वां)

मा भैषीदेष संधित्सुः सैन्यादिति मितानुगः ।
अवर्तिष्ट तटिन्याः स द्वीपान्तस्तत्प्रतीक्षया ॥३०८४॥

सरित् सा जानुदघ्नाम्भा भूत्वा घर्मद्रुते हिमे ।
गगनालिङ्गिभिर्भीमा तरङ्गैः समपद्यत ॥३०८५॥

अवाप्तयेर्ष्ययाऽलङ्घ्यभावं यान्त्याऽपि दन्तिनाम् ।
रुद्धः सिन्ध्वाऽभवत् सोऽथ द्विषां रन्ध्रैषिणां वशे ॥३०८६॥

सिन्धोरुभयतस्तोयैर्व्याततीरभुवोऽन्तरे ।
ते दिण्डीरोपमां प्रापुः पिण्डिताः पाण्डुवाससः ॥३०८७॥

खाशकाना सहस्राणि भोजस्य पतितं बले ।
स्थितवन्ति निहन्तुं तं तथास्थितमचिन्तयन् ॥३०८८॥

दृग्भ्यां संभ्रमदीनाभ्यामघशान्त्यै स्पृशन्निव ।
कर्णे सल्हणसूनुस्तान् संतर्ज्यावृजिनोऽब्रवीत् ॥३०८९॥

निर्दम्भमस्य विस्रम्भाद् धावतो विहिते वधे ।
निरत्ययो निपातः स्यान्नियतं निरये पुनः ॥३०९०॥

---

3084 [a]) All Mss read भैषीरेष (for भैषीदेष suggested with St). SA $P_2$ $I_3$ सन्धित्स्व (for सन्धित्सु ).

3086 [a]) St C S′ $P_2$ $I_3$ अवाप्ता चे° (for अवाप्तये°) —[b]) All Mss. read यान्त्यपि (for यान्त्याऽपि suggested) —[c]) D C S′ $P_1$ सिन्धावभू° (for सिन्ध्वाऽभव°).

3087. [c]) $P_3$ om ते C S′ हिण्डी°, D suggests डिण्डी° (for दिण्डी°). $P_{1-3}$ $I_3$ SA °रोपमता (for °रोपमा)

3088 [a]) All Mss. read खशकाना (for खाशकाना suggested with St). —[b]) All Mss except $P_3$ read पतिते (for पतित). —[d]) All Mss. read °चिन्तयत् (for °चिन्तयन् suggested with St)

3089 [d]) All Mss except $P_3$ read °तर्ज्य वृजिनो° (for °तर्ज्यावृजिनो°).

3090 [b]) All Mss [$P_3$ विधे] read विधेः (for वधे suggested with St.)

हतेऽस्मिन् वहुभृत्यस्य न च शक्तिक्षयः प्रभोः ।
नैकपक्षक्षये तार्क्ष्यरंहः संहारमर्हति ॥३०९१॥

अपि वा वाच्यता राज्ञामेवं विस्रब्धबाधनात् ।
तुल्यस्तुल्येन कर्तव्यं किमनुध्याय बाध्यते ॥३०९२॥

यथाऽयं वृत्तयेऽनन्यकर्मा भूपं निषेवते ।
तथा ममाऽपि यत्नोऽयं तत्सेवासादने यतः ॥३०९३॥

युक्तमित्यादि तेनोक्ता अपि निश्चलनिश्चयाः ।
ते न्यषिध्यन्त निर्बन्धात् प्रतिज्ञायाऽऽत्मनो वधम् ॥३०९४॥

रात्रौ तथैवाऽऽदारिद्र्याच्छिद्रं तद्रक्षितुं ततः ।
कारिताः कोशपानं ते तमर्थं सोऽपि बोधितः ॥३०९५॥

तेनाऽऽवेदितनिर्व्याजतया धीरो महीपतिः ।
अनुध्यायाऽथ संदिग्धां संधिसिद्धिममुग्धधीः ॥३०९६॥

अजातनिश्चयः सिद्धेर्विनान्तःकरणं परैः ।
अथ प्रास्थापयद् देवीं सामात्यां तारमूलकम् ॥३०९७॥

---

3091. [ab]) $I_3$ om

3092. [b]) All Mss read °वोधनात्, D suggests °बन्धनात् ( for °बाधनात् suggested with St) —[d]) All Mss. read बध्यते (for बाध्यते suggested with St Tr ).

3093. [b]) All Mss. read रूप (for भूप suggested with St D)

3095. [ab]) St °दरिद्राश्छि°, $P_{1-3}$ $I_3$ °दरिद्राच्छि°, C S′ °दारिद्राच्छि° (for °दारिद्र्याच्छि°) —[b]) C S′ गत (for तत ).

3096. [c]) All Mss read सदिग्ध (for सदिग्धा suggested)

3097. [ab]) S′ repeats the *ab* of 3096 —[a]) All Mss read अज्ञात° (for अजात° suggested) D $P_{1,3}$ °यासिद्धे (for °य सिद्धे°) —[d]) SA (conjectural reading) C S′ $P_{1,2}$ $I_3$ सामान्या (for सामात्यां).

राजधर्मविधेयत्वादवार्यक्रौर्यशङ्किनी ।
प्रस्थानप्रार्थनां भर्तुः सा स्वीकृत्य ततोऽब्रवीत् ॥३०९८॥

असामान्येष्वमात्येषु कुसृत्यालोकनात् सकृत् ।
आर्यपुत्र विचार्योऽस्ति विस्रम्भः किं विरोधिनाम् ॥३०९९॥

यद्वा निर्मानुषोन्मेषं शेमुषीत्वं विगाहितुम् ।
प्रथते नु कथंकारं मूर्तत्वं मर्त्यधर्मिणाम् ॥३१००॥

देहोपकरणत्वं ते प्राणैर्मम विचिन्त्यते ।
सतीधर्मस्तु सहते राजधर्मस्य नोचितम् ॥३१०१॥

व्यञ्जितास्यसदाचारं कलिकृत्यं द्विषि त्वयि ।
प्रारब्धो देव भोजने हिमाद्रौ हिमविक्रयः ॥३१०२॥

न गृह्णाति शमं वेत्ति स्वस्याऽन्यस्य न चाऽन्तरम् ।
निर्व्यूढमददोषोऽद्य प्रायेण प्राकृतो जनः ॥३१०३॥

पुत्रमन्त्र्यवरोधादिबुद्ध्यद्बुद्ध्या प्रधावति ।
साध्वाचारोऽपि भूपाल क्रुध्यन् विस्रब्धबाधने ॥३१०४॥

समयालङ्घनामोघगिरा देवेन पीयते ।
लोकत्रयैकपात्रेऽस्मिन् यशो नूनं मया सह ॥३१०५॥

---

3098 b) All Mss read °क्रूर° (for °क्रौर्य° suggested with D)

3099. c) All Mss read °र्योंसि (for °र्योऽस्ति suggested with St).

3100 a) D S′ °न्मेषा; $P_3$ °मेंषा, C $I_3$ SA $P_{1,2}$ °न्माषा (for °न्मेष).

3102 For the Proverb हिमाद्रौ हिमविक्रिय cf *v*. III. 138. —b) $P_{1,3}$ मयि (for त्वयि).

3104. a) C S′ $P_3$ °मन्त्र° (for °मन्त्र्य°) All Mss read °विरो° (for °वरो° suggested with St Tr.) —d) $P_{1-3}$ $I_3$ SA क्रुध्य (for क्रुध्यन्). C S′ विश्र° (for विस्र°).

त्रातव्यसंश्रयोपेक्ष्यप्राणायास्त्वन्यदायशः ।
ममैवाऽऽस्वादयन्त्याः स्यादात्मंभरिपुरास्थितिः ॥३१०६॥

इत्युक्त्वा विरतां सत्यसंधः साध्वी धरापतिः ।
शान्तशङ्कामकृत्वा तां समामन्त्र्य न्ययोजयत् ॥३१०७॥

भङ्गं सर्वानयं त्रातुं प्रयोक्तुं वेतनं नृपः ।
संरम्भे किमयं ध्यायत्यन्तः सर्वोऽप्यचिन्तयत् ॥३१०८॥

उपायेषु प्रयुक्तेषु देवीसंप्रेषणावधि ।
नाऽन्यदस्य प्रयोक्तव्यं यदवाशिष्यत क्वचित् ॥३१०९॥

सपक्षभेदाद् भूभर्तुः सबलत्वाबलत्वयोः ।
परीक्षकत्वाद्ये केचिन्माध्यस्थ्येनाऽवसन् क्वचित् ॥३११०॥

तेऽप्यल्पाः वा महान्तो वा क्षीणदाक्षिण्यशृङ्खलाः ।
भोजगृह्यैः सहाऽबध्नन् कन्थां सर्वेऽपि डामराः ॥३१११॥

ते ह्यच्छिन्नतटस्थत्वाद् द्वैराज्येऽस्माभिरीदृशाः ।
भोज संजात इत्याशु माध्यस्थ्यं परिजह्रिरे ॥३११२॥

त्रिल्लको भोजसविधं तनूजं प्राहिणोद् द्रुतम् ।
प्रावेशयच्छमाला च चतुष्कं पुष्कलैर्बलैः ॥३११३॥

---

3106. a) All Mss read °सक्षयो° (for °सश्रयो° suggested). —b) All Mss read °दाशय (for °दायश. suggested with St Tr.). —c) C S′ $I_3$ ममे° (for ममै°). —cd) All Mss. read °यन्त्यादादा° (for °यन्त्या· स्याश॰° suggested with St Tr.).

3107. d) SA *Prima manu* om. समामन्त्र्य. SG *sec. manu* सोनामन्त्र्य; SA *sec. manu* D C S′ $P_{1-3}$ $I_3$ माता मन्त्र्या (for समामन्त्र्य suggested with St).

3108 b) D $P_1$ वेदन; $P_2$ वेतुन, $P_3$ वदन (for वेतन).

3109 d) C S′ $P_{1,3}$ यदे° (for यद°)

3111 c) All Mss. read अल्पे (for अल्पा suggested)

ये भिक्षुविप्लवेऽप्याऽऽसन् राजदाक्षिण्यरक्षिणः ।
विरोधिसविधं प्रापुस्तेऽपि नीलाश्वडामराः ॥३११४॥

लहराद् देवसरसाद्धोलडातश्च डामराः ।
त्रयो नीलाश्वतश्चैका डामरी पर्यशिष्यत ॥३११५॥

न व्यरंसीद्धिमं तत्तल्लवन्ये साल्हणेर्बले ।
पतत्प्रावृट्प्रमत्तौघघोषोऽम्भोधाविवोद्धतः ॥३११६॥

भोजस्तु देवीमायान्तीं श्रुत्वा बल्हर ततः ।
ध्रुवं संधित्सया बद्ध इति सुव्यक्तमभ्यधात् ॥३११७॥

एतावन्ति दिनान्यासीत् पुंसो भ्रमयिता पुमान् ।
संबन्धिनीनां माध्यस्थ्ये स्वकुल्यात् कोऽन्यथा भवेत् ॥३११८॥

कुलचूडामणिः प्रेम्णा स यत्रैवं प्रवर्तते ।
किं स्यादगण्यप्रायाणां कार्कश्यं तत्र मादृशाम् ॥३११९॥

यच्च मायामिमां ब्रूथ तत्तथाऽस्त्वस्मि वञ्चितः ।
विश्वास्यैव भविष्यामि नाऽकीर्तीनां निकेतनम् ॥३१२०॥

मा च भूद् विजयाशा वः समेता निखिला इति ।
अद्राक्ष्म चेदृशान् व्यूहानवारुक्ष्याम वोन्नतेः ॥३१२१॥

---

3115 a) SA °द्धोलल्लातश्च, C S $P_1$ °त् होलरातश्च (for °द्धोलडातश्च).

3116 b) C S′ SA $P_{1,2}$ $I_3$ साल्हणे बले (for साल्हणेर्बले) —c) $P_{2,3}$ $I_3$ SA °मत्तोघ° (for °मत्तौघ°)

3117 a) C Ś दीवीमायात, $P_2$ दीयीमायान्तौ, $P_1$ $I_3$ दीवीमायान्तौ; SA देवीमायान्तौ (for देवीमायान्तीं). —b) All Mss. read °हरस्ततः (for °हर तत suggested with St).

3121. cd) C S′ चदृश व्यूहमवरोक्ष्यामि, D $P_{1,2}$ चेदृशा व्यूहामवरुक्ष्याम; $P_3$ $I_3$ SA चेदृशा व्यूहानवरुक्ष्याम (for चेदृशान् व्यूहानवरुक्ष्याम suggested with St) $P_{1-3}$ $I_3$ वोन्नतै (for वोन्नते ).

युक्तियुक्तमिदं चाऽन्यच्चोक्तवान् बहु निश्चयात् ।
नाऽशक्यताऽन्यथा कर्तुं भोजो बलहरादिभिः ॥३१२२॥

द्वित्राहान्तरितेऽमित्रप्रमाथेऽपरथा कथम् ।
फलकालेऽसि संवृत्त इति तं चाऽवदन् नृपाः ॥३१२३॥

तारमूलस्थितौ राज्ञ्यां ससैन्यौ धन्यरिल्हणौ ।
राजपुत्रैः सह ततः पाञ्चिग्राममवापतुः ॥३१२४॥

प्राप्ताववेल्य तौ नद्यास्तीरेऽवाचि कृतस्थिती ।
परस्मिन् कूलगहने भोजोऽप्येतावुपाविशत् ॥३१२५॥

अश्रान्तं विशतो दिङ्मुखेभ्यस्तत्कटकं भटान् ।
पश्यन्तः केऽपि संधिं न श्रद्दधुर्नृपतेर्बले ॥३१२६॥

हठप्रविष्टान्निर्यातुमक्षमानल्पसैनिकान् ।
धन्यादीन् राजवदनो हन्तुं शश्वदचिन्तयत् ॥३१२७॥

छित्त्वा सुय्यपुरात् सेतुं राज्ञः सैन्यं जिघांसवः ।
महापद्मसरोनौषु निभृतं केचनाऽवसन् ॥३१२८॥

अन्ये तत्साहसोदन्तान्वेषिणः पतनोन्मुखाः ।
स्वैः स्वैर्मार्गैस्तत्र तत्र तस्थुर्भूभृदसंमताः ॥३१२९॥

आस्कन्दं भाञ्जिलेयाद्याः पुरे शंकरवर्मण ।
शमाला क्षितिकावार्तिं डामराः समचिन्तयन् ॥३१३०॥

---

3123. c) St $P_{1-3}$ $I_3$ सवृत्तमिति (for सवृत्त इति) —d) C S′ $I_3$ $P_1$ नृपः (for नृपा ).

3124 a) D C S′ $P_3$ °स्थिते राज्ञि, $P_{1,2}$ $I_3$ °स्थिते राज्ञा, SA °स्थिते राज्ञ्यां (for स्थितौ राज्ञ्या suggested with St) —b) SA $P_{1,2}$ $I_3$ धैन्य° (for धन्य°)

3130 c) All Mss. read शमाला°, $SA_1$ gloss श्वाल् (for शमाला° suggested with St Tr )

प्राप्यं महासरित्कूलं त्रिल्लकाद्यैरगण्यत ।
नीलाश्वडामरैर्वीक्षा कार्या च नगरान्तरे ॥३१३१॥

किमन्यद्राजगृह्याणां समं सर्वे जिघांसवः ।
कारण्डवानां तोयान्तर्वेष्टितानामिवाऽभवन् ॥३१३२॥

संदिग्धशिक्षितं कार्यं सर्वतः समतां तदा ।
प्राप वृष्टेरवग्राहग्रहयोगान्तरस्थितेः ॥३१३३॥

पदे पदे राजचमूवधायोत्थानमिच्छतः ।
छिन्दन् बलहरस्येच्छां भोजो व्यग्रत्वमग्रहीत् ॥३१३४॥

क्षणे क्षणे विसंधानध्यायिना तेन कश्चन ।
बध्यमानास्वन्तरायः संविधासु व्यधीयत ॥३१३५॥

घटनामुद्ययौ यो यो विरोधः कटकद्वयात् ।
सत्त्वैकाग्रः स्वयं भोजस्तं तं त्वरितमच्छिनत् ॥३१३६॥

दूत्ये विकत्थकत्वे वा येऽभूवन् राजरञ्जकाः ।
भयेन प्रययुस्ते यद्वैकल्यं कार्यसंकटे ॥३१३७॥

---

3131 c) St D $P_{1-3}$ $I_3$ °रैर्वीशा, C S′ °रैरीर्ष्या (for °रैर्वीक्षा suggested).

3132 d) $P_{1-3}$ SA °भवत् (for °भवन्)

3134. b) All Mss read °पथायो°, St Tr °मथायो° (for °वधायो° suggested).

3135 c) C S′ वर्द्धमानस्वा°, $P_{1,2}$ $I_3$ SA बध्यमानस्वा°, D $P_3$ वाध्यमानस्वा° (for बध्यमानास्व° suggested with St) —d) D $P_3$ °यर्चीर्यत (for व्यधीयत).

3137 a) St $P_3$ च कल्यकत्वे, D C S′ $P_{1,2}$ $I_3$ च कल्पकत्वे (for विकत्थकत्वे suggested). —b) All Mss. read °रुव° (for °भूव° suggested).

कर्णे तत्कथयन्ति दुन्दुभिरवै राष्ट्रे यदुद्धोषितं
तन्नम्राङ्गतया वदन्ति करुणं यस्मात् त्रपावान् भवेत् ।
श्लाघन्ते तदुदीर्यते यदरिणाऽप्युग्रेण मर्मान्तकृद्
ये केचिन्ननु शाठ्यमौग्ध्यनिधयस्ते भूभृतो रञ्जकाः ॥३१३८॥

भाण्डस्ताण्डवमण्डपे कटुकथावीथीषु कन्थाकवि-
गोष्ठश्वा स्वगृहाङ्गने शिखरिभूगर्भे खटाकुः स्फुटम् ।
पिण्डीशूरतया विटश्च पटुतां भूभृद्गृहे गाहते
गच्छन्ति ह्रदकूपकच्छपतुलां चित्रं ततोऽन्यत्र ते ॥३१३९॥

सूरोद्रेकविपर्यासाच्छान्तोष्मक्ष्माभृतस्ततः ।
वासरः शरणीचक्रे तुङ्गस्योत्तुङ्गमञ्जसा ॥३१४०॥

भानुर्दत्तपदोऽनूरोर्भ्रातुर्गोवलयान्तरे ।
क्ष्माभृच्छिरोर्पितकरो रक्तमण्डलतां दधे ॥३१४१॥

अहस्त्रियामामुखयोरपि मध्यस्थया दधे ।
सन्ध्यया वन्दनीयत्वं जनस्य व्यञ्जिताञ्जलेः ॥३१४२॥

कवाटिदन्तैर्विस्फोटाश्चन्द्रकान्तैः शिरोद्गमः ।
श्वयथुः पयसां पत्या दधे राज्युदयोन्मुखे ॥३१४३॥

---

3138 This verse and the following are found in Vallabhadeva's *Subhāsitāvali*, 462-463, ed. Peterson and Durgāprasada. —ab) $P_1$ om after तत्कथ upto तन्नम्राङ्गतया. —b) $SA_1$ om. न्नम्राङ्गतया with a *lacuna* $SA_1$ (before corr ) करुणा (for करुण) $SA_1$ °वाभवेत् (for °वान् भवेत् ) —c) St *Subhāsitāvali* °प्युग्र न (for °प्युग्रेण) $SA_1$ कर्मान्त° (for मर्मान्त°) —d) $SA_1$ om न्ननु with a *lacuna* St $P_{1-3}$ $I_3$ भूभुजो (for भूभृतो)

3139 a) St भण्ड° ( for भाण्ड° ) All Mss read कटुकथावीचीषु, *Subhāsitāvali* चटुकथावीथीषु (for कटुकथावीथीषु suggested with St) —b) $SA_1$ marg St *Subhāsitāvali* °भूगर्ते (for °भूगर्भे)

3140 a) D St $P_{1-3}$ $I_3$ शूरोद्रे° (for सूरोद्रे°) —b) D C S' $P_{1-3}$ °न्तोष्मा (for °न्तोष्म°) —d) $SA_1$ om तुङ्ग with a *lacuna*

3142. b) St $P_3$ $I_3$ om रपि with a *lacuna* —d) $P_{1-3}$ SA जनयन्व्य° (for जनस्य व्य°).

3143. b) St $P_2$ $I_3$ सिरो° (for शिरो°).

सदैन्येष्वरविन्देषु हीनद्वन्द्वोपजीवनैः ।
कवाटिनां कटेष्वेव षट्पदैर्घटितं पदम् ॥३१४४॥

अदृष्टकार्यपर्यन्तास्ततस्ते विषमस्थिताः ।
सरित्तटे सकटकाः पर्यतप्यन्त मन्त्रिणः ॥३१४५॥

न किंचित्प्रत्यभात् तत्त्वं लघु भ्रान्तं च जानताम् ।
ओघेन ह्रियमाणानामिवैषामवलम्बनम् ॥३१४६॥

तीरे परस्मिन् सरितो वसन् बल्हर पुनः ।
रुद्धः कन्दलितास्कन्दबुद्धिः साल्हणिनाऽसकृत् ॥३१४७॥

कार्यातिपातादायातं मन्त्रिणां तन्मितं बलम् ।
तस्य प्रवर्धमानस्य सुखोच्छेदं बभूव यत् ॥३१४८॥

वितस्तासिन्धुसंभेदयात्रायां नगरे यथा ।
तथा तत्राऽपतद् रात्रौ लोकोऽश्रान्तो व्यवर्तत ॥३१४९॥

लेखैर्डामरसंहारखण्डनाय विसर्जितैः ।
सान्तरैर्ग्रथिता बाह्यैर्नानाग्रै राजबीजिनः ॥३१५०॥

शाठ्यान्वितैरनुचरैस्तुमुलोत्पादनैरपि ।
धीरो धैर्यान्निश्चयाद्वा स्वैः स क्रष्टुं न पारितः ॥३१५१॥

---

3144. c) St C S′ $P_2$ $I_3$ घटे° (for कटे°)

3146. a) D $P_{1-3}$ $I_3$ SA °भा···त्स्व; St °भात्सर्व, C S′ °भातस्व (for भात् तत्त्व suggested).

3147. cd) All Mss except C read °स्कन्दो बुद्धि (for °स्कन्दबुद्धि). —d) $I_3$ SA °णना° (for °णिना°)

3149 b) C S′ यया (for यथा). —c) All Mss read तथा° (for तत्रा° suggested with St Tr) —d) D C S′ $P_2$ लोक, $P_3$ लोके (for लोको°)

3151. a) All Mss read °तुसरे° (for °नुचरै° suggested)

सामन्तानामागतानामविस्रम्भादसंभ्रमम् ।
न्यक्कृतोऽयं निपत्याशु कुर्यादत्याहितं रुषा ॥३१५२॥

कृते च कदनोंकारेऽनेन सर्वस्समुन्मिषेत् ।
द्विजानामिव दस्यूनां समूहस्तेन सर्वतः ॥३१५३॥

इति निर्ध्याय दुध्रुक्षुरिव भोज· क्षपात्यये ।
कुर्मः साहसमित्युक्त्वा निन्ये बलहर समम् ॥३१५४॥

तेषां तदर्थायातानां सामन्तानां सभाजने ।
दाक्षिण्यादिति नाऽभोजि तेनाऽप्यभिजनस्पृशा ॥३१५५॥

तथा स्वमत्याऽवैमत्यं तमज्ञात्वा तु मन्त्रिणः ।
निष्प्रत्ययास्ते न जातममन्यन्त नयात्ययम् ॥३१५६॥

पक्षिपक्षस्फुटास्फालशफरस्फुरितेऽप्यधात् ।
तेषामासविधास्कन्दः प्रधावदहितभ्रमम् ॥३१५७॥

कूलेऽपरस्मिन् कूलिन्याः स्वामिसंधाननिर्वृतैः ।
समभाव्यत तैर्नाऽन्यो रथाङ्गेभ्योऽभिषङ्गभाक् ॥३१५८॥

---

3153 b) St $I_3$ $P_3$ SA have a *lacuna* of two Syllables before समुन्मिपेत् D C S′ $P_{1,2}$ सर्वं (for सर्व. suggested).

3154 a) $P_3$ SA दुद्दु° (for दुध्रु°). After this v तिलकम्.

3155 a) $P_{1-3}$ $I_3$ SA एता मदर्थया°, C S′ $P_2$ तेषा तदर्थया°; St suggests एषा मदर्थाया° (for तेषा तदर्थाया°). —b) $P_{1-3}$ $I_3$ SA °ना सभोजनि, $P_2$ °ना सभोजने, St suggests ना सभोजन., D °नामभाजने (for °ना सभाजने suggested)

3156 a) All Mss read समत्यावं° (for स्वमत्यावै° suggested with St). —c) All Mss read °स्तेन (for स्ते न suggested).

3157. c) St °स्कन्द प्र°, D C S′ $P_{1-3}$ °स्कन्द प्र° (for °स्कन्दप्र° found in $I_3$).

मरुत्काकुत्स्थदूतस्य कपेस्तीर्णाम्बुधेः पिता ।
ततान तेषां दूतानां सरित्पारगतौ बलम् ॥३१५९॥

कीर्णकर्णज्वरांश्चाऽरीन् पीत्कृतैस्तीरभूरुहाम् ।
आश्रित्योन्निद्रकेणेत्थं निन्युस्ते तां निशीथिनीम् ॥३१६०॥

क्षपान्ते क्ष्माधरोत्तंसहेमतामरसभ्रमम् ।
उद्गच्छतो रवेर्यावच्चिच्छिदुर्न करच्छटाः ॥३१६१॥

चक्राह्वविरहालोकसशोकानामिवाऽगलत् ।
कुट्मलाक्षिपुटाद्यावन्नैशं नाऽम्भश्च वीरुधाम् ॥३१६२॥

मितपत्तियुतस्तावत् तरुकच्छाद् विनिर्गतः ।
स वीरस्त्वरयन् युग्यवाहान्मूर्ध्न्यङ्घ्रिणा स्पृशन् ॥३१६३॥

रोद्धुकामाण्डामरीयान् वीरान् दृष्टैर्विलोकितैः ।
सर्वतो धावतः कुर्वन् योधान् प्रतिहतौजसः ॥३१६४॥

पारश्वधी चारुवेषो युवा संमुखमापतन् ।
युग्याधिरूढस्तैः प्रैक्षि संप्राप्तः सरितस्तटम् ॥३१६५॥

अदृष्टपूर्वं तं दृष्ट्वा श्रीखण्डोल्लिखितालकम् ।
कुङ्कुमालेपिनं चैते भोजोऽयमिति मेनिरे ॥३१६६॥

अतिवाह्य निशां राजवदनं तं विमोहयन् ।
प्रातश्च तरसाऽऽमन्त्र्य स तथा संमुखो ह्यभूत् ॥३१६७॥

---

3159. a) SA $P_2$ $I_3$ °काकुस्थ° (for °काकुत्स्थ°). —d) St SA $P_{1-3}$ $I_3$ om. बलम् with a *lacuna*.

3162. b) C S′ $P_{1,2}$ $I_3$ °मशो° (for °सशो°).

3163 c) St S′ $P_3$ $I_3$ om. स वीर with a *lacuna* —c) All Mss. [SA युद्धय°] read युद्ध° (for युग्य° suggested with St Tr.). —d) SA C S′ $P_{1,2}$ $I_3$ स्पृशत् (for स्पृशन्).

3165 After this *v* कुलकम्

प्रविष्टयुग्यं तोयान्तः पाराद्धावितवाजिनः ।
धन्यादयस्तमभ्येत्य मुदिताः पर्यवारयन् ॥३१६८॥

उदभूत् तुमुलः शब्दस्ततः कटकयोर्द्वयोः ।
एकत्राऽऽक्रन्दमुखरः परत्राऽऽनन्दनिर्भरः ॥३१६९॥

नादमाकर्ण्य संग्रामबुद्धया दिग्भ्यः प्रधावितैः ।
तं परैर्मिलितं वीक्ष्य मूर्ध्न्यताड्यत डामरैः ॥३१७०॥

तस्याऽभिनन्दनालापप्रमुखा प्रक्रियाऽभवत् ।
अदैन्यशुद्धा धन्यादिष्वनुज्झितनिजक्रमा ॥३१७१॥

प्लवमानं मनोहर्षे वेगात् संस्तम्भ्य सर्वतः ।
अथेत्थं स्तुवता तत्तत् स धन्येनाऽभ्यधीयत ॥३१७२॥

राजपुत्र पवित्रेयं पृथिवी स्थैर्यशालिना ।
त्वया धाम्ना सुमनसां मेरुणा वा महीभृता ॥३१७३॥

गवां जयति सर्वासां निर्विकारतया वसन् ।
विक्रियोपहतं गौस्ते क्षीरं च क्षीरवारिधेः ॥३१७४॥

कस्य पुंस्कोकिलस्येव त्वां विनाऽधममध्यतः ।
निर्गत्य निजकुल्यानां सिद्धं मध्यावगाहनम् ॥३१७५॥

---

3169. c) All Mss read °क्रान्ति° (for °क्रन्द° suggested with St).

3170. c) $SA_1$ (before corr ) $I_3$ डामरै° (for त परै°).

3171. b) C S′ $P_2$ $I_3$ SA °पक्रिया° (for प्रक्रिया°) —c) All Mss. read °शुद्ध° (for °शुद्धा suggested with D)

3172. b) St (before corr in corrigenda) °स्तभ्य (for °स्तम्भ्य)

3174 a) D C S′ $P_{1,2}$ $I_3$ गर्वाज्ञ° (for गवा ज°). —d) St SA $P_3$ $I_3$ om. च with a *lacuna*. D C S′ $P_{1,2}$ त (for च suggested).

सदाचारस्य भवता प्रथमं प्रहते पथि ।
न तच्चित्रं संचरामश्चरमं चेत् ततोऽधिकम् ॥३१७६॥

इत्यादिप्रसृतालापदत्तोल्लापोऽधिरोप्य सः ।
जयोत्तरङ्गं तुरगं स्तुवद्भिस्तैरनीयत ॥३१७७॥

लवन्याः कतिचित् क्रोशान् विक्रोशन्तस्तदा ययुः ।
स्वकुल्यैर्नीयमानं तं काका इव पिकान्तिकम् ॥३१७८॥

स एवमेकविंशेऽब्दे ज्यैष्ठस्य दशमेऽहनि ।
त्रयस्त्रिंशद्वर्षदेश्यः समगृह्यत भूभुजा ॥३१७९॥

राज्ञी कृतप्रणामं तं प्रियं पुत्रमिवाऽऽगतम् ।
अभ्यनन्दच्छ्रान्तभृत्यमस्याऽऽहारमकल्पयत् ॥३१८०॥

इन्दुवंशाविसंवादिगुणग्राममवेक्ष्य तम् ।
प्रागदृष्टवती मेने वञ्चिते सा विलोचने ॥३१८१॥

गुणैरशाठ्यदाक्षिण्यमाधुर्याद्यैरकृत्रिमैः ।
तस्या विशदशीलं स क्ष्मापतिममन्यत ॥३१८२॥

मुखरागो मनोवृत्तेर्द्वारौज्ज्वल्यं गृहश्रियः ।
भर्तृस्वभावस्याऽऽचारो योषितामनुमापकः ॥३१८३॥

---

3177. b) SA $P_1$ $I_3$ °दन्तोल्लापोधिरोह, C S′ $P_2$ °दत्तोल्लापोधिरुह्य, $P_3$ °दत्तोल्लापोभरोह; St (after suggestion) D °दत्तोल्लापोधिरोह्य (for °दत्तोल्लापोऽधिरोप्य suggested).

3178. a) C S′ लवन्य (for लवन्या), D $P_3$ °क्रोधाद्, C S′ $P_{1,2}$ $I_3$ SA °क्रोशाद् (for °क्रोशान् suggested with St)

3179. b) D SA S′ $P_{1-3}$ $I_3$ ज्येष्ठस्य (for ज्यैष्ठस्य)

3181. a) C S′ $P_{1,2}$ $I_3$ SA इन्द्र° (for इन्दु°)

3182 d) D $P_{1-3}$ °रमन्यत (for °ममन्यत)

3183 a) C S′ $P_{1,2}$ $I_3$ SA मुखरागम°; D (before suggestion) मुखराग म° (for मुखरागो म° suggested with St D).

दिनक्षयव्यञ्जिताध्वक्लमं प्रस्थातुमुत्सुकम् ।
राज्ञोऽभ्यर्णं विशेत्येनं दाक्षिण्यात् कोऽपि नाऽब्रवीत् ॥३१८४॥

कथंचिद् रुद्धमाध्यस्थ्यवैमत्यैः सचिवैरथ ।
स त्वादिक्षुर्नरपतिरशान्तेर्ष्योऽभ्यधीयत ॥३१८५॥

राज्ञोऽभ्यर्णं विशेत्युक्तेरुपोद्धातोपमं वचः ।
तत्तस्य श्रोत्रशष्कुल्यां तदा शङ्कुक्रियां व्यधात् ॥३१८६॥

चिरात् ताडितमर्मेव समाश्वास्यैक्षताऽथ सः ।
मध्यस्थानां स्थितं स्थैर्यं दाक्षिण्यादोष्ठयोः परम् ॥३१८७॥

प्राणान्मुमुक्षोस्ते रूक्षभाषिणस्तस्य सान्त्वनैः ।
मन्दत्वं विक्रियां निन्युर्विनयानतमौलयः ॥३१८८॥

आचारं चैनमस्निग्धमपि न्याय्यं वचस्विनम् ।
न कोऽपि प्रतिवाक्येन शक्यं जेतुममन्यत ॥३१८९॥

अथ स्वान्तस्थितस्वामिवैवश्यं दर्शयन्निव ।
दशनांशुवनैर्धन्यो वीरः स्निग्धमभाषत ॥३१९०॥

पद्धतिं राजधर्माणां सदाचारे स्थितिं च ते ।
जानतोऽपि कथं मोहः क्रमायातेषु वस्तुषु ॥३१९१॥

किं संधिः सोऽभिधीयेत यत्र संधेयदर्शनम् ।
अकृत्वा गम्यत इति प्राज्ञो कथमजीगणः ॥३१९२॥

---

3184 b) $P_1$ $I_3$ SA °क्लमा (for °क्लम) —c) C $P_{1-3}$ $I_3$ SA विशत्येन; $P_3$ विशत्यैन, S′ विशत्येव (for विशेत्येन)

3185. a) S′ $P_{1,2}$ °ध्यस्थ° (for °ध्यस्थ्य). —c) $I_3$ St त्वादिक्षन्न° (for त्वादिक्षुर्न°). —d) St SA $P_1$ $I_3$ °राशा° (for °रशा°). All Mss. read °न्तेभ्यो° (for °न्तेर्ष्यो° suggested with St)

3186. a) C S′ $P_{1-3}$ $I_3$ SA विशत्यु° (for विशेत्यु°). —d) St SA $P_3$ $I_3$ om. तदा with a *lacuna*

3187. a) C S′ निरताड्यत (for चिरात् ताडित°).

3191. b) D (before suggestion) St $P_{1-3}$ $I_3$ स्थितां (for स्थितिं).

अनद्यतनभूभर्तृसुलभं भूभुजं तव।
ज्ञात्वा सत्त्वोज्ज्वलं ज्ञातिधर्मजातप्रवर्तनम् ॥३१९३॥

नाऽस्य दम्भस्मयस्तम्भाप्रीतिस्थैर्यखलोक्तयः।
आदरादर्शवैशद्ये निःश्वासस्याऽपि काः श्रियः ॥३१९४॥

अस्योपजीवनाद्या श्रीः साम्राज्यासादनान्न सा।
प्रकाशो विम्बितो योऽर्कादीपात् स्याज्ज्वलतः स किम् ॥३१९५॥

निर्वाणगोष्ठीनिष्ठत्वं शमिनामाश्रयेषु यत्।
तत्पर्षद्यस्य राजर्षेर्विद्वद्वृन्दानुबन्धिनः ॥३१९६॥

एवं स्वगृहसंप्राप्यप्रायोनिःश्रेयसस्य ते।
स्थाने श्रियः समाप्त्याऽथ किं स्यादन्यैर्महीधरैः ॥३१९७॥

मुग्धा न केचन परे गणिताः फणिभ्यः
कालानुकूलनिजकुण्डजलत्यजो ये।
श्लिष्यन्ति चन्दनतरूञ्शिशिरान्निदाघे
माघेऽप्यशीतमपरं विवरं विशन्ति ॥३१९८॥

---

3193. b) All Mss read °सुलभे (for °सुलभ suggested with St D). —b) All Mss read भूभुजा (for भूभुज suggested with St).

3194. ab) D C S′ $P_{1-3}$ $I_3$ °स्तम्म· प्रीति°, SA °स्तम्भप्रीति° (for °स्तम्भाप्रीति° found in SG *sec manu*).

3195. b) D (before suggestion) $P_{1-3}$ $I_3$ SA सः (for सा). —c) $I_3$ $P_3$ SA बिम्बतो (for बिम्बितो)

3196. d) D $P_2$ C S′ °र्षेर्जनान्वृ°; $P_{1,3}$ $I_3$ SA °र्षे ·· न्वृ° (for °र्षेर्विद्वद्वृ° suggested with St).

3197. c) All Mss. read स्थानै श्रियः समाप्याथ (for स्थाने श्रिय समाप्त्याऽथ suggested)

3198. b) S′ SA $P_{1,2}$ $I_3$ °जल · जो; $P_3$ °जकुण्ड···ल···जो (for °जकुण्डजलत्यजो). —d) SA $P_{1,3}$ °शीतम व, D (before suggestion) St C S′ $P_2$ °शीतमनव, $I_3$ °शीतम्बर (for °शीतमपर suggested with D).

प्राणोपकरणं राज्ञो राज्ञी राजात्मजाश्च ये ।
तद्धिते यदनौचित्यं तेषामौचित्यमेव तत् ॥३१९९॥

त्यक्तोष्मवैकृतं पाथ इव क्वथितशीतलम् ।
अनुतापेन ते कृत्यं भूयो वैरस्यमेष्यति ॥३२००॥

तथा समर्था सामर्थ्यादप्रत्याख्याय भारतीम् ।
कुण्ठशाठ्यलवस्तस्थौ प्रस्थानार्थं स मन्थरः ॥३२०१॥

पथि संग्रथितस्तोत्रान् वास्तव्यान् वीक्ष्य सर्वतः ।
अजायताऽथ संरूढकृत्यसाधुत्वदार्ढ्यधीः ॥३२०२॥

पदातिचरणक्षुण्णरेणुव्याजाददृश्यत ।
वसुंधरातलं बद्धसंधीव नभसा समम् ॥३२०३॥

दध्यौ विज्ञतरो भोज· कच्चित्संप्राप्नुयां नृपम् ।
कच्चिन्नाऽमुष्य विघ्न्येत दर्शनं विप्रलम्भकैः ॥३२०४॥

आराधयन् प्रभुं धाम्नि नान्तराऽन्तरितो विटैः ।
स्वामिनां क इवाऽऽप्नोति गुणाविष्करणक्षणम् ॥३२०५॥

शीतोपचारकरणाद् दयितो भवेय-
मौर्वार्दितस्य जलधेः प्रसृतं धियेति ।
स्रोतो हिमाद्रिपयसो विनिपात एव
ग्रासीकृतं तिमिभिराहतमेव तत् स्यात् ॥३२०६॥

---

3201 ab) D C S′ $P_2$ समर्थासामर्थ्यान्न प्र°, $P_{1-3}$ SA समर्थासामर्थ्या…प्र° (for सामर्था सामर्थ्यादप्र° suggested with St).

3204 a) St SA $P_{1-3}$ $I_3$ om. (for विज्ञतरो). —c) D (before suggestion) St $P_{1,2}$ काच्चिद°, C S′ $P_3$ $I_3$ कश्चिद° (for कच्चिन्ना° suggested with D) —d) St $P_{1-3}$ $I_3$ °लम्बकै (for °लम्भकै.).

3205. a) St $P_{1-3}$ $I_3$ °धन धा° (for °धयन् प्रभु धा°)

3206 d) St $P_{1,3}$ $I_3$ om. मेव तत् with a *lacuna*

इत्यादिचिन्तास्तैमित्यात् पुरक्षोभाद्यलक्षयन् ।
सैन्यस्य रुद्धाश्वतयाऽबुद्धाऽऽसन्नं नृपास्पदम् ॥३२०७॥

नाऽतिप्रांशुं नाऽतिकृशं सूर्यांशुश्यामलाननम् ।
सरोजकर्णिकागौरं शिथिलश्लथविग्रहम् ॥३२०८॥

ककुद्मत्ककुदोत्सेधिस्कन्धमायतवक्षसम् ।
श्मश्रुणाऽनतिदीर्घेण व्यक्तगण्डगलोन्नतिम् ॥३२०९॥

उन्नसं पक्वबिम्बोष्ठं विस्तीर्णानुल्बणालिकम् ।
तिर्यग्विप्रेक्षमाणास्यं धीरमन्थरगामिनम् ॥३२१०॥

समाहितांशुकोष्णीषमौलिं श्रीखण्डवक्षसम् ।
सीमन्तस्थानचुम्बिन्या रेखया चन्द्रगौरया ॥३२११॥

अश्वावरूढं हर्म्यस्थः सचिवैः परिवारितः ।
अनङ्गतुल्यमायान्त तमवैक्षत पार्थिवः ॥३२१२॥

प्रीतिविस्फारितदृशा राज्ञा पृष्टस्ततः सभाम् ।
सोऽध्यारुरोह संबाधां कौतुकोत्कंधरैर्जनैः ॥३२१३॥

स्पृष्ट्वा पादौ निषण्णोऽग्रे नृपस्याऽऽनीय पाणिना ।
खड्गधेनुं पाणिबद्धामासनाग्रे समार्पयत् ॥३२१४॥

---

3207. [d]) C S′ $P_1$ $I_3$ SA °सन्न° (for °सन्न).

3210. [b]) C S′ °णाङ्कम् (for °णालिकम्). —[c]) D प्रेक्ष ˙˙, St $P_{1-3}$ $I_3$ SA °प्रेक्ष्य ˙ (for °प्रेक्षमाणास्य)

3211. [a]) St SA $P_{1-3}$ $I_3$ om मौलि with a *lacuna.* —[b]) St $P_1$ $I_3$ °व म्, C S′ $P_2$ वर्द्धनम् (for °वक्षसम्). —[c]) St $P_{1,3}$ $I_3$ om. स्थान with a *lacuna.*

3212. [a]) All Mss read हर्म्यस्थ° (for हर्म्यस्थः suggested with D). —[b]) All Mss read °रितम् (for °रित. suggested with St). —[c]) St SA $P_{1,3}$ $I_3$ om. अनङ्गतुल्य with a *lacuna* —[d]) D (before suggestion) $P_{1-3}$ $I_3$ SA पार्थिवम् (for पार्थिव) After this *v.* कुलकम् .

3214 [d]) $P_{2,3}$ $I_3$ SA समपर्यत् (for समार्पयत्).

पाणिं सफणिवल्लीकं विवृताग्राङ्गुलिद्वयम् ।
ततोऽस्य चिबुकोपान्ते विन्यस्यन् पार्थिवोऽब्रवीत् ॥३२१५॥

न विगृह्य गृहीतोऽसि नाऽधुनाऽपि निबध्यसे ।
तदङ्ग कस्माद् गृह्णीमः शस्त्रमेतत्त्वयाऽर्पितम् ॥३२१६॥

व्यजिज्ञपत् स भूपालं देव शस्त्रस्य धारणम् ।
स्वामिसंरक्षणं स्वस्य परित्राणस्य कारणम् ॥३२१७॥

देवे निजप्रतापाग्निगुप्तसप्तसरित्पतौ ।
सेवावकाशो विरलः स्वशस्त्रस्याऽपि दृश्यते ॥३२१८॥

लोकान्तरेऽपि शरणं चरणाश्रयणं प्रभोः ।
तत्राऽत्र लोके किं कार्यं त्राणोपकरणैः परैः ॥३२१९॥

राजा जगाद तं सत्त्वस्पर्धाबन्धेऽधुना भवान् ।
निर्व्यूढकृत्यो वादीव कृत्यं नो वर्तते परम् ॥३२२०॥

भोजो बभाषे दाक्षिण्यजननायाऽधुना प्रभोः ।
दृष्टादृते मया किंचिन्नोपचारार्थमुच्यते ॥३२२१॥

किं ते न चिन्तितं दुष्टं किं किं न कृतमप्रियम् ।
यदसिद्धं न तद् व्यक्तिमगादित्यवधार्यताम् ॥३२२२॥

किं न मल्लान्वये कश्चित् कारणेषूदितो भवान् ।
विद्मः स्माऽनन्यकुल्यं प्राग्यं वयं चर्मचक्षुषः ॥३२२३॥

---

3216. [b]) All Mss read न वध्यसे (for निबध्यसे suggested with St D) —[d]) S′ om after शस्त्र.

3217. [ab]) S′ om upto शस्त्र (Scribe's error) —[a]) C $P_{1-3}$ $I_3$ भूपाल (for भूपाल) —[cd]) $P_{1-3}$ om

3221 [c]) D (before suggestion) C S′ $P_{1-3}$ $I_3$ स्रष्टा° (for दृष्टा°).

3222. [a]) C S′ दृष्ट (for दुष्ट).

3223 [c]) SA $P_3$ $I_3$ विद्म (for विद्मः). D C S′ $P_{1,2}$ °स्मानतुकुल (for स्माऽनन्यकुल्य)

यदा यदा देव वाञ्छामकार्ष्म भवदप्रिये।
भूमिस्तदा तदा भूता पात्रं कम्पस्य भूयसः ॥३२२४॥

यावत् कवीनां निर्भाति प्रतिभाऽनेन भास्वरः।
देवाऽभवन्नः प्रत्यक्षः प्रतापस्तादृशस्तव ॥३२२५॥

न शेखरे न प्रदरे न दरेऽप्युज्झितो मया।
प्रालेये भूभृतः कुञ्जे संज्वरस्त्वत्प्रतापजः ॥३२२६॥

ततः प्रभृत्यवनतिप्रणयः शरणैषिणः।
सिद्धः संध्यादिवन्ध्यत्वाद् देव दूरस्थितेर्न मे ॥३२२७॥

अथाऽभेदाभिलाषेण पापाद् यत्किल चेष्टितम्।
स्फुरत्तामात्रकव्यक्त्यै नतु तद्विग्रहाग्रहात् ॥३२२८॥

त्वत्संबन्धादिमे दिक्षु प्रतीक्ष्याः क्ष्माभुजां वयम्।
सङ्गाद् गङ्गाम्भसः काचकुम्भसंभावना भुवि ॥३२२९॥

अद्याऽपि द्योतते शाहेराह्वयेन दिगन्तरे।
तत्संतानभवोऽनन्तः समूहः क्षत्रजन्मनाम् ॥३२३०॥

त्वय्यर्पिते पार्वतीयभूभृत्सङ्गे यदा हि नः।
कदन्नाशनदुर्भोगासुस्थै खेदोन्मुखैरभूत् ॥३२३१॥

---

3224. cd) St $P_{1,3}$ $I_3$ SA भूम्ना भूप ' भूयस (for भूता पात्र कम्पस्य भूयस).
3225. b) C S′ $P_1$ $I_3$ भासुर (for भास्वर).
3226. b) C S′ $P_{1-3}$ $I_3$ SA °ज्झिते (for °ज्झितो) —c) D suggests प्रालेयभूभृ° (for प्रालेये भूभृ°)
3227. c) All Mss [$P_3$ सन्ध्याय°] read सध्यायि° (for सध्यादि° suggested with St) —d) C S′ SA $P_{1-3}$ $I_3$ °स्थिते न, D °स्थितेन (for °स्थितेर्न suggested with St)
3228. b) SA $P_{1,3}$ $I_3$ पा द् (for पापाद्).
3229. b) C S′ $P_{1-3}$ $I_3$ SA क्ष्माभुजा (for क्ष्माभुजां).
3230 ab) All Mss. read शाह्वा° (for शाहेरा° suggested with St).
3231 b) All Mss. read °त्सङ्गेन्यदादि न (for °त्सङ्गे यदा हि नः suggested) —cd) St SA $P_{1,3}$ $I_3$ °नदु मुखै, $P_2$ °नदु · सुस्थः (for °नदुर्भोगासुस्थै)

इतीदृशीभिः स्तुतिभिः प्रमाणमथवा प्रभुः ।
इत्युक्त्वा भूपतेर्मूर्ध्ना सोऽगृह्णाच्चरणौ पुनः ॥३२३२॥

प्रणामसंभ्रमस्रस्तोष्णीषशीर्षे ततो नृपः ।
तस्योत्थितस्य स्वशिरोवाससा समवस्त्रयत् ॥३२३३॥

स्वां तां च शस्त्रीं तन्न्यस्तामुत्सङ्गे सान्त्वयन् व्यधात् ।
तस्याऽसंक्षोभगाम्भीर्यैस्तमूचे च निषेधिनम् ॥३२३४॥

दत्ते मया बिभृहि वा त्वमेते पूजयाऽथवा ।
न शस्त्रग्रहवैमुख्यं कार्यं मच्छासनं त्वया ॥३२३५॥

अवन्ध्यशासने मानिन्यनुबध्नति ते व्यधात् ।
शस्त्र्यौ राजानुमत्यैव वन्दित्वाऽङ्के स कालवित् ॥३२३६॥

ततो निर्यन्त्रणत्वस्य नर्मणः सान्त्वनस्य च ।
चिरसेवीव तत्कालं राज्ञोऽजायत भाजनम् ॥३२३७॥

अन्यत्प्रविष्टो धन्योऽथ स्वार्चामकथयत् कृती ।
कृतप्रणामो भूपाल त्वद्गुणाकर्णनं विना ॥३२३८॥

---

3232. [a]) $P_3$ $I_3$ SA इदीदृ° (for इतीदृ°) St SA $I_3$ $P_3$ om. स्तुतिभिः with a *lacuna*

3234. [a]) C S′ शाता (for स्वा ता)

3235. [a]) C S′ दत्ता, D (before suggestion) $P_{1-3}$ $I_3$ SA दत्त (for दत्ते suggested with St D) —[b]) C S′ °मेता, $P_2$ °भेता (for °मेते).

3236. [a]) All Mss read °शासनो (for °शासने suggested with St). —[ab]) St ···त्यनुबध्नति; SA ·त्यनुबति; $I_3$ · न्यनुवतीति; $P_1$ ·न्यनुबध्नाति, C S′ मानीत्यनुवर्तिनि [ $P_2$ °र्तिति ], D $P_3$ मानीत्यनुबध्नाति, St suggests राज्ञीत्यनुबध्नति ( for मानिन्यनुबध्नति suggested). —[b]) C S′ ता, $P_2$ त, $P_3$ त (for ते) C न्यधात् (for व्यधात् ). —[c]) D (before suggestion) SA $P_{1,3}$ $I_3$ शस्त्रौ; C S′ $P_2$ शस्त्री (for शस्त्र्यौ suggested with St D) St D $P_1$ $I_3$ °गत्यैव, C S′ $P_3$ °गम्यैव, $P_2$ °गस्यैव (for °मत्यैव suggested) —[d]) D C S′ $P_{1,3}$ °त्वा कामका°, $P_2$ $I_3$ °त्वा कमका° (for °त्वाऽङ्के स का°).

3238. [a]) C S′ $P_2$ धन्यो वा (for धन्योऽथ). —[b]) St SA $P_1$ $I_3$ °म · यन्; C S′ $P_2$ °ममलयन् (for °मकथयत् )

न प्राणा द्रविणं नाऽद्य गण्यं निर्विक्रिया पुनः ।
सत्क्रिया स्वामिनोऽप्यर्थे तस्मात् पार्थिव चिन्त्यताम् ॥३२३९॥

तथाऽपि कथ्यमानं तन्न स्यात् संभावना भुवि ।
यदस्मिंश्चिन्त्यतेऽस्माभिरिति भूयोऽप्यभाषत ॥३२४०॥

क्षणमुच्चावचां चर्चां विरच्य्य विशां पतिः ।
भोजेन सार्धं शुद्धान्तं रङ्गादेव्यास्ततो ययौ ॥३२४१॥

कृतप्रणामस्तां वीक्ष्य सौजन्यादिगुणोज्ज्वलाम् ।
स राजपारिजातं तं मेने कल्पलतायुतम् ॥३२४२॥

मान्योऽयं देवि सौजन्यज्ञातेयाभ्यामिहाऽऽगतः ।
विशिष्यतेऽसौ पुत्रेषु क्ष्माभृद्योषेत्यभाषत ॥३२४३॥

सभाजनाय सौजन्यनिधिर्भोजान्वितस्ततः ।
उदूढकार्यभाराणां दाराणामप्यगाद् गृहान् ॥३२४४॥

अभाणीन्निपुणा राज्ञी भोजं राज्ञा सहाऽऽगतम् ।
अधुनैव नृपस्याऽऽप्तः संवृत्तोऽसीति सस्मितम् ॥३२४५॥

लज्जास्मितमुखी पत्युः प्रणत्या स्वागतोक्तिषु ।
ददत्येवोत्तरं भोज निर्दिशन्त्यप्यभाषत ॥३२४६॥

आर्यपुत्र न विस्मार्यं प्रत्याख्याततमन्त्रितम् ।
मानैकशरणस्याऽस्य ज्ञातिप्रीतिप्रवर्तनम् ॥३२४७॥

---

3239. c) SA $P_{1,3}$ $I_3$ om. प्य with a *lacuna*.

3240. a) C S′ $P_2$ अथापि (for तथाऽपि). —c) All Mss. read यदास्मिं° (for यदस्मिं° suggested with St). —d) C S′ $P_2$ भूयों व्यभा°; St भूपो व्यभा° (for भूयोऽप्यभा°)

3243 b) C S′ $P_2$ °ज्ञातेयात्वा°, $P_1$ °ज्ञातेयान्या°, $P_3$ °ज्ञातेयात्या°, $I_3$ °ज्ञातेयात्र्या° (for °ज्ञातेयाभ्या°) —d) SA °भृद्योपैत्य°, $P_1$ °व्रतोपत्य°; $P_2$ $I_3$ °भृद्योपेत्य°; $P_3$ °भृत्वोपेत्य° (for °भृद्योषेत्य°).

3245. d) C S′ $P_2$ $I_3$ °त्तोऽस्मीति; SA °त्तोमीति (for °त्तोऽसीति).

3246. b) C S′ $P_2$ °थिषु (for °क्तिषु)

पूर्वोपकर्तृ सलिलं वृद्धावस्पृशतोऽन्वहम् ।
पद्मान् स्वकुलपद्मानां युक्तं जेतुं भवादृशाम् ॥३२४८॥

कार्यकृच्छ्रेऽवसन्नानाममुष्याऽऽगमनं विना ।
सिध्येदौन्नत्यसंरक्षा नेह प्रत्यागमश्च नः ॥३२४९॥

उदीपे रक्षतस्तीरं शरीराश्रयिणी भवेत् ।
ध्रुवं वनस्पतेर्वीरुत्तन्निपातानुपातिनी ॥३२५०॥

पतिगत्यनुगामित्वं प्राणानां परिचिन्तितम् ।
तथा कार्यं यथा न स्यात्त्रातव्यस्याऽन्यथाऽऽत्मनः ॥३२५१॥

राजा जगाद तां देवि सर्वकर्तव्यसाक्षिणी ।
अन्यथा प्रतिपत्तिं मे त्वमप्यत्र न मन्यसे ॥३२५२॥

निगृहीतवतो दुष्टौ सुज्जिमल्लार्जुनावपि ।
निस्तापं मम नाऽद्याऽपि प्राप्तानुशयमाशयम् ॥३२५३॥

अथ राज्ञाऽर्थितः स्थातुं परार्ध्ये धाम्नि सानुगः ।
भोजो नाऽमन्यताऽन्यत्र राजधान्याः स्थिरां स्थितिम् ॥३२५४॥

विदूराश्रयनिर्गोप्तृभावाप्रचुरदर्शनैः ।
आराधनं धराभर्तुरसाध्यं ध्यातवान् हि सः ॥३२५५॥

रत्नितृनग्रहीत् क्ष्मापात् स्थिरांश्च समकल्पयत् ।
अनुयातो नृपं कार्येष्वृजुराराधनागमे ॥३२५६॥

---

3248. c) D पद्मान् सुकु°; $P_1$ पद्मकु° (for पद्मान् स्वकु°)

3250. a) $SA_1$ gloss उदीप अतिवृष्टया अत्युद्रिक्तजलागमः (for उदीपे).

3252 c) St °थाप्रतिपत्त्व, C Ś $P_{1,2}$ SA °था प्रतिपत्य (for °था प्रतिपत्तिं). —d) All Mss. [SA °प्य···] read °प्यस्य (for °प्यत्र suggested with St Tr )

3254. d) All Mss read राजधान्या (for राजधान्या. suggested with St)

3256 a) D C S′ $P_{1,2}$ $I_3$ SA °क्ष्मापान् ( for °क्ष्मापात् ) —b) All Mss. read स्थिर च ( for स्थिराश्च suggested ) —c) St SA $P_{1,3}$ $I_3$ अनया ' नृ°, D S′ $P_2$ अनयाता नृ°; C अनयात्त नृ° SG *sec manu* अनुयान्त नृ° (for अनुयातो नृ° suggested) —cd) D St C S′ $P_{1-3}$ $I_3$ कार्या न सुरा, SG *sec manu* कार्यान्नृसुरा (for कार्येष्वृजुरा° suggested).

विज्ञाय भावं प्रीतेन राज्ञा दत्तं ततो गृहम्।
सर्वोपकरणापूर्णं राजधान्यन्तरेऽभजत् ॥३२५७॥

राजाऽपि ममतास्फीतप्रीतिभिः स्वैः परैस्तथा।
उपासितस्तत्र रतिं चिराश्रित इवाऽऽययौ ॥३२५८॥

भोगवेलोचिताश्चर्यदर्शनादौ नृपोऽपि तम्।
प्रियं पुत्रमिवाऽस्मार्षीद् दूतैः पार्श्वं निनाय च ॥३२५९॥

जग्राह दक्षिणे पार्श्वे भुञ्जानं ज्ञातिगौरवात्।
स्पर्शास्वादितभोज्यादिदाने नैव व्यसर्जयत् ॥३२६०॥

अकृत्रिमं तथा स्नेहमुवाह जनको यथा।
लडितज्ञातिवत्तस्मिंस्तद्बालापत्यकैः समम् ॥३२६१॥

तामेवाऽऽलम्बत व्यक्तां सोऽपि वृत्तिं तथा यथा।
राजा सपरिवर्होऽपि विस्रम्भमविगर्हितम् ॥३२६२॥

आसन्नाभ्यन्तरा भिन्ना ये द्वैधे तानदर्शयत्।
राज्ञा विरक्तिं स्वस्याऽरिबाहुल्यं च व्यसजर्यत् ॥३२६३॥

अकृत्रिमात् समाधनात् कारणानां सभान्तरे।
न प्रत्यभाज्जडो नाऽपि धृष्टो नाऽपि बकव्रतः ॥३२६४॥

---

3257. a) $P_2$ भार्या (for भाव) —b) $P_1$ $I_3$ SA दातु (for दत्त)

3260. d) St $SA_5$ $P_3$ व्यवर्जयत्, $I_3$ व्यसर्जयेत् (for व्यसर्जयत्)

3261 b) St $P_{1,3}$ $I_3$ om जनको with a *lacuna* —c) St C S′ D $P_2$ $I_3$ लडित, $P_1$ लाडित (for लडित° found in $P_3$). —d) SA C $P_1$ $I_3$ °स्तद्ब लाप° (for °स्तद्बालाप°).

3262 a) All Mss read तमेवालम्बत व्यक्ति (for तामेवाऽऽलम्बत व्यक्ता suggested with St). —b) All Mss read यथा (for तथा suggested) —c) $P_1$ °वर्हेऽपि (for °वर्होऽपि)

3263 cd) $P_3$ om. —c) All Mss read राज्ञा (for राज्ञा suggested with St)

3264 b) St C S′ $P_2$ करणाना (for कारणाना).

प्रमादस्खलिते हीनातिरिक्तत्वे च भूपतेः ।
कार्यं नाऽवदधे क्षुद्रकवितेव महाकवेः ॥३२६५॥

न विक्रमकथासत्रदानाद्यैः स्वं व्यकत्थत ।
प्राग्वृत्तमन्तरा पृष्टः सोपस्कारं च नाऽभ्यधात् ॥३२६६॥

विकत्थकान् प्रभोः साम्यसकुल्यत्वादिचाटुभिः ।
धीरो धृष्टैर्दृष्टिपातैरपुनर्भाषिणो व्यधात् ॥३२६७॥

तथा स्पृष्टोऽप्यनुत्तानाशयोऽभूदवगाहितुम् ।
न शेकुस्तं यथा जाल्मनर्मवित्पिशुनादयः ॥३२६८॥

क्षणेष्ववसितालोकक्षोभादिविशरारुषु ।
प्रायेणाऽवसथं गच्छञ्छङ्कां कामपि नाऽतनोत् ॥३२६९॥

यथा यथाऽस्य विस्रम्भाद् भूपोऽभूच्छिथिलाग्रहः ।
तथा तथैव सिद्धोऽश्व इव नाऽधावदुद्धतम् ॥३२७०॥

सदैवाऽग्रेसरोऽन्यत्र पश्चाद् रुद्धपदोऽभवत् ।
अनिषिद्धोऽपि शुद्धान्तमन्त्रागारावगाहने ॥३२७१॥

विज्ञाप्यौपयिकावाप्तिप्रार्थनामादरात् स्वयम् ।
दूरीचक्रे परापेक्षां शश्वत्संशयिताशयः ॥३२७२॥

---

3265 c) C S′ कार्येणा° (for कार्यं ना°) All Mss read क्षुद्र (for क्षुद्र° suggested)

3266. b) St $P_{1,3}$ $I_3$ SA om. दानाद्यै स्व with a *lacuna*.

3267. a) St SA $P_{1-3}$ $I_3$ वि कात्, D C S′ विचारकात्, St suggests विडम्बकान् or विगर्हकान् (for विकत्थकान् suggested). —c) St D धीराधृ°, $P_1$ धीरापृ°, $P_2$ धीरो पृ°, $I_3$ धीरान्धृ°, $P_3$ धीराद्दृ° (for धीरो धृ°).

3269 c) St SA $P_1$ $I_3$ प्रा·· व°, C S′ प्राप्तोऽस्याव°, $P_2$ प्राप्तस्याव° (for प्रायेणाऽव°).

3272. a) D St C S′ SA $P_3$ $I_3$ विज्ञप्यौ° (for विज्ञाप्यौ°). —b) St °प्रार्थनमादरा°; D SA $P_{1,3}$ $I_3$ °प्रार्थन ·दर°, C S′ $P_2$ °प्रार्थन स दर° (for °प्रार्थनामादरा° suggested)

अनाप्तसमये तस्य न ययुः पथि रक्षिणः।
न स्वप्नवृत्तमप्यासीदनावेद्यं महीभुजे ॥३२७३॥

मन्त्र्यान्तःपुरिकादीनां परस्परविगर्हणम्।
नाऽवर्णयद् विस्मृतिं च दुष्टस्वप्नमिवाऽनयत् ॥३२७४॥

सचेतनोऽपि दुर्नर्मगोष्ठीष्वनुरणद्वचः।
नाऽवदत् स्फुरदप्यन्तर्विटानां नामलाघवम् ॥३२७५॥

एवं शुद्धानुभावस्य तस्य कृत्येन कृत्यवित्।
पुत्रेभ्योऽप्यधिकां प्रीतिं स्निह्यन् भेजे क्रमान्नृपः ॥३२७६॥

कलिकालमहीपालदुस्तरः सिंहभूभुजा।
सोऽयं गोत्रपरित्राणे नवः सेतुः प्रवर्तितः ॥३२७७॥

इत्थं विद्रावितारोषोपद्रवस्त्रिल्लकं ततः।
अग्निप्रोषमपि स्वास्थ्यहेतुं भूभृदचिन्तयत् ॥३२७८॥

असौ हि निर्हिमोर्वीभृन्मार्गे काले पलायनम्।
शाठ्यं सत्त्वस्य दुस्साध्यं बद्धं ध्यायन् व्यलम्बत ॥३२७९॥

अतः सुमेधा यात्रायां यावत् क्षणमपैक्षत।
सज्जपालेनाऽविचारात् तावत् प्रारम्भि धावनम् ॥३२८०॥

---

3273 a) St SA $P_{1,3}$ $I_3$ om प्त in अनाप्त with a *lacuna* St $I_3$ C S' तस्या (for तस्य) —b) St SA $P_{1,3}$ $I_3$ om. न ययु पथि with a *lacuna*

3275 b) All Mss read °रणन्वच (for °रणद्वच· suggested) —c) All Mss read अवदत् (for नाऽवदत् suggested)

3276. d) S' $P_{1,3}$ $I_3$ SA भोजे (for भेजे).

3278 b) All Mss read °स्त्रिल्लकस्तत (for °स्त्रिल्लक ततः suggested with St Tr) —cd) St SA $P_{1-3}$ $I_3$ om प्रोष and हेतु with *lacunae*.

अल्पाधिष्ठानसुभटः स देवसरसोद्भवैः ।
बहुभिः सहितः सैन्यैर्मार्ताण्डे विदधे पदम् ॥३२८१॥

निर्निरोधप्रवेशः स प्रदेशः परिपन्थिनाम् ।
बाह्याश्च योधा निस्सारा दर्पान्नेति विवेद सः ॥३२८२॥

त्रिल्लकानुचरा युद्धमसंनिहितसायकाः ।
तेन सार्धं विदधिरे न चाऽहीयन्त पौरुषम् ॥३२८३॥

निस्सीमसैन्यसहितो लवन्योऽन्यत्र डामरः ।
तत्र सर्वाभिसारेण धावतो युयुधे क्रुधा ॥३२८४॥

लुण्ठितद्रविणापूर्णास्ते देवसरसौकसः ।
सर्वे ततः सज्जपालं विद्रुताः परिजह्रिरे ॥३२८५॥

द्विषत्संवर्तवर्षात्यां सर्वत्र त्रुडितेऽभवन् ।
अधिष्ठानभटा एव कुलशैला इवोद्धताः ॥३२८६॥

ते तीक्ष्णतीक्ष्णतरणौ सोढारातिरुषश्चिरम् ।
बहून्निहतवन्तोऽन्यांस्तत्र तत्राऽऽहवे हताः ॥३२८७॥

क्षतेषु युधि सर्वेषु भिन्दानैर्मण्डलं निजैः ।
शूरेषु तत्र मार्ताण्डोऽप्यासीदविरलव्रणः ॥३२८८॥

---

3281. b) St C S' $P_{1,2}$ $I_3$ °द्भटै (for °द्भवै.).

3284 b) All Mss read डामरे (for डामरः suggested).

3285. d) C S' परिजाग्निरे, $P_{1,2}$ SA परिजग्निरे, $I_3$ ग्निरे (for परिजह्रिरे).

3286. a) D C S' $P_{1-3}$ $I_3$ °र्षांद्या (for °र्षात्यां) —c) $SA_1$ (before corr.) D C S' $P_{1-3}$ $I_3$ SA °ष्ठाने भटा (for °ष्ठानभटा) —d) $I_3$ SA इवेद्धता (for इवोद्धता ).

3287. c) $P_{1-3}$ $I_3$ SA बहूनिह° (for बहून्निह°)

3288. a) C S' हतेषु (for क्षतेषु). —b) All Mss. except D read विन्दानै° (for भिन्दानै°).

ररराजाऽऽजौ साङ्गपालिर्गयापालो हृतेषु यः ।
त्रिषु वाजिषु चातुर्यात् पदातिर्नोपलक्षितः ॥३२८९॥

तत्प्राथम्योपलब्धाजिर्जर्जस्तदनुजः शिशुः ।
निनाय विस्मयं वीरान् दृष्टासंख्यमहाहवान् ॥३२९०॥

दक्षिणं दोर्न तच्चक्रे यद्वामं कम्पनापतेः ।
महेभांस्तापयत्यर्कः कुर्याद् भग्नरदान् विधुः ॥३२९१॥

स धावन् वाजिनाऽराजदेकदोःस्फुरितायुधः ।
सधूमदण्डो दावाग्निः सपक्षोऽद्राविव स्थितः ॥३२९२॥

तं वैरितुमुले बाणव्रणभङ्गेष्वसौ पुनः ।
पृष्ठादलोठयद् वाजी तदन्वाबद्धपद्धतिः ॥३२९३॥

वर्मगौरवभूपृष्ठकाठिन्याघातपीडितः ।
स विसंज्ञो द्विषन्मध्यात् तनयाभ्यां विनिर्हृतः ॥३२९४॥

कटके सर्वतो नष्टे मार्ताण्डप्राङ्गनान्तरे ।
विरोध्यसाक्षि क्षिप्त्वा तं तावपासरतां ततः ॥३२९५॥

तत्रस्थं कम्पनाक्ष्माभृत् प्रस्थितः पृथुलैर्बलैः ।
तावद्भिः प्राप्यमप्याशु डामरं पिण्डितं व्यधात् ॥३२९६॥

---

3289. a) $P_1$ $I_3$ SA सङ्ग° (for साङ्ग°) —b) D $P_{1-3}$ $I_3$ SA °र्गयपालो (for °र्गयापालो, cf. *v.* VIII 3322.) —c) C S′ $P_{1,2}$ वाजिष्वचा°; SA $I_3$ वाजिष्मचा° (for वाजिषु चा°).

3290 d) $P_2$ $I_3$ SA दृष्ट° (for दृष्टा°)

3291. a) C $I_3$ दोन्न; $P_3$ चेन्न (for दोर्न). —b) C S′ यद्वास (for यद्वाम).

3292. a) D °जिना राज° (for °जिनाऽराज°). —c) $P_{1,3}$ $I_3$ SA °दण्ड (for °दण्डो). —d) $P_{2,3}$ $I_3$ SA °द्रादिव (for °द्राविव)

3293 d) St SA $P_{1,3}$ $I_3$ ° न्ना° (for तदन्वा°).

3294 c) C S′ विसङ्ज्ञो (for विसज्ञो).

3296 a) D St SA $P_{1,3}$ $I_3$ om कम्प with a *lacuna*

क्ष्मापाले विजयक्षेत्रं प्राप्ते त्रोटितवेश्मनः ।
सज्जपालो लवन्यस्य वसतीर्निरदाहयत् ॥३२९७॥

स तादृगपि भूपाले क्रुद्धे वक्रीकृतभ्रुवि ।
अदरिद्रो गिरिद्रोणीश्रेणिभूसुलभाशनः ॥३२९८॥

संवृत्तो निस्सहायश्च परिग्रहबहिष्कृतः ।
आपत्सुलभपाण्डित्यभृत्योपालम्भभाजनम् ॥३२९९॥

निकृत्तकरशाखोऽथ क्ष्मापकोपकपेर्व्यधात् ।
निरालम्भतया तस्य स स्वशीर्षफलार्थनाम् ॥३३००॥

रड्डादेवीतनूजानां ज्यायांसं गुल्हणाभिधम् ।
श्रीमांल्लोहरराज्येऽथ क्ष्मावृषा सोऽभ्यषेचयत् ॥३३०१॥

षट्सप्तहायनो राजतनयः स वयोधिकान् ।
चूताङ्कुरो जीर्णतरूनिवेशानजयद् गुणैः ॥३३०२॥

अभिषेक्तुं सुतं देव्या यातायाः क्ष्माभुजो व्यधुः ।
शिरश्शोणाश्मकिरणैश्चरणौ यावकारुणौ ॥३३०३॥

तत्राऽभिषिक्ते वसुधामुग्रावग्रहशोषिताम् ।
देवीभावाभिषेकार्थमिवाऽसिञ्चन् पयोमुचः ॥३३०४॥

भूयोऽपि राजवदनो विप्लवोत्पादनोत्सुकः ।
अमन्दमवचस्कन्द जयचन्द्रं नृपाज्ञया ॥३३०५॥

---

3297 b) St $P_{1,2}$ $I_3$ °वेष्टन° (for °वेश्मन.)

3298. b) $P_2$ $I_3$ SA क्रुद्धो (for क्रुद्धे). —d) SA $P_{1,3}$ $I_3$ °ण सु° (for °णिभूसु°).

3300 c) St SA $P_{1,3}$ $I_3$ om तस्य with a *lacuna*.

3301. c) C S′ श्रीमल्लो°, $P_2$ SA श्रीमाल्लो°, $P_1$ श्रीमाल्हे° (for श्रीमाल्लो°)

नागभ्रातृव्यसहितो गार्गेरन्तःप्रवेशिनः ।
पश्चात् प्रसर्पिणीः सेनाः सोऽवधीत् संकटेऽध्वनि ॥३३०६॥

गार्गिः परिभवम्लानाननस्तिष्ठन् दिनैस्ततः ।
नागभ्रातृसुताग्रण्यमबध्नाल्लोष्ठक मृधे ॥३३०७॥

दुर्गमत्वादनाक्रान्तमन्यैर्वेगात् प्रविश्य च ।
दग्ध्वा स दिन्नाग्रामं तु निरगाल्लघुविक्रमः ॥३३०८॥

तथाऽपि राजवदनो न शौर्यात् पर्यहीयत ।
न संदधे न चक्रे च शक्यमस्य विनिर्गमम् ॥३३०९॥

अहन्यहनि हीनाभिः सेनाभिर्निपतन्नृपे ।
जयचन्द्रमुखाच्छश्वदसुखान्यन्वभीभवत् ॥३३१०॥

क्ष्मानायकोऽथ निस्सीमनखबाहुप्रसारणः ।
रणान्तरेव तं तीक्ष्णैर्गूढन्यस्तैरघातयत् ॥३३११॥

तन्मुण्डगण्डलेखेन लुठता खण्डशः कृतः ।
झटिति त्रुटितः स्वास्थ्यविटप्यङ्कुरणोन्मुखः ॥३३१२॥

---

3306. [a]) All Mss read °सहिता (for सहितो suggested with St. Tr.). —[b]) All Mss. read गार्गेस्तु° (for गार्गेरन्तः° suggested)

3307. [b]) St $P_{2,3}$ $I_3$ °नन ति° (for °ननस्ति°). —[c]) D $P_3$ °सुताग्रस्थ°; $P_1$ $I_3$ SA °सुताग्रन्या° (for °सुताग्रण्य°).

3308 [c]) St च (for स). St C S′ $P_{1,2}$ $I_3$ स (for तु).

3309. [c]) All Mss read चुक्रोध (for चक्रे च suggested). —[d]) C S °र्गतम् (for °र्गमम्)

3310. [b]) St D C S′ $P_1$ $I_3$ °न्यंपत°, $P_{2,3}$ °नृंपत° (for °निपत° suggested with St. Tr) —[d]) All Mss. read °न्यवधी° [SA °न्यववधी° (for °न्यन्वभी° suggested).

3312 [d]) D °मिवास्य स्फुर°, $SA_1$ $I_3$ $P_3$ °विर्यास्यङ्कुरो°, C S′ $P_2$ °विवास्यकुर° (for °विटप्यङ्कुर° suggested with St).

पृथ्वीहरकुलच्छेदस्वच्छन्दो मेदिनीपतिः ।
अवधील्लोठनमपि च्छन्नदण्डप्रयुक्तिभिः ॥३३१३

एकवारं वेष्टितोऽपि रक्षितस्त्रिल्लकेन सः ।
भूमिभृन्नीतिपाशस्य निपातेनाऽभ्यवर्तत ॥३३१४॥

मल्लकोष्ठक्षुरजय्यसङ्डचन्द्रादयोऽभवन् ।
जीवन्मृताश्च शान्ताश्च दारिद्र्योपप्लवार्दिताः ॥३३१५॥

अविचिन्त्योच्चलक्षोणिभृतः प्राणान् विनश्वरान् ।
ऐश्वर्यरूढिमूढत्वादनिर्व्यूढव्ययस्थितौ ॥३३१६॥

मठेऽनुमितकोशत्वं तत्तद्राजाश्रयाद् गते ।
कुलोद्वहो विहितवान् सिंहदेवो व्ययस्थितिम् ॥३३१७॥

सुल्लाविहार पैतृव्यं पितुर्देवगृहत्रयम् ।
तच्चाऽर्धसिद्धं प्रासादं परिपूर्णं व्यधान्नृपः ॥३३१८॥

स एव ग्रामसामग्रीमहापणसमर्पणैः ।
निर्दोषपारिषद्यादिहृद्यान्निश्चोद्यधीर्व्यधात् ॥३३१९॥

---

3313 a) St $P_1$ $I_3$ °कुला° (for °कुल°) —b) All Mss read °स्वच्छद्मा (for °स्वच्छन्दो suggested) $P_1$ °पते, $P_{2,3}$ $I_3$ SA °पते (for °पति) —c) for लोठन cf fn of *v.* VIII 2496. —d) C S′ $P_{1-3}$ SA च्छत्र° (for च्छन्न°)

3314 d) D °भिवर्तिना, $P_1$ $I_3$ SA °भ्यवर्तिता (for °भ्यवर्तत)

3315. a) D C S′ $P_{1-3}$ °क्षरज°; $I_3$ °क्षुरज्ज° (for °क्षुरजय्य°). —b) D C S′ $P_{1-3}$ $I_3$ SR °मङ्ड° (for °सङ्ड°, cf *v* VIII 643).

3316. c) $P_2$ SA ऐश्वर्य रू° (for ऐश्वर्यरू°) —d) All Mss. read °व्यव° (for °व्यय° suggested with St Tr).

3317. d) C S′ $P_2$ $I_3$ SA व्यवस्थितम्; St D $I_3$ $P_1$ व्यवस्थितिम् (for व्ययस्थितिम् suggested with St Tr) After this *v.* युग्मम्

3318. a) SA स्वल्ला°, C $P_1$ मुल्ला° (for सुल्ला°) $P_3$ SA पैतृव्य° (for पैतृव्य). —c) St $P_{1,3}$ $I_3$ °सिद्धप्रासा° (for °सिद्ध प्रासा°).

3319. a) SG *sec manu* St ग्रामान्सा° (for ग्रामसा°).

अवरोधेन्दुवदनां मृतामुद्दिश्य चन्दलाम् ।
प्रत्यष्ठापि मठोऽनूनश्रीर्द्वारेऽवारितातिथिः ॥३३२०॥

प्लुष्टो नगरनिर्दाहैः सोऽपि सूर्यमतीमठः ।
पूर्वाधिकोऽपगर्वेण तेनैव निरमीयत ॥३३२१॥

संजाते सज्ञपालस्य ततो लोकान्तराश्रये ।
कम्पने निदधे राज्ञा गयापालस्तदात्मजः ॥३३२२॥

विपाकसुकुमारोऽपि दुस्सहः सूनुनाऽभवत् ।
विसारितः स सौम्येन शरद्भानुरिवेन्दुना ॥३३२३॥

ग्रीष्मोष्मदोषविषमेष्वविशेषवृत्ते-
मेंघोदये तटतरोस्तटिनीप्रवाहः ।
पश्यन्नकाण्डतडिदापतनेन नाशं
नाऽऽशंसति स्वसलिलस्य विभूतिलाभम् ॥३३२४॥

आ भिक्षुक्षपणाद् भोजभञ्जनादपि भूभुजः ।
विधुरे कार्यभाराणां योऽभूदूढधुरः परम् ॥३३२५॥

तस्य तस्मिन् नरपतौ क्षीणप्रक्षीणकण्टके ।
स धन्योऽनन्यसामान्यप्रेमा प्रमयमाययौ ॥३३२६॥

---

3320. a) $P_{1,2}$ $I_3$ SA °वदन ( for °वदना ) —b) C S′ $P_2$ चन्द्रला, $SA_5$ दन्दला ( for चन्दला )

3321 a) SG *sec manu* St स्पृष्टो, SA C S′ $P_{1-3}$ $I_3$ पृष्टो ( for प्लुष्टो ). All Mss except SG *sec manu* read °निर्मोह ( for °निर्दाहैः ).

3322. a) D सज्जपाल° (for सज्ञपाल°) —d) D $P_{1,3}$ गय° (for गया°).

3323 c) C S′ $I_3$ $P_1$ SA सोम्येन, $P_3$ सोम्यन ( for सौम्येन)

3324. c) C S′ शसत्य° (for पश्यन्न°)

3325 b) D °सञ्ज° ( for °भञ्ज° )

3326 a) All Mss. read नृपरते, St. Tr. conjecturally suggests नृपरत्न ( for नरपतौ suggested ) —c) D C S′ SA $P_{1,2}$ $I_3$ धान्या नान्य° ( for धन्योऽनन्य° ) After this *v* युग्मम् is suggested

ताम्बूलमायात्रिकतां नीत्वाऽसूनामयानिव ।
आर्पिपन्मधुरावट्टं जीवं यस्य निजः सुतः ॥३३२७॥

स जगज्जीवितेनाऽपि रक्षणीयः क्षमापतिः ।
पदे पदे विपन्मग्नप्रजोद्धरणधीरधीः ॥३३२८॥

व्याधितस्य विनिद्रोऽपि संसङ्गान्मङ्गेलच्छुभिः ।
नाऽन्तक्षणे तस्य पार्श्वात् कृतज्ञोऽवाचलन्नृपः ॥३३२९॥

प्रियप्रजस्याऽमात्यस्य स्वरूपविपरीतता ।
तस्य कंचित्क्षणं जाता जनजीवितदा भवे ॥३३३०॥

भूभुजामपि मान्धातृमुखानां निधनेन याः ।
दुःखं ययुः प्रजास्तासां समभावि तदा सुखम् ॥३३३१॥

द्वैराज्योपप्लुते राष्ट्रे नवस्य नृपतेरभूत् ।
अव्याहतं यत्लाघिव्यं तस्य सर्वाभिषङ्गभित् ॥३३३२॥

कालो बली व्यवहृतेर्ननु तद्वशेन
पूर्वापराचरणविस्मरणं न कस्य ।
शक्तिः क्षितेर्वहनकर्मणि भोगितायां
निर्दारणे मुरजितस्तु वराहतायाम् ॥३३३३॥

---

3327 [b]) St SA $I_3$ °त्वामूना°, D °त्वा सूना° (for °त्वाऽसूना°) —[c]) $P_1$ $I_3$ SA आर्पिपाम°, $P_2$ आपिपन्न° (for आर्पिपन्म°) C S' °वद्ध, $P_1$ °वधु; $P_2$ °वद्दा (for °वट्ट).

3328 [c]) St °मग्न, D C $P_{1-3}$ °मग्नो, S' °मग्रो (for °मग्न° found in $I_3$, also see St Tr fn)

3330. [d]) D $P_3$ भवेत् (for भवे).

3332 [c]) All Mss except C read अप्या° (for अव्या°).

3333 [b]) All Mss. read °रणे न [D °रणेन] (for °रण न suggested). —[c]) All Mss. read योग्यताया (for भोगिताया suggested with St Tr.) —[d]) C S' $P_{1-3}$ $I_3$ SA निर्मारणे (for निर्दारणे, also found in SG *sec manu*).

नगराधिकृतो भूत्वा सुज्जौ निर्वापिते पुरा ।
चिरप्ररूढां यो देशस्याऽव्यवस्थां न्यवारयत् ॥३३३४॥

भ्रष्टः क्रयेषु दीन्नारव्यवहारोऽव्यवस्थया ।
निगृह्य तां भ्रंशकारी निर्वितण्डः प्रवर्तितः ॥३३३५॥

परिणीताङ्गनाशीलभ्रंशो गृहपतेरभूत् ।
दण्डप्रवृत्तिर्या तेन सा विचार्य निवारिता ॥३३३६॥

एकान्ततो हितो भूत्वा विशामेवं पुनर्व्यधात् ।
नगराधिक्रियां लब्ध्वा स एव परिपीडनम् ॥३३३७॥

बद्धाभिर्नर्तकीभिश्च परिणीतगृहस्थितौ ।
संप्रयुक्तान् कथ्यमानान् हठेनाऽदण्डयद् बहून् ॥३३३८॥

किं वाऽपराधलेशानां तुषाणामिव चिन्तनैः ।
अद्रोहालोभयोर्भूमिर्न तादृगपरोऽभवत् ॥३३३९॥

भिक्षुमल्लार्जुनौ कालानुवृत्त्याऽऽश्रितवानपि ।
नाऽसौ जहौ स्वामिहितं नतौ तावपि नाऽवधीत् ॥३३४०॥

---

3334. b) St C S′ $P_{1,2}$ $I_3$ सुज्जे (for सुज्जौ).

3335 b) D C °हारो व्य°, $P_2$ °हारे व्य°; $P_3$ °हारव्य° (for °हारोऽव्य°). —c) All Mss. read त भ्रशकार्य° [$P_3$ °र्यो] (for ता भ्रशकारी). —d) D C S′ प्रवर्तते, $P_{1-3}$ $I_3$ SA प्रवर्तत (for प्रवर्तित suggested with St).

3337. bc) $P_{1-3}$ om. —d) All Mss. read °पीडयन् (for °पीडनम् suggested with St).

3338. a) SA $P_{1,3}$ $I_3$ om नर्त with a *lacuna* —b) SA $P_1$ $I_3$ परि···त°; C $P_2$ परिवीत° (for परिणीत°)

3339 a) St $P_{1,3}$ $I_3$ SA किंवो···ले°, D C S′ $P_2$ कि वो भवेद्गले° (for कि वाऽपराधले° suggested with St Tr.).

3340 a) $P_{1-3}$ $I_3$ $SA_5$ भिक्षुम° (for भिक्षुम°). —b) D °त्या श्रित°; C S′ °त्या श्रुत° (for °त्याऽऽश्रित°) —c) C S′ $P_{1-3}$ SA स्वामिहत (for स्वामिहित) —d) St न तौ (for नतौ) St $P_{1-3}$ $I_3$ SA om. तावपि with a *lacuna*.

अक्षीणत्यागगर्हीनस्य विभूतिसमयेऽप्यभूत् ।
संस्कारौपयिकं नाऽस्य पर्याप्तं निधने धनम् ॥३३४१॥

कृतज्ञतायां राज्ञोऽन्यत् पर्याप्तं किमुदीर्यताम् ।
यो जीवित इवाऽऽनीतान् संविभेजेऽनुजीविनः ॥३३४२॥

लोकान्तरातिथिं बिज्जाभिधामुद्दिश्य वल्लभाम् ।
धन्यस्य बिज्जनामाख्यविहारारम्भकारिणः ॥३३४३॥

परलोकं प्रयातस्य निर्माणप्रतिपूरणम् ।
स्थितं व्यवस्थितेः कं च विनियोगं चकार सः ॥३३४४॥

भूभृद्धार्मिकतावातसुकृतोत्सेकवासनैः ।
युद्धैकवृत्तिभिरपि प्रवृत्तं पुण्यकर्मणि ॥३३४५॥

विपक्षाणां सुभिक्षेण तुरुष्कविषयाश्रयात् ।
जन्मभूमेर्वृत्तये यैः क्रौर्यादन्यन्न शिक्षितम् ॥३३४६॥

येऽपि वृत्तिं विरोध्याऽऽजिव्यग्रे सुस्सलभूभुजि ।
कलहावसरेष्वेव कश्मीरेषु प्रपेदिरे ॥३३४७॥

गोत्रे तेषां क्षत्रियाणां जातः कमलियानुजः ।
राजबीजी सञ्जियाख्यः प्रतिष्ठां स्वाख्ययाऽकरोत् ॥३३४८॥

---

3343. c) St conjecturally suggests °नामाढ्य° ( for °नामाख्य° )

3344. b) All Mss read निर्वाण° ( for निर्माण° suggested with St ). After this v युग्मम् .

3345. b) All Mss read °वासवै (for °वासनै suggested with D) —d) All Mss read प्रवृत्ते (for प्रवृत्त suggested with St Tr ).

3346 b) $P_{1-3}$ $I_3$ तुरुष्कामि° ( for तुरुष्कवि° )

वितस्तापुलिने बाणलिङ्गे तेन निवेशिते ।
जायते स्वर्धुनीरोधःसंप्ररूढाविमुक्तधीः ॥३३४९॥

तदीयं च मठं चैव तपोधनविभूषितम् ।
दृष्ट्वा निवर्तते रुद्रलोकालोकनकौतुकम् ॥३३५०॥

लोठनेऽन्यप्रतिष्ठानामधन्यद्रविणार्पणे ।
न तेनाऽद्यतने काले संरब्धं शुद्धबुद्धिना ॥३३५१॥

उदयस्य प्रिया चिन्ताभिधाना कम्पनापतेः ।
पुलिनोर्वीं वितस्ताया विहारेण व्यभूषयत् ॥३३५२॥

प्रासादपञ्चकव्याजात् तद्विहारस्थितः करः ।
उदस्त इव धर्मेण प्रोत्तुङ्गाङ्गुलिपञ्चकः ॥३३५३॥

सांधिविग्रहिको मङ्खकाख्योऽलंकारसोदरः ।
समठस्याऽभवत् प्रष्ठः श्रीकण्ठस्य प्रतिष्ठया ॥३३५४॥

मठाग्रहारदेवौकोजीर्णोद्धारादिकर्मभिः ।
अनुजः सुमना नाम रिल्हणस्याऽऽसदत् तुलाम् ॥३३५५॥

भूतेश्वरे मठं कृत्वा त्रिग्राम्यामप्यपाययत् ।
तोयं कनकवाहिन्या वितस्तायाश्च यः पितॄन् ॥३३५६॥

प्रदेशे कश्यपागाराभिधाने नीलभूः सरित् ।
जिगीषयेव जाह्नव्या यत्र पूर्वां दिशं गता ॥३३५७॥

---

3349 d) All Mss. read °रूढवि° (for °रूढावि° suggested with D). अविमुक्त is an epithet of Benares.

3351. d) All Mss read सरब्धे (for सरब्ध suggested with St).

3355 c) All Mss. read अनुजा (for अनुज suggested with St)

3356 b) SA C $I_3$ °ग्राम्य° (for °ग्राम्या° cf *v* V 97) All Mss. read °पातयत् (for °पाययत् suggested with St)

3357 a) D C S′ $P_{2,3}$ $I_3$ SA प्रदेश्य°, $P_1$ प्रदेश° (for प्रदेशे suggested with St).

उत्ताराय गवादीनां यः सेतुं तत्र बन्धयन्।
निर्ममे निर्मलं कर्म संसारोत्तरणक्षमम् ॥३३५८॥

नगरेऽपि स्वनामाङ्कवृषाङ्कागारकारिणा।
मठो येन कृतोऽभ्रष्टजटाधरघटाश्रयः ॥३३५९॥

मम्मेश्वरं स सौवर्णामलसारं चकार यः।
सोमतीर्थं तथा तोयोद्यानसुद्द्योतितान्तिकम् ॥३३६०॥

अत्र क्षमाभुजो वंशे वंशौन्नत्यधनादिषु।
सासूयत्वादमात्यानां धनप्राणादिहारिणः ॥३३६१॥

क्रुध्यन्नवाऽऽसनाध्यासासूयया वासवोऽपि वा।
प्राभ्रंशयद् दिवो देवो मान्धातारं धराभुजम् ॥३३६२॥

अविप्लुतमतिर्भृत्यान् कृत्यौन्नत्यवतोऽन्वहम्।
दृष्ट्वा ध्यातस्वमाहात्म्यवृद्धिस्तु प्रीयते नृपः ॥३३६३॥

कलशक्ष्मापतेः प्रज्ञोपज्ञं भृत्योऽस्य रिल्हणः।
कुर्वन् स्वर्णातपत्राणां प्रतिष्ठां प्रीतिकार्यभूत् ॥३३६४॥

---

3359 d) $P_1$ °गजा° ( for °घटा° )

3360. a) $P_{1-3}$ मस्मे° (for मम्मे°) —b) $SA_5$ SR $P_{1,2}$ °शार (for °सार). —d) St °नाद्रु°, D C S′ $P_3$ °नसु°, $P_{1,2}$ $I_3$ $SA_5$ SR °नासु° ( for °नसु° suggested )

3361 a) C S′ $P_{1,2}$ $I_3$ SA क्ष्माभूभुजो ( for क्षमाभुजो ) —c) D C S′ $P_{1,3}$ $I_3$ °त्वम°, $P_2$ °त्वस°, S A °त्वमा° (for °त्वाद° suggested with St) $P_3$ °मान्याना (for °मात्याना) —d) C S′ $P_2$ $I_3$ $SA_5$ °धिहा° ( for °दिहा° ).

3362. c) $P_{1,3}$ देवी, $I_3$ SA देवी ( for देवो ).

3364. a) $SA_1$ (before corr.) C $I_3$ °पति (for °पते ). All Mss. read प्राज्ञो° ( for प्रज्ञो° suggested)

स्वर्णपत्रं सुरेश्वर्या शिवयोः समवेतयोः ।
सदीपारात्रिकामत्रं मैत्रीमेति सघण्टिकम् ॥३३६५॥

बन्धोर्हिमाद्रेर्दयितः सुताजामातरौ शिवौ ।
स्वर्णच्छत्रच्छलान्मेरुर्मूर्ध्न्याघ्रातुमुपागतः ॥३३६६॥

उद्दिश्य यं विदधदुद्यममात्मयोनि-
र्दग्धो मयाऽङ्गघटनं दयितेन गौर्याः ।
सिद्धं तदत्र करुणात्मतयेति हेम-
च्छत्रच्छलाद्धरदृशश्चलितोऽग्निरूर्ध्वम् ॥३३६७॥

छत्रं तत्र च रिल्हणेन विहितं रौक्मं महद्रुक्मिणी-
प्रेयोमन्दिरमूर्ध्नि नद्धमधुनाऽदभ्रं परिभ्राजते ।
क्षैव्येण क्षतजास्रपानजनुषा नष्टं ततः स्वामिना
प्राप्तं चक्रमवेक्षितुं सुरुचिरं भास्वानिवाऽभ्यागतः ॥३३६८॥

तीर्थे मन्मथजित्खगध्वजदृढाजयोर्जिताचार्यके
साधाराभरणं क्रियापरिणतिस्वर्णातपत्रं प्रभोः ।
भात्येकस्य शिखाहिफूत्कृतिवलद्गङ्गाब्जरेणूपमं
केशान्तस्थितमेघपार्श्वगतडित्पिण्डाभमन्यस्य च ॥३३६९॥

---

3365. a) All Mss read °पत्रा (for °पत्र suggested with St) —c) All Mss. read °कामत्र° ( for °कामत्र suggested ).

3367. a) All Mss read यद्वि° ( for य वि° suggested ) —c) St SA $P_3$ ···सुमयेति, $P_2$ $I_3$ ···सुमयेति, $P_1$ ···समयेति, D C S′ करुणासुमयेति ( for करुणात्मतयेति suggested).

3368. c) St C S′ $P_1$ $I_3$ °व्येन (for °व्येण) All Mss read °जावपान° ( for °जास्रपान° suggested ) —d) $P_2$ $SA_5$ SR चक्रमिवे° ( for चक्रमवे° ) St C S′ $P_{1,2}$ स्वरुचिर ( for सुरुचिर )

3369 b) St °णाति स्व° (for °णातिस्व°) —c) St $P_1$ $I_3$ SA °णूपग ( for °णूपम ).

सौवर्णद्रुहिणाण्डकर्परपुटे संसूत्रिता च्छत्रक-
व्याकोशस्य समुद्गकप्रतिकृतौ दीर्घार्घितार्घे घने ।
सङ्गेनेन्दुकिरीटकैटभरिपुश्यामासितालंक्रिया
सद्रत्नाकरयोः पिधानकरणं स्वर्णातपत्रं गतम् ॥३३७०॥

तं लोहरमहीपालमन्वजायन्त भूभुजः ।
रड्डादेव्या गुणोदाराश्चत्वारश्चतुराः सुताः ॥३३७१॥

गुल्हणेनाऽपरादित्यो राघवेणेव लक्ष्मणः ।
अभिन्नभावः संवृद्धिं वर्तते लोहरे श्रयन् ॥३३७२॥

ललितादित्यदेवेन जयापीडो हि दारकः ।
भरतेनेव शत्रुघ्नः पाल्यमानः प्रवर्धते ॥३३७३॥

पार्थिवाहस्कराच्चारुनमस्काराद् यशस्करः ।
पञ्चमः क्षितिभृद्धर्म्यो बालातप इवोदितः ॥३३७४॥

चपलैः शैशवाच्छुद्धानुभावत्वात् ससौष्ठवैः ।
लडितैर्ललितादित्यो भित्तीरप्यार्द्रयत्यहो ॥३३७५॥

दत्तरक्षाञ्जनं ताम्राधरं गौरं तदाननम् ।
सबालातपभृङ्गाङ्कस्वर्णपङ्केरुहायते ॥३३७६॥

---

3370 a) All Mss read °पुरे (for °पुटे suggested with D). D °त्रिताच्छ° (for °त्रिता च्छ°). —b) St SA $P_{1,3}$ $I_3$ °र्घित…घने, S′ °र्चितार्घे घने, $P_2$ °र्घितार्घघने (for °र्घितार्घे घने) —d) St D $P_2$ $I_3$ C Ś °करणि, $P_1$ °करिणा (for °करण found in $P_3$).

3371. d) $P_{1,3}$ $I_3$ SA °तुरस्सुता ( for °तुरा सुता )

3373 a) $P_2$ $I_3$ SA °तालि° ( for °तादि° ). —d) SA पालमान. (for पाल्यमान ). All Mss. read प्रवर्तते ( for प्रवर्धते suggested with D )

3375 a) St SA $P_{1,2}$ $I_3$ C °च्छूद्धा° (for °च्छुद्धा°) —d) S′ चि·· र°, C $P_2$ चितीर° (for भित्तीर°)

3376 d) $P_{1,2}$ $I_3$ SA °भृङ्गाङ्का°; C S′ °भङ्गाङ्क° (for °भृङ्गाङ्क°)

आलापास्तस्य माहात्म्यगर्भा बाल्यास्फुटा अपि ।
अमृतार्द्रा इवोद्गारा मथ्यमानस्य वारिधेः ॥३३७७॥

महाभिजनसंजातो राजसूनुः स शैशवे ।
अभिधत्तेऽनुभावेन भव्येनाऽऽगामि जृम्भितम् ॥३३७८॥

अत्यर्थमण्डनशिखण्डिशिखोऽपि तोय-
स्पर्शासहाश्रितकलापिकलापभङ्ग्या ।
वार्पी निपीतसलिलो वलितं प्रयाति
चेष्टोक्तभावमहिमा वरवर्णिभावः ॥३३७९॥

चतस्रो मेनिला राजलक्ष्मी पद्मश्रिया समम् ।
संजाताः कमला चाऽस्य कन्याः सत्कृत्यवृत्तयः ॥३३८०॥

विनोदलीलोद्यानैस्तैर्नित्यकान्तैरपत्यकैः ।
विद्योतेतेऽनवद्यौ तौ प्रावृट्पुष्पाकराविव ॥३३८१॥

तीर्थायतनपूतेऽस्मिन् मण्डलेऽखण्डितैर्व्ययैः ।
रड्डादेव्या एव याता भाग्यभावं विभूतयः ॥३३८२॥

---

3377 b) All Mss read बालास्फु° (for बाल्यास्फु° suggested with St D) —c) D (before suggestion) °तार्द्रा भवोच्चारा; St °तार्द्रा इवोच्चारा, $P_{1,3}$ °ता · ···; C S′ °तप्रभवश्रद्धा, $P_2$ °तान्प्रभावोच्चक्ष°; $I_3$ °तांद्र इवोश्चारा (for °तार्द्रा इवोद्गारा suggested with D ).

3379. a) St $P_3$ $I_3$ अत्यक्त°, $P_1$ अत्यक्तु° (for अत्यर्थ°). —c) C S′ $P_2$ वापी° (for वापी).

3380 a) $I_3$ SA मैनिला ( for मेनिला, cf. *vv.* VIII. 3394, 3397 ) —c) St (before suggestion) D C S′ SA $P_{1,2}$ $I_3$ सजाता (for सजाताः found in $P_3$ ).

3381 c) SA $P_{1,3}$ $I_3$ विद्योतया°, D C S′ $P_2$ द्योतिताव° ( for विद्योतेते° suggested with St).

कृतानुयात्रा सा देवयात्रासु क्षितिपाङ्गना ।
राजलक्ष्मीरिवाऽऽभाति राजसामन्तमन्त्रिभिः ॥३३८३॥

सतीदेशे तीर्थसार्थास्त्यजन्त्यस्या निमज्जने ।
स्नानासक्तसतीमूर्तिस्पर्शनौत्सुक्यमञ्जसा ॥३३८४॥

चित्रे कालेऽत्र यात्रासु द्रष्टुं वृष्ट्युत्तरैः सदा ।
यत्प्रावृडिव राज्ञीयं जीमूतैरनुगम्यते ॥३३८५॥

सा पार्थिवेषु तीर्थेषु स्नानाय प्रस्थिता ध्रुवम् ।
दिव्यैर्वर्षमिषात् तीर्थैः प्राद्दश्यत तदीर्ष्यया ॥३३८६॥

अभ्रंलिहान्न च गिरीन्न च कूलंकषा नदीः ।
मृद्वङ्गी दुर्गमा मार्गे तीर्थौत्सुक्येन वेत्त्यसौ ॥३३८७॥

सुबह्वीभिः प्रतिष्ठाभिर्जीर्णोद्धारैश्च धीरया ।
तया चित्रं चतुरया पङ्गुर्दिशा विलङ्घिता ॥३३८८॥

अद्याऽपि विक्षरत्क्षीरार्णवकान्तिच्छटाच्छलात् ।
यो भातीघ सुधासूतिसितश्वेताश्मनिर्गतः ॥३३८९॥

उपमन्योरुदन्याया दारिद्र्योपद्रवापहः ।
रुद्रो रुद्रेश्वरो नाम्ना श्रीमान् कश्मीरभूषणम् ॥३३९०॥

जगत्सौन्दर्यसारः स सस्वर्णामलसारकः ।
शान्तावसादप्रासादोद्धारश्च विहितस्तया ॥३३९१॥

---

3383. a) St C S′ $P_{1,2}$ दैव°, $I_3$ चैव (for देव°) —b) $P_3$ $I_3$ SA °यात्रास्वक्षि° (for °यात्रासु क्षि°).

3384. सतीदेश- is an epithet of Kashmir, cf. *v* I 25

3385. c) St SA D $P_{1,3}$ $I_3$ om राज्ञीय with a *lacuna* C S′ $P_2$ तैश्चेय (for राज्ञीय suggested).

3386 a) $P_2$ C S′ स (for सा) $P_1$ मूर्तेषु (for तीर्थेषु) —b) C S′ $P_2$ प्रस्थितो, SA $I_3$ प्रस्थित (for प्रस्थिता) —d) All Mss. read प्राद्दश्येत (for प्राद्दश्यत suggested)

3391 a) All Mss read °सार [$P_2$ °सारे] (for °सार suggested).

सत्त्वानामिव भृत्यानां कोपौर्वविकृते नृपे ।
उदन्वतीव शरणं सिन्धुर्हैमवतीव सा ॥३३९२॥

स्थिरप्रसादे भूपाले निग्रहानुग्रहौ क्षणात् ।
भूभुजामपि संवृत्तावविच्छिन्नौ तदिच्छया ॥३३९३॥

सोमपालात्मजो भूभृद्भूपालः प्रापितस्तया ।
मानिन्या मेनिलादेव्या विवाहेन महार्हताम् ॥३३९४॥

उत्पत्तिभूमिसुलभानुभवो न भूम्ना
कस्याऽप्यहो व्यभिचरत्यनुभावभावः ।
तेजस्तमोविलुठनव्रतमुष्णभानो-
श्छेदं तदुत्थमकरोत् तमसोऽपि चक्रम् ॥३३९५॥

भुवनाद्भुतसाम्राज्यमार्जने भूभुजोऽभजत् ।
प्रातिभाव्यं दृढं रत्नाक्रान्तसन्मण्डलावनिः ॥३३९६॥

ऊढायां मेनिलादेव्यां परिणेतुरभूदपि ।
पिता वैमत्यमुत्सृज्य निर्व्याजं राज्यदायकः ॥३३९७॥

राज्ञः प्राजिधरस्याऽऽजौ तरसा भूभुजोऽनुजः ।
वैरिभिर्निहतस्याऽग्रे वैरसंशोधनोद्यतः ॥३३९८॥

रड्डा शरणमेत्योच्चमानौत्कट्यो घटोत्कच ।
भेजे राज्यश्रिय प्राप्य चित्रं राज्यश्रियं पराम् ॥३३९९॥

---

3392 c) $I_3$ SA सरण (for शरण).

3393. d) All Mss read °च्छिन्नस्त° ( for °च्छिन्नौ त° suggested with St D)

3395. a) $P_2$ $I_3$ SA उत्पत्तिर्भू° (for उत्पत्तिभू°) $P_3$ °भावे (for °भवो). —d) $P_{2,3}$ तदुक्त°, $P_1$ तमुक्त° (for तदुत्थ°).

3396 b) All Mss read °मार्जनो (for °मार्जने suggested with St). All Mss read भूभुजाभवत् (for भूभुजोऽभजत् suggested)

3397 a) C S′ $P_{1-3}$ $I_3$ रूढाया (for ऊढाया).

3398. a) D C S′ राज्ञा (for राज्ञ )

3399 ab) $P_{1,3}$ $I_3$ °मेत्योच्च मानो° [SA °नौ°]; D C S′ $P_2$ °मेत्योच्चैर्मानो° ( for °मत्योच्चमानौ° suggested with St ) —b) $P_{2,3}$ °कटो (for °कट्यो). After this *v* कुलकम्

कृतसाहायकोऽमात्यै राज्ञः सप्रज्जिमङ्गदम् ।
राज्यात् प्राभ्रंशयद् भ्रातृद्रुहं पञ्चवट नृपम् ॥३४००॥

अलङ्घ्यत् तत्प्रभावात् स्फारदानाम्बुनिर्भरात् ।
सरितं खड्गवल्लीं च कृष्णा विद्वेषिगोचराम् ॥३४०१॥

द्वितीयस्योरशाभर्तुरकीर्तिं निर्जयेऽसृजत् ।
देवप्रभावाद् योधोऽग्रमत्युग्रपुरमग्रहीत् ॥३४०२॥

सितोष्णवारणशशिद्योतकल्लोलितास्ततः ।
बहवो वाहिनीनाथाः प्रथामित्थं प्रपेदिरे ॥३४०३॥

समाद्वाविंशती राज्यावाप्तेः प्राग्भूभुजो गताः ।
तावत्योऽवाप्तराज्यस्य पञ्चविंशतिवत्सरे ॥३४०४॥

इयद्दृष्टमनन्यत्र प्रजापुण्यैर्महीभुजः ।
परिपाकमनोज्ञत्वं स्थेयात् कल्पातिगाः समाः ॥३४०५॥

अम्भोऽपि प्रवहत्स्वभावमशनैराश्यानमश्मायते
ग्रावाम्भः स्रवति द्रवत्वमुदितोद्रेकेषु चाऽवेयुषः ।
कालस्याऽस्खलितप्रभावरभसं भाति प्रभुत्वेऽद्भुते
कस्याऽमुत्र विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः ॥३४०६॥

---

3400 c) All Mss read राज्य ( for राज्यात् suggested with St). —d) All Mss read °वटो (for °वट suggested with St).

3402. b) D $P_{1-3}$ C S' SA °कीर्ति (for °कीर्तिं) St SA $P_{2,3}$ $I_3$ °निजया°; D C S' निर्जया° (for निर्जये° suggested with St Tr ). —c) All Mss read योधा° (for योधो° suggested with St. Tr ).

3403. a) All Mss read शीतोष्ण° [C °तोष्म°] (for सितोष्ण° suggested with D) —b) $P_2$ °स्तदा (for °स्तत ).

3404. b) St गता (for गता ). —c) All Mss. read तावत्येवा° (for तावत्योऽवा° suggested)

3405. d) All Mss. read स्थेया. (for स्थेयात् suggested).

3406. a) According to St. Tr. the meaning of अशनै is doubtful, but it may be considered as a negative compound of शनै.. —b) D $P_{1-3}$ $I_3$ SA ग्रावोम्भ (for ग्रावाम्भ ).

( अथ ग्रन्थादित कालानुसारी राजनामसंग्रह )

प्रयाते ऽ्यधिकेऽध्यर्धसमाषट्कशते कलेः ।
कश्मीरेष्वास्त गोनन्द पार्थाना सेवया नृपः ॥३४०७॥

सूनुर्दामोदरोऽस्याऽथ तस्य पत्नी यशोवती ।
गोनन्दोऽन्यस्तत्सुतोऽपि ततोऽतीत्य महीपतीन् ॥३४०८॥

पञ्चत्रिंशतमज्ञातानुग्रहाभिजनाभिधान् ।
राजाऽभवल्लवो नाम सूनुस्तस्य कुशस्ततः ॥३४०९॥

द्वौ खगेन्द्रसुरेन्द्राख्यौ पुत्रपौत्रावमुष्य तु ।
गोधरोऽथाऽन्यकुलज· सुवर्णाख्यस्तदात्मजः ॥३४१०॥

तज्जन्मा जनकोऽप्यासीत् सूनुः शच्याः शचीनर ।
अथाऽशोकोऽभवद् भूभृद् राज्ञोऽस्य प्रपितृव्यजः ॥३४११॥

तज्ज्ञो जलौकाः संदिग्धवंशो दामोदरस्ततः ।
तुल्यं त्रयोऽथ हुष्काद्यास्तुरुष्काभिजनोद्भवाः ॥३४१२॥

---

3407. a) D $I_3$ अधि° (for ऽ्यधि°). All Mss read °प्यर्ध° (for °ऽध्यर्ध° suggested with St Tr, cf *v*. I 51) From here onwards D numbers the *vv* separately

3408 a) $P_2$ $I_3$ SA °मोदरस्याथ, $P_3$ °मोदरश्चास्य (for °मोदरोऽस्याऽथ). —b) All Mss. read °मती (for °वती, cf *v* I 70). —d) SA °पती, $P_3$ °पति, $I_3$ °पते (for °पतीन्)

3409. b) St $P_{1,2}$ $I_3$ °भिधाम्, $P_3$ °भिधा (for °भिधान्). —c) $P_{1,2}$ $I_3$ SA राजा वल्लभको (for राजाऽभवल्लवो) —d) C S′ कुशेशय (for कुशस्तत).

3410 *bcd* of this *v* and the following *v* are no longer found in SA as the upper portion of the relevent folio has broken off —d) SG *prima manu* $P_{1,3}$ SR °र्णाक्तस्तदा°, $P_2$ °र्णाक्षस्तदा° (for °र्णाख्यस्तदा°)

3412 a) D $P_1$ तज्ज्ञौ (for तज्ज्ञो) —b) C S′ $P_2$ $I_3$ SR °वशे (for °वशो).

अभिमन्युस्तृतीयोऽथ गोनन्दोऽथ विभीषण॰ ।
राजेन्द्रजिद्रावणश्च पुत्राद्यः क्रमशोऽभवत् ॥३४१३॥

अन्यो विभीषणस्तस्मान्नरनामा नराधिपः ।
तस्य पुत्रोऽभवत् सिद्ध उत्पलाक्षश्च तत्सुतः ॥३४१४॥

पश्चात्ततो हिरण्याक्षो हिरण्यकुल इत्यभूत् ॥३४१५॥

राजा वसुकुलस्तस्य सूनुः ख्यातस्त्रिकोटिहा ।
श्रीमिहिरकुलो राजा बकाख्यस्तदनन्तरम् ॥३४१६॥

क्षितिनन्दस्ततो राजा वसुनन्दस्तदात्मजः ।
नरोऽन्योऽक्षस्ततो गोपादित्यगोकर्णकौ क्रमात् ॥३४१७॥

---

3413. a) D C S′ °तीयश्च (for °तीयोऽथ) —b) St $P_{1-3}$ $I_3$ °न्दोस्य; C S′ °र्दोऽथ (for °न्दोऽथ). —c) D C S′ $P_2$ $I_3$ ताविन्द्र° (for राजेन्द्र°). —d) St $P_{1,3}$ $I_3$ ॰ द्य, D C S′ $P_2$ पितापुत्रौ (for पुत्राद्य. suggested) D C S′ $P_2$ क्रमान्नृपौ (for क्रमशोऽभवत्)

3414 a) D S′ विभी° (for विभी°) —a-c) All Mss. except $P_3$ om. from स्तस्मान्न to [अ] भवत् without a *lacuna* —d) $P_1$ तत्पला° (for उत्पला°). $P_3$ *sec manu* D $P_{1,2}$ SA $I_3$ °लाख्य° (for °लाक्ष°). $P_3$ *sec. manu* transposes उत्पलाख्यश्च and तत्सुत॰ $P_3$ *prima manu* St SA $P_1$ तदनु [$I_3$ °नु] (for तत्सुत)

3415. St 3414 *cd* ; D 8 *cd* —a) St °ण्याक्ष°, SA $P_1$ $I_3$ °ण्याख्ये; $P_2$ °ण्याख्यो (for °ण्याक्षो) —b) St °कुलयोरभूत्, $P_{1,2}$ $I_3$ °कुशयोरभूत्; C S′ °कुलकस्तत (for °कुल इत्यभूत्).

3416 cd) D $P_{1-3}$ $I_3$ om with a *lacuna* St om. without a *lacuna* and misconstructs this *v* and the following 5 *vv*.

3417 a) D °न्द्रो बकात्मजो, SA °न्दो बकात्मजाद्, St $P_{1-3}$ $I_3$ °न्दो बकात्तज्जाद् (for °न्दस्ततो राजा) —cd) St $P_{1,2}$ $I_3$ °तस्तस्माद्गोप्ता गोकर्णको नृपात् (for °तो गोपादित्यगोकर्णकौ क्रमात्°) $P_3$ subst. नरोन्योक्षस्ततस्तस्माद्गोपादित्योभवन्नृप

तस्मान्नरेन्द्रादित्योऽभूत् तत्पुत्रोऽन्धयुधिष्ठिर ।
तस्मिन् प्रभ्रंशिते भृत्यैरन्याभिजनसंभवः ॥३४१८॥

भूपः प्रतापादित्योऽभूज्जलौकोऽपि तदात्मजः ।
तुञ्जीने निस्सुते तस्मिन् विजयोऽन्यकुलोद्भवः ॥३४१९॥

जयेन्द्रे तत्सुतेऽपुत्रे सचिवः संधिमानभूत् ।
युधिष्ठिरस्य पौत्रेण गोपादित्यात्मजन्मना ॥३४२०॥

श्रीमेघवाहनेनाऽथ गोनन्दस्योदितं कुले ।
ततः प्रवरसेनोऽभूद् भूपः कश्मीरमण्डले ॥३४२१॥

तत्सूनुश्च हिरण्योऽभूत् पालयन् क्षितिमण्डलम् ।
मातृगुप्तोऽभवद् दत्तराज्यस्तेन शकारिणा ॥३४२२॥

ततः प्रवरसेनोऽन्यस्तोरमाणात्मजः क्षितिम् ।
लेभे हिरण्यभ्रातृव्यस्तस्य पुत्रो युधिष्ठिर ॥३४२३॥

---

3418 [ab]) $P_3$ subst अभूद्गोकर्णकस्तस्मान्नरेन्द्रादित्य इत्यभूत् and inserts two additional Pāda-s : ततो बभूव नृपति· सूनुरन्धयुधिष्ठिर·. —[b]) St $P_{1,2}$ $I_3$ सूनुर° ( for तत्पुत्रो° ) —[c]) C S′ $P_2$ $I_3$ तस्य प्रभ्रशितो, St $P_1$ $I_3$ तस्य प्राभ्रशितो ( for तस्मिन् प्रभ्रशिते )

3419 [c]) $P_{1-3}$ $I_3$ SA तुञ्जने (for तुञ्जीने) C S′ [अ] न्यसुत (for निस्सुते). D C S′ $P_{1-3}$ $I_3$ तज्जो, St तज्जे (for तस्मिन् suggested).

3420. [a]) St $P_{1,2}$ $I_3$ जयेन्द्रेस्य सुतेपुत्रे, D C S′ जयेन्द्रस्तत्सुतोपुत्र·, $P_3$ तत्सुतस्य जयेन्द्रस्य ( for जयेन्द्रे तत्सुतेऽपुत्रे suggested ). —[d]) St C S′ $P_{1,2}$ $I_3$ SA भूपा° (for गोपा°).

3421 [b]) C S′ गौनर्देभ्यु°, St गौनन्देभ्यु°; SA $P_1$ $I_3$ गोनन्दाभ्यु° ( for गोनन्दस्यो° ). —[cd]) St $P_1$ $I_3$ om without a *lacuna*. —[d]) $P_3$ subst. हिरन्योपि ततोऽभवत् .

3422. St with a *lacuna* and SA $P_1$ $I_3$ without a *lacuna* om this *v*. —[ab]) $P_2$ om $P_3$ subst विक्रमादित्यभृत्योभून्मातृगुप्तो महीपति .

3423 Portions between तोरमाणात्मज of this *v* and रणादित्यस्य of *v* 3425 are missing in SA —[d]) SG $I_3$ पुत्राद्युधिष्ठिरात्, SR *prima manu* पुत्रो· ·धि°, $P_1$ पुत्रो युधिष्ठिरात् (for पुत्रो युधिष्ठिर ).

ततो नरेन्द्रादित्यश्च रणादित्यश्च भूपतिः ।
क्रमाद्भूतां तत्पुत्रो विक्रमादित्यभूपतिः ॥३४२४॥

बालादित्यश्चोदभवद् रणादित्यस्य नन्दनः ।
बालादित्यस्य जामाता ततो दुर्लभवर्धन ॥३४२५॥

सूनुर्दुर्लभकस्तस्य चन्द्रापीडोऽभवत् ततः ।
तारापीडोऽनुजन्माऽस्य मुक्तापीडोऽस्य चाऽनुजः ॥३४२६॥

भूपावास्तां कुवलयापीडो द्वैमातुरोऽस्य च ।
वज्रादित्य· सुतो राज्ञो मुक्तापीडस्य तत्सुतौ ॥३४२७॥

पृथिव्यापीडसंग्रामापीडावास्तां महीभुजौ ।
जयापीडोऽस्य मन्त्री च जज्जः पुत्रावपि क्रमात् ॥३४२८॥

ललितापीडसग्रामापीडौ ज्येष्ठात्मजस्ततः ।
श्रीचिप्पटजयापीड कल्यपाल्युद्भवोऽभवत् ॥३४२९॥

अभिचारेण तं हत्वा सांमत्यादितरेतरम् ।
उत्पलाद्यैरसंप्राप्तराज्यैस्तन्मातुलैः कृतः ॥३४३०॥

भ्रातुः पुत्रोऽजितापीडो जयापीडस्य तत्पदे ।
अनङ्गापीडनामा च संग्रामापीडजस्ततः ॥३४३१॥

---

3424. a) $P_{1,3}$ $I_3$ जातो (for ततो). —cd) SG $P_{1,3}$ $I_3$ तद्वच्च विक्रमादित्य उर्वरीम् (for तत्पुत्रो विक्रमादित्यभूपति )

3425. $P_1$ om *ab* —a) SG $P_{2,3}$ °चोदवहद् (for °चोदभवत् ) —b) D C S′ °विक्रमादित्यन°, SA $I_3$ °त्यश्च न° (for रणादित्यस्य न°)

3426. c) St $P_{1,2}$ $I_3$ °जन्मा च (for °जन्माऽस्य) —d) $P_3$ subst °ललितादित्य एव च After मुक्ता three syllables are illegible in SA $P_{1,2}$ $I_3$ SR SG °पीडस्य (for °पीडोऽस्य )

3428. b) St $I_3$ $P_{1,3}$ °वनु नृपोभवत् ( for °वास्ता महीभुजौ ). —c) $P_3$ °पीडस्य (for °पीडोऽस्य) —d) SA जज्जपु° (for जज्ज· पु°).

3429. b) SA $P_1$ $I_3$ °पीडज्ये° ( for °पीडौ ज्ये° ) —c) D $I_3$ $P_1$ °चिप्यट°, C S′ °चिप्यट°, $P_2$ °चिम्यट°, $P_3$ °चिप्पिट° (for °चिप्पट°) —d) D C S′ $P_1$ $I_3$ कल्प°, $P_2$ कन्य° (for कल्य°)

3430. b) SA $P_1$ $I_3$ सम्मत्या° ( for साम्मत्या°)

तमुत्पाट्योत्पलापीडो योऽजितापीडनन्दनः ।
अवन्तिवर्मा शूरेण तं निवार्याऽथ मन्त्रिणा ॥३४३२॥

नप्तोत्पलस्य विदधे साम्राज्ये सुखवर्मजः ।
शूरः शङ्करवर्मा स गोपालस्तस्य चाऽऽत्मजः ॥३४३३॥

रथ्यागृहीतः प्राभूच्च तद्भ्राता संकटाभिधः ।
सुगन्धाख्या तयोर्माता तां विनाश्याऽथ भूभुजम् ॥३४३४॥

शूरवर्मप्रणप्तारं पार्थं तन्त्रिपदातयः ।
चक्रुर्निर्जितवर्माणं ततस्तस्य च तत्क्रमात् ॥३४३५॥

चक्रवर्मा शूरवर्मा चेति निर्जितवर्मजः ।
विहिता बहुशो राज्ये तस्तम्भे शम्भुवर्धनः ॥३४३६॥

तदन्तरे लब्धराज्ये मन्त्री व्यापाद्य तं नृपम् ।
चक्रवर्मण्यतीतेऽथ पापी पार्थात्मजः क्रमात् ॥३४३७॥

उन्मत्तावन्तिवर्माऽऽसीत् तत्पुत्रे शूरवर्मणि ।
राज्याद् भ्रष्टे द्विजैश्चक्रे राज्ये मन्त्री यशस्कर ॥३४३८॥

प्रपितृव्यात्मजस्तस्य वर्णटस्तनयोऽनु तम् ।
राज्ये वक्राङ्घ्रिसङ्ग्रामस्तस्थौ निष्पाट्य तं ततः ॥३४३९॥

---

3432 b) All Mss read °स्वाजिता° (for योऽजिता° suggested). —c) The text of SA ends with अवन्तिवर्मा, the last leaf of the Ms being lost P1 I3 भूरेण (for शूरेण) —d) I3 मन्त्रिण. (for मन्त्रिणा)

3433 a) I3 om विदधे. —cd) SR SG *prima manu* om. —c) D S' सूनु, P3 नृप (for शूर) P3 °र्माथ (for °र्मा स).

3434. d) D त (for ता) SR SG निनाश्याथ [P1 °नाशा°], I3 निनाद्याथ (for विनाश्याऽथ) P1 I3 °भुजा; P3 °भुजा (for °भुजम्).

3435. a) P1–3 I3 D °प्रनप्ता° (for °प्रणप्ता°). —b) D C S' P2 पङ्गु (for पार्थं) —d) D S' C P2 subst. तत पार्थस्तत क्रमात्.

3436 D C S' om from *v* 3436 *c* to 3437 *b* without a *lacuna*. —d) SG om तस्त with a *lacuna*.

अमात्यः पर्वगुप्ताख्यो राज्यं द्रोहेण लब्धवान् ।
क्षेमगुप्तः सुतोऽस्याऽऽसीदभिमन्यौ तदात्मजे ॥३४४०॥

शान्ते मात्रा पाल्यमाने नन्दिगुप्ते च तत्सुते ।
ततस्त्रिभुवने भीमगुप्ते च क्रूरचेष्टया ॥३४४१॥

पौत्रे तयैव निहते स्वयं दिद्दाख्यया कृते ।
राज्ये संग्रामराजोऽपि भ्रातृव्योऽन्ते नृपः कृतः ॥३४४२॥

हरिराजानन्तदेवावास्तां तस्याऽऽत्मजौ ततः ।
कलशोऽनन्ततनयः क्रमाद् भूपौ तदात्मजौ ॥३४४३॥

उभावुत्कर्षहर्षाख्यावपि निष्पाद्य भूपतिम् ।
हर्षदेवं तमुद्दामविक्रमोऽनन्यवंशजः ॥३४४४॥

भ्रातुः पुत्रस्य दिद्दाया जस्सराजस्य नप्तृतः ।
मल्लाभिधानादुद्भूतो भूपतामुच्चलोऽभजत् ॥३४४५॥

द्रोहेण तं हतवतां भृत्यानामग्रतस्ततः ।
शङ्कराजान्यनामाऽभूद् रड्डाख्यः क्षणिको नृपः ॥३४४६॥

गर्गेण निहते तस्मिन् सल्हो द्वैमातुरोऽप्यभूत् ।
तस्योच्चलमहीभर्तुर्भ्राता निर्बध्य तं बली ॥३४४७॥

सुस्सलाख्योऽग्रहीद् राज्यं माल्हिरुच्चलसोदरः ।
विरक्तैः पातिते तस्मिन् राज्याद् भृत्यैर्नृपः कृतः ॥३४४८॥

---

3440 c) SR *prima manu* SG $P_{1,2}$ $I_3$ सोमगुप्त (for क्षेमगुप्त)

3442. a) C $I_3$ $P_3$ SR SG निहिते (for निहते). —b) St $P_{1,3}$ $I_3$ कृत (for कृते) —c) St राज्य, $P_2$ राज्ञे (for राज्ये). C S′ $P_2$ °देवोऽपि (for °राजोऽपि)

3447 b) SR *prima manu* D C S′ $P_{1-3}$ SG मल्लो, SR *sec manu* सल्लो (for सल्हो).

षण्मासान् हर्षभूभर्तृनप्ता भिक्षाचराभिधः ।
पुनर्निर्वास्य तं प्राप्तराज्ये सुस्सलभूभृति ॥३४४९॥

क्रमाल्लवन्यैर्विश्वस्तैर्द्वैराज्योद्वेजिते हते ।
लवन्यान्निखिलांस्तं च हत्वा भिक्षाचरं नृपम् ॥३४५०॥

सुतः सुस्सलभूभर्तुः संप्रत्यप्रतिमक्षमः ।
नन्दयन् मेदिनीमास्ते जयसिंहो महीपतिः ॥३४५१॥

गोदावरी सरिदिवोत्तुमुलैस्तरङ्गै-
र्वक्त्रैः स्फुटं सपदि सप्तभिरापतन्ती ।
श्रीकान्तिराजविपुलाभिजनाब्धिमध्यं
विश्रान्तये विशति राजतरङ्गिणीयम् ॥३४५२॥

इति श्रीमहाकविश्रीकल्हणकृतायां राजतरङ्गिण्यामष्टमस्तरङ्गः ॥
समाप्तेयं राजतरङ्गिणीकृतिः श्रीमहामात्यचण्पकप्रभु-
सूनोर्महाकवेः कल्हणस्य ॥



---

3450 ab) These two Pāda-s are repeated in $P_3$. —c) $P_1$ $I_3$ SG °लास्ते च, C S′ °लास्ताश्च (for °लांस्त च)

3451. After this v $P_3$ adds इति श्रीचपकप्रभुसूनो. कल्हणस्य कृतौ राजतरङ्गिण्यामष्टमस्तरङ्ग

3452 b) D C S′ $P_{1,3}$ वक्रै, $P_1$ $I_3$ चक्रै (for वक्त्रै). —c) D C S′ $P_{1-3}$ SR SG श्रीकान्त° (for श्रीकान्ति°)

Colophon D SG om completely $I_3$ subst काश्मीरिकमहामात्य-चम्पकप्रभुसूनो कल्हणस्य कवे कृतौ राजतरङ्गिण्या अष्टमस्तरङ्ग समाप्त ॥ समप्तश्चाय राजतरङ्गिन्याम् ॥ $P_3$ °चण्पकप्रभुसूनो कल्हणस्य कृतो (for °महाकविश्रीकल्हणकृताया) $P_1$ समाप्तोय, $P_2$ समाप्ते (for समाप्तेय). C S′ °चम्पक°, $P_1$ °चडक° (for °चण्पक°). $P_2$ reads °तरङ्गिण्या: for °तरङ्गिणी° and om the rest C S′ put समाप्तेय राजतरङ्गिणी after कल्हणस्य

Post-Colophon · $P_1$ समाप्त सवत्; $P_2$ शुभम्; $P_3$ राजान ६, श्लोका: ३७८०, आदिता राजान १०३, गन्था ८१६६, $I_3$ शुभमस्तु, S′ शुभ हरि ओम् सम्वत् १९४८ चैत्र प्र. २५, कुल श्लोका ८७००.

# Chart of Editorial Divergences*

( St=Stein , D=Durgāprasada , V=V.V R I. )

**Taraṅga I**

| | St | D | V |
|---|---|---|---|
| 3 c) | आयाति | आयाति | याति |
| 18 a) | पूर्वमिहिरो | पद्ममिहिरो | पद्ममिहिरो |
| 20 c) | द्वापंचाशतौ | द्वापचाशतो | द्वापंचाशतो |
| 22 b) | सुचेतसः | सचेतसः | सुचेतस |
| 33 b) | धत्ते | दत्ते | धत्ते |
| 40 b) | स्वस्थतीरा° | सुस्थतीरा° | सुस्थतीरा° |
| 41 a) | सन्तापार्हताम् | सन्तापासहता | सन्तापार्हताम् |
| 44 b) | °भवान् | °भवात् | °भवात् |
| 45 b) | कुकृतै | कुकृत्यै | कुकृत्यै |
| 50 d) | विवर्जितान् | विवर्जितात् | विवर्जितात् |
| 53 b) | शरदाम् | शरदा | शरदाम् |
| 57 b) | °दुगूल्या | °दुगूल्या | °दुकूल्या |
| 62 d) | किं जयस्रक् | कि जयस्रक् | वरणस्रक् |
| 63 c) | काश्मीरिको | काश्मीरिको | काश्मीरको |
| 68 b) | निघ्नति | विघ्न्यते | विघ्न्यते |
| 72 a) | कश्मीरा | काश्मीरा. | कश्मीरा |
| 72 b) | हराशज | शिवाशज· | शिवांशज. |
| 84 c) | °दुगूलायाः | °दुगूलाया. | °दुकूलाया. |
| 93 b) | सोरका° | सौरका° | सोरका° |
| 94 d) | सौरसा° | सोरसा° | सौरसा° |
| 96 a) | गोधरा° | गोधरो° | गोधरा° |
| 117 a) | कन्य° | कान्य° | कान्य° |
| 118 a) | अप्राप्ते | अप्राप्ते | अप्राप्तम् |

---

* Cf Vol. I, Preface, p. xviii, 14.

| | St | D | V |
|---|---|---|---|
| 139 b) | नेष्यन्ति | नेच्छन्ति | नेच्छन्ति |
| 139 d) | विश्वधर° | विश्ववर° | विश्वोद्वर° |
| 142 c) | दत्त्वा स्व° | दत्त्वाम्ब° | दत्त्वा स्व° |
| 144 c) | °सत्त्वे° | °सत्ये° | °सत्त्वै° |
| 147 a) | श्रमे | श्रमम् | श्रमम् |
| 147 d) | असन्ध° | अबन्ध° | असन्ध° |
| 148 c) | क्षमा | क्षमा | समं |
| 149 d) | नि स्पन्द° | नि स्पन्द° | निष्पन्द° |
| 151 d) | स्वावराध° | सोवरोध° | सोऽवरोध° |
| 164 a) | दृष्ट्वा | स्पृष्ट्वा | दृष्ट्वा |
| 166 d) | ते | च | ते |
| 172 b) | परनिर्वृत | परनिर्वृत | परिनिर्वृते |
| 175 c) | परार्घ्य° | परार्घ्य° | परार्घ्य° |
| 176 ab) | लब्ध्वा देशात् | लब्ध्वादेशम् | लब्ध्वाऽऽदेशम् |
| 181 b) | °विधायिन. | °विधायिनाम् | °विधायिनाम् |
| 181 c) | अनश्यन् | अनशन् | अनशन् |
| 185 ab) | तृतीयो गोनन्दः प्राप्तो राज्ये तदन्तरे | तृतीयगोनन्द प्राप्तराज्यस्तदन्तरे | तृतीयगोनन्द प्राप्तराज्यस्तदन्तरे |
| 204 a) | कदाचित्तस्य | कदाचिदथ | कदाचित्तस्य |
| 220 a) | ज्यैष्ठे | ज्येष्ठे | ज्येष्ठे |
| 220 c) | चूडया | चूलया | चूडया |
| 237 c) | दिवारात्रम् | दिवारात्रौ | दिवारात्रम् |
| 238 d) | नवान्न | नवान्ना° | नवान्न |
| 265 c) | रमण्याटवी° | रमण्यटवी° | रमण्याटवी° |
| 281 c) | यद् धूर्तो | यद् धूर्तो | यद् भूमौ |
| 306 c) | होलडाया | होलाडाया | होलाडाया |
| 307 b) | गान्धारा ब्राह्मणाः | गान्धारब्राह्मणाः | गान्धारब्राह्मणा |
| 308 b) | नितान्तम् | निदानम् | निमित्तम् |
| 325 c) | बक. | एक | बकः |
| 327 cd) | तपात्यय° | तापात्यय° | तपात्यय° |
| 331 b) | भट्टाख्या | वट्टाख्या | भट्टाख्या |

| | St | D | V |
|---|---|---|---|
| 334 d) | दृशाद्यद्यापि | दृषद्यद्यापि | दृष्द्यद्यापि |
| 346 a) | क्षोणी | क्षौणी | क्षोणी |
| 350 c) | सूक्ष्माक्षतया | सूक्ष्माक्षितया | सूक्ष्माक्षतया |
| 364 a) | चिरं क्षुण्णे | चिरक्षुण्णे | चिरक्षुण्णे |
| 364 d) | पप्रये | प्रपये | पप्रये |
| 368 a) | °रामा° | °रामा | °रामा° |
| 369 d) | मन श्वभ्रे | महच्छ्वभ्रे | मनाक् श्वभ्रे |
| 370 d) | अभ्युत्सङ्ग | अभ्युत्सङ्गं | अभ्युत्सङ्गं |
| 371 a) | पर्यन्ता° | पर्यस्ता° | पर्यन्ता° |
| 371 b) | क्षिपत्सु | जहत्सु | क्षिपत्सु |
| 372 d) | नृपवनितानाम् | वलमबलानाम् | नृपवनितानाम् |

## Taranga II

| | St | D | V |
|---|---|---|---|
| 1 c) | विविध° | द्विविध° | द्विविध° |
| 1 d) | ललना° | लटभा° | लटभा° |
| 6 b) | इति स भ्रम° | स इति भ्रम° | इति स भ्रम° |
| 6 d) | विसवादि कद° | विसंवादकद° | विसंवादकद° |
| 15 b) | °तपोज्ज्वले | °तपोल्बणे | °तपोज्ज्वले |
| 15 c) | प्रभावेण | प्रभावेन | प्रभावेन |
| 20 c) | प्राकारो | प्रकारो | प्रकारो |
| 22 d) | लोको लक्ष्मी° | लोकोल्लक्ष्मी° | लोकोऽलक्ष्मी° |
| 37 c) | विश्वक् | विष्वक् | विष्वक् |
| 40 d) | वसन्ति | वसन्ति | न सन्ति |
| 60 c) | °योग्यता तत् | °योग्यतात्तु | °योग्यतात् तत् |
| 64 a) | अलोल° | आलोल° | अलोल° |
| 64 b) | °दुगूल° | °दुगूल° | °दुकूल° |
| 65 a) | उदन्तो | उदात्तो | उदन्तो |
| 65 c) | संधिमतिः | संविगति | संधिमति |
| 78 c) | °स्थिते | °स्थितेः | °स्थिते |
| 94 c) | प्रभावेण | प्रभावेन | प्रभावेन |
| 105 a) | °ष्टक भ्राम्य° | °ष्टक भ्राम्य° | °ष्टकभ्राम्य° |

| | St | D | V |
|---|---|---|---|
| 105 c) | योगेस्यः | योगिन्यः | योगिन्य· |
| 107 b) | °ज्ञाहृति | °ज्ञाहृति | °ज्ञहृति |
| 130 d) | पुण्डरीकाना | पुण्डरीकाणा | पुण्डरीकाणा |
| 136 b) | भक्तिविभूषितः | भक्तिविशेषित | भक्तिविभूपितः |
| 146 a) | अप्रात° | अपास्त° | अप्रात° |
| 147 a) | तत्र | युवा | युवा |
| 156 c) | निर्व्यूढम पि | निर्व्यूढमपि | निर्व्यूढावपि |
| 165 a) | निरुन्वन् | निरुन्वत् | निरुन्वन् |
| 167 a) | °सितातपा· | °मितातपाः | °मितातपा. |

## Taraṅga III

| | St | D | V |
|---|---|---|---|
| 8 d) | तदा | तथा | तथा |
| 9 a) | देश्यभिक्षूणा | चैष्यभिक्षूणा | देश्यभिक्षूणा |
| 10 a) | देशैकदेशात् | देश्यैकदेशात् | देश्यैकदेशात् |
| 10 d) | लोस्तोन्पा° | लो.स्तुन्पा° | लोस्तोन्पा° |
| 10 d) | °कार्यकृत् | °कार्यकृत् | °कार्यभूत् |
| 12 ab) | शिक्षाचार° | शिष्टाचार° | शिक्षाचार° |
| 12 d) | स्त्रिय | श्रियः | श्रिय |
| 14 a) | °सम्मा° | °मम्मा° | °सम्मा° |
| 20 a) | प्रभावेण | प्रभावेन | प्रभावन |
| 21 d) | कार्षकै | कार्षिकैः | कार्षकै |
| 28 c) | जनस्यापि | जनस्यापि | जिनस्यापि |
| 31 d) | हृतोहम् | हृतोयम् | हृतोऽयम् |
| 34 c) | एवं | एव | एव |
| 36 b) | एव | एव | एष |
| 61 d) | अहिसस्य | अहिसस्य | अहिंस्रस्य |
| 63 d) | धरणीवरः | धरणीधवः | धरणीधव |
| 66 a) | वदान्यः | वदन्यः | वदान्य· |
| 66 a) | संविभाग्येभ्यः | संविभागेभ्य | संविभाग्येभ्यः |
| 67 d) | परम् | अपरम् | अपरम् |

| | St | D | V |
|---|---|---|---|
| 76 d) | प्रापि | प्राप | प्राप |
| 81 a) | रुध्रादिभि | रुद्रादिभि | रुद्रादिभि |
| 88 d) | संप्रति° | स प्रति° | संप्रति° |
| 97 c) | आहु· | प्राहु | प्राहु |
| 100 c) | °मध्ये | °सख्ये | °सख्ये |
| 103 a) | बलाहतानां | भ्रात्राहताना | भ्रात्राहताना |
| 122 a) | उत्पादनासज्जे | उत्पादनात् सज्जे | उत्पादनासज्जे |
| 147 a) | एवं | एव | एव |
| 156 b) | सजनै | सजनैः | विजने |
| 165 a) | दध्या | दद्या | दद्या |
| 175 d) | अपृष्टो | अदृष्टो | अदृष्टो |
| 214 a) | उपायं यं | उपायं तं | उपायं यं |
| 215 d) | श्रमादायि | श्रमादायि | श्रमाधायि |
| 218 c) | बर्हिणो° | बर्हिणे° | बर्हिणे° |
| 220 c) | °करालम्भ | °करालम्ब | °करालम्ब |
| 225 b) | °नोकहशा° | °नौकहशा° | °नोकहशा° |
| 245 a) | अपरं | परं | परं |
| 257 c) | वैतृण्यम् | वैतृष्यम् | वैतृष्ण्यम् |
| 272 c) | °स्मृति | °स्मृते | °स्मृति |
| 276 c) | वदान्य | वदन्य | वदान्य |
| 280 c) | आगच्छत् | अगच्छत् | अगच्छत् |
| 291 c) | द्योततेनान्यथा किंचिद् | द्योतयेन्नान्यथा किं न | द्योतयेन्नान्यथा किं न |
| 303 d) | उपक्रिय | उपत्क्रिय | उपक्रिय |
| 307 c) | प्रति° | प्रति° | पाणि° |
| 317 d) | प्रकाश्यताम् | प्रकाशताम् | प्रकाश्यताम् |
| 321 b) | काश्मीरो° | कश्मीरो° | काश्मीरो° |
| 324 b) | अवनीवरान् | अवनीभृत | अवनीधरान् |
| 327 c) | °निष्पन्दै | °निष्यन्दै | °निष्यन्दैः |
| 335 d) | तालावचरणोचितम् | तालार्धचरणोचितम् | तालार्धचरणोचितम् |
| 347 d) | °बल | °बाल | °बल |

| | St | D | V |
|---|---|---|---|
| 357 a) | षटत्रिंशद्गृह° | षटत्रिशग्रह° | षटत्रिशद्ग्रह° |
| 362 b) | °बृहत्तु° | °वहत्तु° | °वहत्तु° |
| 405 d) | वर्मनिपातिन | वर्मणि पातिनः | वर्मणि पातिन |
| 414 b) | बद्ध्वा | बद्धा | वद्ध्वा |
| 439 c) | माहेश्वर | माहेश्वरे | माहेश्वर |
| 455 b) | राज्ञ्या | राज्ञा | राज्ञ्या |
| 455 c) | भक्तान् | भक्तै | भक्तैः |
| 458 d) | प्रवाद | प्रवचः | प्रवाद॰ |
| 462 d) | मार्तण्डम् | मार्ताण्डम् | मार्ताण्डम् |
| 467 b) | तपो | ततो | तपो |
| 469 d) | °भोगिताम् | °भागिताम् | °भागिताम् |
| 470 a) | एवं स | स एव | स एव |
| 480 a) | वङ्गालान् | वङ्गाला | वङ्गालान् |
| 489 a) | स रूप° | सरूप° | सरूप° |
| 492 c) | तु | स | स |
| 494 c) | कौर्वार° | कौबेर° | कौबेर° |
| 494 c) | स्वाम्य | साम्यम् | साम्यम् |
| 497 d) | सप्रायुज्यत | सप्रयुज्यत | सप्रायुज्यत |
| 509 b) | पुनः | मुने | पुनः |
| 511 b) | क्षुभ्यत् | क्षुभ्यन् | क्षुभ्यन् |
| 529 d) | °स्रग्वाम° | °स्रग्दाम° | °स्रग्दाम° |

## Taranga IV

| | St | D | V |
|---|---|---|---|
| 5 a) | °विशोककोटादौ | °विशोक कोटाद्रौ | °विशोककोटाद्रौ |
| 24 a) | तन्मा | तन्मा | तन्व्या |
| 34 a) | कीर्णा क° | कीर्णक° | कीर्णा क° |
| 36 c) | नर्तकीभूत्वा | नर्तकीभूता | नर्तकीभूता |
| 51 d) | भिनत्ति | छिनत्ति | छिनत्ति |
| 53 c) | वीतमन्देहा | वीतसन्देहा | वीतमन्देहा |

| | St | D | V |
|---|---|---|---|
| 56 d) | सूत्रापातं | सूत्रपातं | सूत्रपातं |
| 90 a) | नापुंश्चलेयो | नापौश्चलेयो | नापौंश्चलीयो |
| 96 c) | ब्राह्मणो | ब्राह्मणे | ब्राह्मणो |
| 97 d) | राजन्ननशनस्य मे | राजन्नपि न शस्यते | राजन्नपि न शस्यते |
| 104 a) | तदेष | तदेष | तदैष |
| 116 b) | कृत्याधायिनम् | कृत्याध्यायिनम् | कृत्याधायिनम् |
| 119 d) | °मण्डलं | °मण्डलीम् | °मण्डलीम् |
| 126 c) | प्रादेशिके° | प्रादेशके° | प्रादेशिके° |
| 132 d) | स्वकीर्त्यु° | स कीर्त्यु° | स कीर्त्यु° |
| 134 d) | प्रतापा° | प्रलया° | प्रतापा° |
| 139 a) | °विग्रहाशान्तैः | °विग्रहश्रान्तैः | °विग्रहाशान्तैः |
| 139 c) | अपेक्षतां | अपेक्षता | अपेक्षिता |
| 140 c) | तु | तु | च |
| 142 a) | °पीठं | °पीडा | °पीडा |
| 145 c) | आकालिका° | अशालिका° | आकालिका° |
| 150 b) | वैवस्वता° | वैवस्विता° | वैवस्वता° |
| 155 b) | नारिकेर° | नालिकेर° | नालिकेर° |
| 155 b) | °सुरोर्मयः | °रसोर्मय | °रसोर्मय |
| 159 a) | क्रमुकान्सप्त | क्रमुकस्यामान् | क्रमुकस्यामान् |
| 159 b) | कौङ्क° | कोङ्क° | कोङ्क° |
| 166 a) | तुःखारा. | भु खाराः | तु खाराः |
| 169 d) | प्रत्यूषार्कः | प्रत्यूषेऽर्कः | प्रत्यूषेऽर्कः |
| 171 c) | वनाप्लुष्टात् | बलप्लुष्टात् | वनप्लुष्टात् |
| 183 d) | कृतवान् | कृतवाक् | कृतवाक् |
| 191 a) | चक्रधरे | चक्रधरः | चक्रधरे |
| 192 c) | मार्त्तण्डस्य | मार्ताण्डस्य | मार्ताण्डस्य |
| 197 d) | रविः प्रभाः | रविप्रभाः | रविप्रभाः |
| 205 d) | पार्षदो | पार्थिवो | पार्षदो |
| 206 b) | परिकरान् | परिकरं | परिकरं |
| 211 a) | तुःखारः | भु खारः | तु खार |
| 213 a) | ललिता° | वल्लिभा° | ललिता° |

